# LALITOPAKHYANA

From the Uttarkhanda of Brahmandapurana.



EDITED BY

T. N. K. TIRUMULPAD B. A.

OF NILAMBUR.



PUBLISHED BY

PÂNDURANG JÂVAJÎ,

PROPRIETOR OF THE 'NIRNAYA-SÂGAR' PRESS.

BOMBAY.

1918.

*Price 1¼ Rupees.*

श्रीः ।

# ललितोपाख्यानम् ।

ब्रह्माण्डपुराणोत्तरखण्डान्तर्गतं

अध्यायाः ४० चत्वारिंशत् ।

इदं


टी. एन्. के. तिरुमुलपाड्

इत्येतैः संपाद्य संशोधितम् ।



मुम्बय्या

पाण्डुरङ्ग जावजी

इत्यनेन स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

---

शाक १८४०, सन १९१८.

मूल्यं १। सपादरूप्यकः ।

# प्रास्ताविकम्—



ब्रह्मोत्तरखण्डान्तर्गतस्यास्य ललितोपाख्यानस्याखिलश्रेयःसाधनेष्वभ्यर्हितत्वेन सर्वादरणीयत्वविषये किंचित्प्रस्तूयते—

इह लोके तावद्भगवत्सृष्टचतुर्विधभूतनिकायेष्वप्युच्चतमकोटिभाजि मानुषप्राणिवर्गेऽपि पुनस्तत्तत्प्रारब्धप्रवाहप्राप्ताधिकारनियतं नैकशोभेदभिन्नमपि चातुर्विध्यमेव श्रीमद्भगवद्गीतासूपनिषत्सु भगवता प्रतिपादितं विराजीति—

"चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥" इति ।

एवं निर्दिष्टचतुर्विधानां मध्येऽपि आर्तैरार्तिजनकवृजिनबीजनिबर्हणाय, जिज्ञासुभक्तैर्नितान्त-

निष्कामैरपि स्वस्वचित्तशुद्धये, अर्थार्थिभिर्भक्तैर्निजनिजेष्टार्थसिद्ध्यर्थं, ज्ञानिभिर्भक्तैरवाप्तप्रायाखिलकामैरत एव निष्कामैरपि "लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ।" इति भगवदाज्ञामनुसृत्य केवलं लोकसंग्रहार्थं चास्योपाख्यानस्य पाठप्रवचनादेर्जपानुष्ठानादेश्चावश्यकत्वाद्भजकतावच्छेदकशरीरघटकमस्यानुष्ठानमावश्यकमेव। श्रीमत्त्रिपुरसुन्दर्या जगन्मातुः श्रीललिताम्बायाः प्रसादसिद्ध्यर्थमस्यैवाराधनपरिशीलनादिकमास्तिकवरैरवश्यं विधेयं श्रेयोर्थिभिः, आप्तव्याश्चैहिका असाधारणजनस्यार्हाः अमुत्रच सुरस्यार्हाः कामाः, निष्कामैरनेकजनुःपरंपराहितपुण्यपुञ्जगमको मोक्षोऽपि शरणीकरणीय इति ।

एतत्प्रकाशनोद्युक्तैरस्माभिरेको मातृकाकोशश्चतुस्त्रिंशदध्यायात्मकः प्रायः शुद्धो लब्धः, अपरश्च

नातिशुद्धोऽपि चत्वारिंशदध्यायात्मको वाराणसी-स्थविद्वद्वर बाबुदीक्षित जडे इत्येतैः प्रहित इत्युभयकोशाकलनेन यथामति संशोध्य प्रकाशितमिदं ललितोपाख्यानं करुणापारावारपारीणैर्विद्वद्धुरीणैः शोधनीयं पुनर्मुद्रणावसरे शोधयेमहि वयमपीति निवेदयाम इति शम् ।

---

# श्रीललितोपाख्यानस्य

## विषयानुक्रमणिका ।



**इति श्रीललितोपाख्यानानुक्रमणी ।**

श्रीः ।

## ब्रह्माण्डपुराणोत्तरखण्डान्तर्गतं

# ललितोपाख्यानम् ।

### प्रथमोऽध्यायः ।

श्रीमत्त्रिपुरसुन्दर्यै ललिताम्बायै नमः ।

[अखिलमहीमण्डलं पर्यटतोऽगस्त्यस्य काञ्चीनगरे भगवता हयग्रीवेण समागमः ॥१॥ अगस्त्येन जगदुद्धारसाधनप्रश्ने हयग्रीवेण श्रीललिताम्बापरिचर्योपदेशः २]

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ (१) ॥

अस्तु वः श्रेयसे नित्यं वस्तु वामाङ्गमैश्वरम् ।
यतस्तृतीयो विदुषां तुरीयं तत्परं महः ॥ १ ॥

अगस्त्यो नाम देवर्षिर्वेदवेदाङ्गपारगः ।
सर्वसिद्धान्तसारज्ञो ब्रह्मानन्दोदयात्मकः ॥ २ ॥
चचाराद्भुतहेतूनि तीर्थान्यायतनानि च ।
शैलारण्यापगामुख्याः सर्वाञ्जनपदानपि ॥ ३ ॥
तेषु तेष्वखिलाञ्जन्तूनज्ञानतिमिरावृतान् ।
शिश्नोदरपरान्दृष्ट्वा चिन्तयामास तान्प्रति ॥ ४ ॥
चिरं चिन्तयमानस्य चरतो वसुधामिमाम् ।
प्राप्तमासीन्महापुण्यं काञ्चीनगरमद्भुतम् ॥ ५ ॥
तत्र वारणशैलेन्द्रमेकाम्रनिलयं शिवम् ।
कामाक्षीं कलिदोषघ्नीमपूजयदथात्मवान् ॥ ६ ॥
लोकहेतोरथार्द्रस्य चिन्तयानस्य धीमतः ।
चिरकालेन तपसा तोषितोऽभूज्जनार्दनः ॥ ७ ॥
हयग्रीवां तनुं कृत्वा साक्षाच्चिन्मात्रविग्रहाम् ।
शङ्खचक्राक्षवलयपुस्तकोज्ज्वलबाहुकाम् ॥ ८ ॥
पूरयित्रीं जगत्कृत्स्नं प्रभया देहजातया ।
प्रादुर्बभूव पुरतो मुनेरमिततेजसः ॥ ९ ॥
तं दृष्ट्वाऽनन्दभरितः प्रणम्य च मुहुर्मुहुः ।

विनयावनतो भूत्वा स तुष्टाव जगत्पतिम् ॥१०॥
अथोवाच जगन्नाथस्तुष्टोऽस्मि तपसा तव ।
वरं वरय भद्रं ते भविता भूसुरोत्तम ।
इति पृष्टो भगवता प्रोवाच द्विजसत्तमः ॥ ११ ॥
यदि तुष्टोऽसि भगवन्निमे पामरजन्तवः ।
केनोपायेन मुक्ताः स्युरेतन्मे वक्तुमर्हसि ।
इति पृष्टो द्विजेनाह देवदेवो जनार्दनः ॥ १२ ॥
एष एव पुरा प्रश्नः शिवेन कथितो मम ।
अयमेव कृतः प्रश्नो ब्रह्मणा च ततः परम् ॥१३॥
कृतो दुर्वाससा पश्चाद्भवता तु ततः परम् ।
भवद्भिः सर्वलोकानां गुरुभूतैर्महात्मभिः ॥ १४ ॥
ममोपदेशो लोकेषु प्रथितोऽस्तु वरान्मम ॥ १५ ॥
अहमादिर्हि भूतानामादिकर्ता स्वयं प्रभुः ।
सृष्टिस्थितिलयानां तु सर्वेषामपि कारकः ॥१६॥
त्रिमूर्तिस्त्रिगुणातीतो गुणहीनो गुणाश्रयः ।
इच्छाविहारी भूतात्मा प्रधानपुरुषात्मकः ॥१७॥
एवंभूतस्य मे ब्रह्मंस्त्रिजगद्रूपधारिणः ।

द्विधा कृतमभूद्रूपं प्रधानपुरुषात्मकम् ।
मम प्रधानं यद्रूपं सर्वभूतगुणात्मकम् ॥ १८ ॥
अपरं यद्गुणातीतं परात्परतरं महत् ।
एकमेवैतयोर्ज्ञात्वा मुच्यते ते उभे किमु ॥ १९ ॥
तपोभिश्चिरकालोत्थैर्यमैश्च नियमैरपि ।
त्यागैर्दुष्कर्मनाशान्ते मुक्तिराद्येन लभ्यते ॥ २० ॥
यद्रूपं यद्गुणयुतं तद्गुणैक्येन लभ्यते ।
अन्यत्सर्वं जगद्रूपं कर्मभोगपरात्मकम् ॥ २१ ॥
कर्मभिर्लभ्यते तच्च तत्त्यागेनापि लभ्यते ।
दुष्करस्तु तयोस्त्यागः सकलैरपि तापस ॥ २२ ॥
अनपायं च सुगमं सदसत्कर्मगोचरम् ।
आत्मस्थेन गुणेनैव सता वाप्यसतापि वा ।
आत्मैक्येनैव यज्ज्ञानं सर्वसिद्धिप्रदायकम् ॥२३॥
वर्णाश्रमविहीनानां पापिष्ठानां नृणामपि ।
यद्रूपध्यानमात्रेण दुष्कृतं सुकृतायते ॥ २४ ॥
येऽर्चयन्ति परां शक्तिं विधिनाऽविधिनापि वा ।
न ते संसारिणो नूनं मुक्ता एव न संशयः ॥२५॥

शिवोऽपि यां समाराध्य ध्यानयोगबलेन च ।
ईश्वरः सर्वसिद्धीनामर्धनारीश्वरोऽभवत् ।
अन्येऽब्जजमुखा देवाः सिद्धास्तद्ध्यानवैभवात् ॥
तस्मादशेषलोकानां त्रिपुराराधनं विना ।
न स्तो भोगापवर्गौ तु यौगपद्येन कुत्रचित् ॥२७
तस्मान्मन्त्रास्त्रसंयुक्तन्यासपूर्वक्रमेण च ।
तन्मनास्तद्गतप्राणस्तद्याजी तद्गतेहकः ।
तदात्म्यैक्येन कर्माणि कुर्वन्मुक्तिमवाप्स्यति ॥२८
एतद्रहस्यमाख्यातं सर्वेषां हितकाम्यया ।
संतुष्टेनैव भवतस्तपसा मुनिसत्तम ॥ २९ ॥
देवाश्च ऋषयः सिद्धा मनुष्याश्च तथेतरे ।
त्वन्मुखाम्भोजतो लब्ध्वा सिद्धिं यान्तु परात्पराम्
इति तद्वचनं श्रुत्वा हयग्रीवस्य शार्ङ्गिणः ।
प्रणिपत्य पुनर्वाक्यमुवाच मधुसूदनम् ॥ ३१ ॥
भगवन्कीदृशं रूपं भवता यत्पुरोदितम् ।
किंविहारं किंप्रभावमेतन्मे वक्तुमर्हसि ॥ ३२ ॥
हयग्रीवः ॥
एषोंऽशभूतो देवर्षिर्हयग्रीवो ममापरः ।

श्रोतुमिच्छसि यद्यत्त्वं तत्तत्तव वदाम्ययम् ॥ ३३॥
इत्यादिश्य जगन्नाथो हयग्रीवं तपोनिधिम् ।
पुरतः कुम्भजातस्य मुनेरन्तरधीयत ॥ ३४ ॥
ततस्तु विस्मयाविष्टो हृष्टरोमा तपोधनः ।
हयग्रीवेण मुनिना स्वाश्रमं प्रत्यपद्यत ॥ ३५ ॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

[हयग्रीवं प्रत्यगस्त्यकृतदेवीप्रादुर्भावादिप्रश्नः ॥]

अथोपवेशयित्वैनमासने परमाद्भुते ।
हयाननमुपागम्य ह्यगस्त्यो वाक्यमब्रवीत् ॥ १ ॥
भगवन्सर्वधर्मज्ञ सर्वसिद्धान्तवित्तम ।
लोकाभ्युदयहेतुर्हि दर्शनं तु भवादृशाम् ॥ २ ॥
आविर्भावं महादेव्यास्तस्या रूपान्तराणि च ।
विहाराणि च मुख्यानि तानि विस्तरतो वद ॥३॥
हयग्रीवः ॥
अनादिरखिलाधारा सदसत्कर्मरूपिणी ।

ध्यानैकदृश्या ज्ञानाङ्गी विद्याङ्गी हृदयास्पदा॥४॥
आत्मैक्याद्व्यक्तिमायाति चिरानुष्ठानगौरवात् ।
आदौ प्रादुरभूच्छक्तिर्ब्रह्मणो ध्यानयोगतः ॥५॥
प्रकृतिर्नाम सा ख्याता देवानामिष्टसिद्धिदा ।
द्वितीयमुदभूद्रूपं प्रवृत्तेऽमृतमन्थने ॥ ६ ॥
सर्वसंमोहजनकमवाङ्मनसगोचरम् ।
यद्दर्शनादभूदीशः सर्वज्ञोऽपि विमोहितः ॥ ७ ॥
विसृज्य पार्वतीं शीघ्रं तया रुद्रोऽप्यनुद्रुतः ।
तस्यां वै जनयामास शास्तारमसुरार्दनम् ॥ ८ ॥

अगस्त्यः ॥

कथं वै सर्वभूतेशो वशी मन्मथशासनः ।
अहो विमोहितो देव्या जनयामास चात्मजम्॥९

[इन्द्रं प्रति दुर्वासःशापः ॥]

हयग्रीवः ॥

पुराऽमरपुराधीशो विजयश्रीसमृद्धिमान् ।
त्रैलोक्यं पालयामास सदेवासुरमानुषम् ॥१०॥
कैलासशिखराकारं गजेन्द्रमधिरुह्य सः ।

चराचरादिलोकेषु पूज्यमानोऽखिलैरपि ॥ ११ ॥
तं प्रमत्तं विदित्वा तु भवानीपतिरव्ययः ।
दुर्वाससमथाहूय प्रजिघाय तदन्तिकम् ॥ १२ ॥
कन्थाजिनधरो दण्डी धूलिधूसरविग्रहः ।
उन्मत्तरूपधारी च ययौ विद्याधराध्वना ॥१३॥
एतस्मिन्नन्तरे काले काचिद्विद्याधराङ्गना ।
यदृच्छयागता तस्य पुरश्चारुतराकृतिः ॥ १४ ॥
चिरकालेन तपसा तोषयित्वा पराम्बिकाम् ।
तत्समर्पितमाल्यं च लब्ध्वा संतुष्टमानसा ॥१५॥
तां दृष्ट्वा मृगशावाक्षीमुवाच मुनिपुङ्गवः ।
कुत्र वा गम्यते भीरो कुतो लब्धमिदं त्वया ॥१६
प्रणम्य सा महात्मानमुवाच विनयान्विता ।
चिरेण तपसा ब्रह्मन्देव्या दत्तं प्रसन्नया ॥ १७ ॥
तच्छ्रुत्वा वचनं तस्यास्त्वपृच्छन्माल्यमुत्तमम् ।
पृष्टमात्रेण सा तुष्टा ददौ तस्मै महात्मने ॥ १८ ॥
कराभ्यां तत्समादाय कृतार्थोऽस्मीति सत्वरम् ।
दधौ स्वशिरसा भक्त्या तामुवाचातिहर्षितः ॥१९

ब्रह्मादीनामलभ्यं यत्तल्लब्धं भाग्यतो मया ।
भक्तिरस्तु पदाम्भोजे देव्यास्तव समुज्ज्वला ॥२०
भविष्यच्छोभनाकारा गच्छ सौम्ये यथासुखम् ।
सा तं प्रणम्य शिरसा ययौ तुष्टा यथागतम् २१
प्रेषयित्वा स तां भूयो ययौ विद्याधराध्वना ।
विद्याधरवधूभ्यश्च प्रतिजग्राह वल्लकीम् ॥ २२ ॥
दिव्यस्रगनुलेपांश्च दिव्यान्याभरणानि च ।
क्वचिद्वदन्क्वचिद्गृह्णन्क्वचिद्गायन्क्वचिद्धसन् ॥ २३॥
स्वेच्छाविहारी स मुनिर्ययौ यत्र पुरन्दरः ।
स्वकरस्थां ततो मालां शक्राय प्रददौ मुनिः ॥२४
तां गृहीत्वा गजस्कन्धे स्थापयामास देवराट् ।
गजस्तु तां गृहीत्वाथ पेषयामास भूतले ॥ २५॥
तां दृष्ट्वा पेषितां मालां क्रुद्धः कोपेन तापसः ।
उवाच न धृता माला शिरसा तु मयार्पिता॥२६
महादेव्या धृता माला ब्रह्माद्यैः पूज्यते हि सा ।
त्रैलोक्यैश्वर्यमत्तेन भवता त्ववमानिता ॥ २७ ॥
त्वया यच्छासितं लोकं सदेवासुरमानुषम् ।

अशोभितमतेजस्कं मम शापाद्भविष्यति ॥ २८ ॥
इति शप्त्वा विनीतेन तेन संपूजितोऽपि सः ।
तूष्णीमेव ययौ ब्रह्मन्भावि कार्यमनुस्मरन् ॥ २९ ॥
विजयश्रीश्च सा तस्य दैत्यलोकमथान्वगात् ।
नित्यश्रीर्नित्यपुरुषं वासुदेवमथान्वगात् ॥ ३० ॥
इन्द्रोऽपि स्वपुरं गत्वा सर्वदेवसमन्वितः ।
विषण्णचेता निःश्रीकश्चिन्तयामास देवराट् ॥ ३१
अथामरपुरे दृष्ट्वा निमित्तान्यशुभानि च ।
बृहस्पतिं समाहूय वाक्यं चेतदुवाच ह ॥ ३२ ॥

[इन्द्रबृहस्पत्योर्धर्माधर्मसंवादः ।]

भगवन्सर्वधर्मज्ञ त्रिकालज्ञानकोविद ।
दृश्यन्तेऽदृष्टपूर्वाणि निमित्तान्यशुभानि नः ।
किंफलानि च तानि स्युरुपायो वाथ कीदृशः ३३
इति तद्वचनं श्रुत्वा देवराजं बृहस्पतिः ।
प्रत्युवाच ततो वाक्यं धर्मार्थसहितं शुभम् ॥ ३४ ॥
कृतस्य कर्मणो राजन्कल्पकोटिशतैरपि ।
प्रायश्चित्तोपभोगाभ्यां विना नाशो न जायते ३५

देवराजः ॥

कर्म वा कीदृशं ब्रह्मन्प्रायश्चित्तं च कीदृशम्।
तत्सर्वं श्रोतुमिच्छामि तन्नो विस्तरतो वद ॥३६॥

बृहस्पतिः ॥

हननस्तेयहिंसाश्च पानमन्याङ्गनारतिः।
कर्म पञ्चविधं प्राहुर्दुष्कृतं धरणीतले ॥ ३७ ॥
ब्रह्मक्षत्रियविट्छूद्रगोतुरंगगजोष्ट्रकाः।
चतुष्पदोऽण्डजाब्जाश्च तिर्यञ्चोऽनस्थिकास्तथा ॥
अयुतं च सहस्रं च शतं दश तथा दश।
दशपञ्चत्रिरेकार्धमानुपूर्व्यादघं भवेत् ॥ ३९ ॥
ब्रह्मक्षत्रविशां स्त्रीणामुक्तार्थे पादमाचरेत्।
पितृमातृगुरुस्वामिपुत्राणां नास्ति निष्कृतिः।
गुर्वाज्ञया कृते पादं तदाज्ञोल्लङ्घनेऽर्धकम् ॥४०॥
दशब्राह्मणभृत्यर्थमेकं हन्याद्द्विजं नृपः।
शतब्राह्मणभृत्यर्थं ब्राह्मणो ब्राह्मणं तु वा ॥४१॥
पञ्चब्रह्मविदामर्थे वैश्यमेकं तु दण्डयेत्।
वैश्यो दशविशामर्थे विशं वा दण्डयेत्तथा ॥४२॥

तथा शतविशामर्थे द्विजमेकं तु दण्डयेत् ।
शूद्राणां तु सहस्रार्थे दण्डयेद्ब्राह्मणं तु वा ॥४३॥
तच्छतार्थे तु वा वैश्यं तद्दशार्थे तु शूद्रकम् ।
बन्धूनां चैव मित्राणामिष्टार्थे तु त्रिपादकम् ।
अर्धं कलत्रपुत्रार्थे स्वात्मार्थे तु न किंचन ॥४४॥
आत्मानं हन्तुमारब्धं ब्राह्मणं क्षत्रियं विशम् ।
गां वा तुरंगमन्यं वा हत्वा दोषैर्न लिप्यते॥४५॥
आत्मदारात्मजभ्रातृबन्धूनां तु द्विजोत्तम ।
क्रमाद्दशगुणो दोषो रक्षणे च तथा फलम्॥४६॥

देवद्विजश्रोत्रियवेदविद्व्रती
वेदान्तविद्वेदविदां विनाशे ।
एकद्विपञ्चशततद्दश चायुतं च
लक्षं च निष्कृतिरिति प्रवदन्ति तज्ज्ञाः॥४७॥
तेषां च रक्षणविधौ च कृतेऽपि दाने
पूर्वोदितोत्तरगुणं प्रवदन्ति पुण्यम् ।
तेषां च दर्शनविधौ नमने च कार्ये
शुश्रूषणे विचरतां सदृशं च पुण्यम् ॥ ४८ ॥

सिंहव्याघ्रमृगादीनि लोकहिंसाकराणि तु ।
नृपो हन्याच्च सततं देवार्थे ब्राह्मणार्थके ॥ ४९ ॥
आपत्स्वात्मार्थतो वापि हत्वा मेध्यानि भक्षयेत्॥५०
नात्मार्थं पाचयेदन्नं नात्मार्थं पाचयेत्पशून् ।
देवार्थे ब्राह्मणार्थे वा पचमानो न लिप्यते ॥५१॥
पुरा भगवती माया जगदुज्जीवनोन्मुखी ।
ससर्ज सर्वदेवांश्च सदेवासुरमानुपान् ॥ ५२ ॥
तेषां संरक्षणार्थाय पशूनपि चतुर्दश ।
यज्ञांश्च तद्विधानानि कृत्वा चैनानुवाच ह ॥५३॥
यजध्वं पशुभिर्देवान्विधिना चैव मानवाः ।
इष्टानि वः प्रदास्यन्ति तुष्टास्ते यज्ञभाविताः ॥५४॥
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
दरिद्रो नारकश्चैव भवेज्जन्मनि जन्मनि ॥ ५५ ॥
देवतार्थे च पित्रर्थे तथैवाभ्यागते गुरौ ।
महदागमने चैव हन्यान्मेध्यान्पशून् द्विजः॥५६॥
आपत्सु ब्राह्मणो मांसं मेध्यमश्नन्न दोषभाक् ।

---

१ 'नृपः' इति च पाठः ।

विहितानि तु कार्याणि प्रतिषिद्धानि वर्जयेत् ॥५७॥
पुराऽभूद्युवनाश्वस्य देवतानां महाक्रतौ ।
ममायमिति देवानां कलहः समजायत ॥ ५८ ॥
तथा विभज्य देवानां मनुष्यांश्च पशूनपि ।
विभज्यैकैकशः प्रादाद्ब्रह्मा लोकपितामहः ॥ ५९ ॥
ततस्तु परमा शक्तिर्भूतसंघसहायिनी ।
कुपिताभूत्ततो ब्रह्मा तामुवाच नयान्वितः ॥६०॥
ये विभक्तास्तु पशवो देवानां परमेश्वरि ।
ते सर्वे तावकाः सन्तु भूतानामपि तृप्तये ॥६१॥
इत्युक्त्वान्तर्दधे तेषां पुर एव पितामहः ।
तदुक्तेनैव विधिना चकार सुमहाक्रतून् ॥ ६२ ॥
इयाज च परां शक्तिं हत्वा मेध्यान्पशूनपि ।
तत्तद्विभागो वेदेषु प्रोक्तत्वादिह नोदितः ॥ ६३ ॥
स्त्रियः शूद्रास्तथा मांसमादद्युर्ब्राह्मणीं विना ।
आपत्सु ब्राह्मणी वापि भक्षयेद्गुर्वनुज्ञया ॥ ६४ ॥
शिवोद्भवमिदं पिण्डमत्यर्थं शिवतां गतम् ।
उद्बुध्यस्व पशो त्वं हि नाशिवस्त्वं शिवो ह्यसि६५

ईशः सर्वजगत्कर्ता प्रभवः प्रलयस्तथा ।
यतो विश्वाधिको रुद्रस्तेन रुद्रोऽसि वै पशो ॥६६॥
अनेन तुरगं गां वा गजोष्ट्रमहिषादिकम् ।
आत्मार्थं वा परार्थं वा हत्वा दोषैर्न लिप्यते॥६७॥
ग्रहानिष्टकरान्वापि नागाखुबलिवृश्चिकान् ।
एतद्गृहाश्रमस्थानां क्रियाफलमभीप्सताम् ॥ ६८ ॥
पशुयज्ञो न चान्येषामिष्टापूर्तिकरं भवेत् ।
जपहोमार्चनाद्यैश्च तेषामिष्टं हि सिध्यति[1] ॥६९॥

इन्द्रः ॥

भगवन्सर्वमाख्यातं हिंसाघस्य तु लक्षणम् ।
स्तेयस्य लक्षणं किं वा तन्मे विस्तरतो वद ॥ ७० ॥

बृहस्पतिः ॥

पापानामधिकं पापं हननं जीवजातिनाम् ।
एतस्मादधिकं पापं विश्वस्ते शरणागते ॥ ७१ ॥
विश्वास्य हत्वा पापिष्ठं शूद्रं वाप्यन्त्यजातिजम् ।
ब्रह्महत्याधिकं पापं तस्मान्नास्त्यस्य निष्कृतिः ७२

---

१ पुस्तकान्तरेऽत्र द्वितीयाध्यायसमाप्तिर्दृश्यते ।

ब्रह्मज्ञस्य दरिद्रस्य कृच्छ्रार्जितधनस्य च ।
बहुपुत्रकलत्रस्य तेन जीवितुमिच्छतः ।
तद्द्रव्यस्तेयदोषस्य प्रायश्चित्तं न विद्यते ॥ ७३ ॥
विश्वस्तद्रव्यहरणं तस्याप्यधिकमुच्यते ।
विश्वस्तो वाप्यविश्वस्तो न दरिद्रधनं हरेत् ॥ ७४ ॥
ततो देवद्विजादीनां हेमरत्नापहारकम् ।
यो हन्यादविचारेण सोऽश्वमेधफलं लभेत् ॥७५॥
गुरुदेवद्विजसुहृत्पुत्रेष्वात्मसुखेषु च ।
स्तेयादयः क्रमादेव दशोत्तरगुणं त्ववम् ॥ ७६ ॥
स्तेयं कृत्वा तु यो मूढः परस्त्रीभ्यः प्रयच्छति ।
वेश्यायै वा नटेभ्यो वा स भवेद्ब्राह्मणाधमः ७७
क्षत्रियाच्च विशः शूद्राद्ब्राह्मणादन्त्यजातिजात् ।
दशोत्तरगुणैः पापैर्लिप्यते धनहारकः ॥ ७८ ॥
अयुतांशात्सहस्रांशाच्छतांशाद्दशमांशतः ।
धनं हृत्वा तथा पापैर्लिप्यते नात्र संशयः ॥७९॥

[द्विजवर्मनामकिरातोपाख्यानम् ॥]

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।

रहस्यातिरहस्यं च सर्वपापप्रणाशनम् ॥ ८० ॥
पुरा काञ्चीपुरे जातो वज्राख्यो नाम चोरकः ।
तस्मिन्पुरवरे रम्ये सर्वैश्वर्यसमन्विताः ॥ ८१ ॥
सर्वे नीरोगिणो दान्ताः सुखिनो दययान्विताः ।
सर्वैश्वर्यसमृद्धेऽस्मिन्नगरे स तु तस्करः ॥ ८२ ॥
वज्रो बहुद्रव्यवतां गृहेषु धनतृष्णया ।
स्तोकं स्तोकं क्रमेणैव बहु द्रव्यमपाहरत् ॥ ८३ ॥
तदरण्येऽवटं कृत्वा स्थापयामास लोभतः ।
तद्गोपनशिलार्थाय तस्मिन्दूरं गते सति ॥ ८४ ॥
किरातः कश्चिदागम्य तद्दृष्ट्वा तु दशांशतः ।
जहाराविदितस्तेन काष्ठभारं वहन्ययौ ॥ ८५ ॥
सोऽपि तच्छिलयाच्छाद्य मृद्भिरापूर्य यत्नतः ।
पुनश्च तत्पुरं प्रायाद्वज्रोऽपि धनतृष्णया ॥ ८६ ॥
एवं बहुधनं हृत्वा निचिक्षेप महीतले ।
कीरातोऽपि गृहं प्राप्य बभाषे मुदितः प्रियाम् ८७
मया काष्ठं समाहर्तुं गच्छता पथि निर्जने ।
लब्धं धनमिदं भीरु समादत्स्व धनार्थिनि ॥८८॥

तच्छ्रुत्वा तत्समादाय निर्गयाभ्यन्तरे ततः ।
चिन्तयन्ती ततो वाक्यमिदं भर्तारमब्रवीत ॥८९॥
नित्यं संचरते विप्रो मामकानां गृहेषु यः ।
मां विलोक्येयमचिराद्बहुभाग्यवती भवेत् ।
चातुर्वर्ण्यासु नारीषु इयं चेद्राजवल्लभा ॥ ९० ॥
किंतु भिल्ले किराते च शैलूपे चान्त्यजातिजे ।
न तिष्ठते चिरं लक्ष्मीः शापाद्वल्मीकजन्मनः॥९१॥
तथापि बहुभाग्यानां पुण्यानामपि पात्रिणी ।
दृष्टपूर्वं तु तद्वाक्यं न कदाचिद्वृथा भवेत् ॥९२॥
अथवात्मप्रयासेन कृच्छ्राद्यल्लभ्यते धनम् ।
तदेव तिष्ठति चिरमन्यद्गच्छति कालतः ॥ ९३ ॥
स्वयमागतवित्तं तु धर्मार्थे विनियोजयेत् ।
कुरुष्व तेन तस्मात्त्वं वापीकूपादिकाः शुभाः॥९४॥
इति तद्वचनं श्रुत्वा भाविभाग्यप्रचोदितः ।
बहूदकयुतं देशं तत्र तत्र व्यलोकयत् ॥ ९५ ॥
निर्ममेऽथ महेन्द्रस्य प्राग्भागे विमलोदकम् ।
सुबहुद्रव्यसंसाध्यं तटाकं चाक्षयोदकम् ॥ ९६ ॥

दत्तेषु कर्मकारिभ्यो निखिलेषु धनेषु च ।
असंपूर्णं तु तत्कर्म दृष्ट्वा चिन्ताकुलोऽभवत् ॥ ९७ ॥
तं चोरं वज्रनामानमज्ञातोऽनुचराम्यहम् ।
तेनैव बहुधा क्षिप्तं धनं भूरि महीतले ।
स्तोकं स्तोकं हरिष्यामि तत्र तत्र धनं बहु ॥९८॥
इति निश्चित्य मनसा तेनाज्ञातस्तमन्वगात् ।
तथैवाहृत्य तद्द्रव्यं तेन सेतुमपूरयत् ॥ ९९ ॥
मध्येजलं कृतं तेन प्रासादमपि शार्ङ्गिणः ।
तत्तटाकमभूद्दिव्यमशोषितजलं महत् ॥ १०० ॥
सेतुमध्ये चकाराग्र्यं शंकरायतनं महत् ।
काननं च क्षयं नीतं बहुसत्वसमाकुलम् ॥ १०१ ॥
तेनाग्र्याणि महार्हाणि क्षेत्राण्यपि चकार सः ।
देवताभ्यो द्विजेभ्यश्च प्रादात्तानि विभज्य च१०२
ब्राह्मणांश्च समामन्त्र्य देवरातमुखान्बहून् ।
संतोष्य वस्त्रहेमाद्यैरिदं वचनमब्रवीत् ॥ १०३ ॥
क्व वाहं वीरदत्ताख्यः किरातः काष्ठविक्रयी ।
क्व वा महासेतुबन्धः क्व देवालयकल्पना ॥१०४॥

क्व वा क्षेत्राणि कृप्तानि ब्राह्मणायतनानि च ।
कृपयैव कृतं सर्वं भवतां भूसुरोत्तमाः ॥ १०५ ॥
प्रति गृह्य भवन्तो मे क्षेत्राण्यायतनानि च ।
कृतार्थं कुरुत क्षिप्रं मादृशां हि गतिर्द्विजाः १०६
प्रतिगृह्य तथैवैतद्देवरातमुखा द्विजाः ।
द्विजवर्मेति नामास्मै तस्यै शीलवतीति च ।
चक्रुः सन्तुष्टमनसो महात्मानो महौजसः॥१०७॥
तेषां संरक्षणार्थाय बन्धुभिः सहितो वशी ।
तत्रैव वसतिं चक्रे मुदितो भार्यया सह ॥ १०८॥
पुरोहिताभिधानेन देवरातपुरं त्विति ।
नाम चक्रे पुरस्यास्य तोपयन्नखिलान्द्विजान् १०९
ततः कालवशं प्राप्तो द्विजवर्माङ्गनासखः ।
यमस्य ब्रह्मणो विष्णोर्दूता रुद्रस्य चागताः ।
अन्योन्यमभवत्तेषां युद्धं देवासुरोपमम् ॥ ११० ॥
अत्रान्तरे समागत्य नारदो वाक्यमब्रवीत् ।
मा कुर्वन्तु मिथो युद्धं शृण्वन्तु वचनं मम ॥१११॥
अयं किरातश्चौर्येण सेतुबन्धं पुराऽकरोत् ।

वायुभूतश्चरेदेको यावद्द्रव्यवतो मृतिः ॥ ११२ ॥
स वहुभ्योऽहरद्द्रव्यं तेषां यावत्तथा मृतिः ॥११३॥
गतेष्वखिलदूतेषु श्रुत्वा नारदभाषितम् ।
चचार द्वादशाब्दं तु वायुभूतोऽन्तरिक्षगः॥११४॥
भार्या तस्याह स मुनिस्तव दोषो न किंचन ।
त्वया कृतेन पुण्येन ब्रह्मलोकमितो व्रज ॥ ११५॥
वायुभूतं पतिं दृष्ट्वा नेच्छन्ती ब्रह्ममन्दिरम् ।
निर्वेदं परमापन्ना मुनिमेनमभाषत ॥ ११६ ॥
अहं विना पतिं देव न गच्छेयं पितामहम् ।
इह स्थास्ये पतिर्यावत्स्वदेहं लभते पुनः ॥ ११७॥
ततस्तु या गतिस्तस्य तामेवानुचराम्यहम् ।
परिहारोऽथवा किंतु मया कार्यं तु तेन वा ११८
इति तस्या वचः श्रुत्वा प्रीतः प्राह तपोधनः ।
भोगार्थकं शरीरं तु पत्युः कर्मकरं तव ।
मम प्रभावाद्भविता परिहारं वदामि च ॥१२०॥
निराहारो महातीर्थे स्नात्वा नित्यं हि सांबकम् ।
पूजयित्वा शिवं भक्त्या भस्मोद्धूलितविग्रहः १२१

ध्यात्वा हृदि महेशानं शतरुद्रमनुं जपेत् ।
ब्रह्महा मुच्यते पापैरष्टोत्तरसहस्रतः ।
पापैरन्यैश्च सकलैर्मुच्यते नात्र संशयः ॥ १२२ ॥
इत्यादिश्य ददौ तस्यै रुद्राध्यायं तपोधनः ।
अनुगृह्येति तां नारीं तत्रैवान्तरधीयत ॥ १२३ ॥
भर्तुः प्रियार्थे संकल्प्य जजाप परमं मनुम् ।
विमुक्तः स्तेयदोषेण पूर्वदेहमवाप सः ॥ १२४ ॥
ततो वज्राभिधश्चोरः कालधर्ममुपागतः ।
अन्ये तद्द्रव्यवन्तोऽपि कालधर्ममुपागताः॥१२५॥
यमस्तु तान्समाहूय वाक्यमेतदुवाच ह ॥१२६॥
भवद्भिस्तु कृतं पापं दैवात्सुकृतमप्यभूत् ।
किमिच्छथ फलं भोक्तुं दुष्कृतस्य शुभस्य वा१२७
इति तस्य वचः श्रुत्वा प्रोचुर्वज्रादिकास्ततः ।
सुकृतस्य फलं त्वादौ पश्चात्पापस्य भुज्यते ॥१२८॥
पुनराह यमो यूयं पुत्रमित्रकलत्रकैः ।
एतस्यैव बलात्सर्वे त्रिदिवं गच्छत द्रुतम् ॥१२९॥
तेऽधिरुह्य विमानानि द्विजवर्माणमाश्रिताः ।

यथोचितफलोपेतास्त्रिदिवं जग्मुरञ्जसा ॥ १३० ॥
द्विजवर्माखिलाँल्लोकानतीत्य प्रमदासखः ।
गाणपत्यमनुप्राप्य कैलासेऽद्यापि मोदते ॥ १३१ ॥

इन्द्रः ॥

तारतम्यविभागं च कथयस्व महामते ।
सेतुबन्धादिकानां च पुण्यानां पुण्यवर्धन ॥ १३२ ॥

बृहस्पतिः ॥

पुण्यस्यार्धफलं प्राप द्विजवर्मा महायशाः ।
वज्रः प्राप तदर्धं तु तदर्धेन युताः परे ॥ १३३ ॥
मनोवाक्कायचेष्टाभिश्चतुर्धा क्रियते क्रिया ।
विनश्येत्तेन तेनैव कृतैस्तत्परिहारकैः ॥ १३४[1] ॥

[मद्यविभागे ग्राह्याग्राह्यविचारः ॥]

इन्द्रः ॥

आसवस्य तु किंरूपं को दोषः कश्च वा गुणः ।
अन्नदोषकरं किंतु तन्मे विस्तरतो वद ॥ १३५ ॥

---

1 पुस्तकान्तरेऽत्र तृतीयाध्यायसमाप्तिर्दृश्यते ।

बृहस्पतिः ॥

पैष्टिकं तालजं कैरं माधूकं गुडसंभवम् ।
क्रमान्न्यूनतरं पापं तदर्धार्धतरस्तथा ॥ १३६ ॥
वर्ज्यमाद्यं सदा सर्वैराद्ययुग्मं नृपस्त्यजेत् ।
तृतीयमपि वैश्यस्तु शूद्रोऽप्याद्यद्वयं तथा॥१३७॥
तृतीयादि त्रिवर्णानामासवं पेयमुच्यते ।
स्त्रीणामपि तृतीयादि पेयं स्याद्ब्राह्मणीं विना १३८
पतिहीना च कन्या च त्यजेदृतुमती तथा ॥१३९॥
अभर्तृसन्निधौ नारी मद्यं पिबति लोलुपा ।
उन्मादिनीति सा ख्याता तां त्यजेदन्त्यजामिव१४०
दशाष्टषट्चतस्रस्तु द्विजातीनामघं भवेत् ।
स्त्रीणामपि तदर्धं स्यात्पादं स्याद्भर्तृसंगमे॥१४१॥
मद्यं पीत्वा द्विजो मोहात्कृच्छ्रं चान्द्रायणं चरेत्।
जपेच्चायुतगायत्रीं जातवेदसमेव वा ।
अम्बिकाहृदयं वापि जपेच्छुद्धो भवेन्नरः॥१४२॥
क्षत्रियादित्रिवर्णानां द्विजादर्धार्धतः क्रमात् ।
स्त्रीणामर्धार्धकॢप्तिः स्यात्कारयेद्वा द्विजैरपि॥१४३॥

अन्तर्जले सहस्रं वा जपेच्छुद्धिमवाप्नुयात् ।
लक्ष्मीः सरस्वती गौरी चण्डिका त्रिपुराम्बिका ॥
भैरवो भैरवी काली महाशास्तां च मातरः ।
अन्याश्च शक्तयस्तासां पूजने मधु शस्यते ॥ १४५ ॥
ब्राह्मणस्तु विना तेन यजेद्वेदान्तपारगः ।
इतरे मधुना देवीमर्चयेयुः फलार्थिनः ॥ १४६ ॥
तन्निवेदितमश्नन्तस्तदनन्यास्तदात्मकाः ।
तासां प्रभावाद्गच्छन्ति निर्लेपास्ते परां गतिम् १४७
कृतस्याखिलपापस्य ज्ञानतोऽज्ञानतोऽपि वा ।
प्रायश्चित्तमिदं प्रोक्तं पराशक्तेः पदस्मृतिः ॥ १४८ ॥
अनभ्यर्च्य परां शक्तिं पिबेन्मद्यं तु योऽधमः ।
रौरवे नरकेऽब्दांस्तु निवसेद्बिन्दुसंख्यया ॥ १४९ ॥
भोगेच्छया यो मद्यं तु पिबते वृषलाधमः ।
द्विजो मोहान्नतु पिबेल्लोभाद्वा कामतोऽपि वा १५०
प्रायश्चित्तं नैवै वाच्यं शिलाग्निपतनादृते ।
अनुग्रहाच्च महतामनुतापाच्च कर्मणः ॥ १५१ ॥
अर्चनाच्च पराशक्तेर्यमैश्च नियमैरपि ।

चान्द्रायणेन कृच्छ्रेण दिनसंख्याकृतेन च ।
शुद्ध्यते ब्राह्मणो दोषाद्द्विगुणाद्बुद्धिपूर्वतः[1]॥१५२॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

[बृहस्पतिं प्रति इन्द्रकृतागम्यागमनतत्प्रायश्चि-
त्तादिप्रश्नः ॥]

इन्द्रः ॥

अगम्यागमनं किं वा को दोषः का च निष्कृतिः ।
एतन्मे मुनिशार्दूल विस्तराद्वक्तुमर्हसि ॥ १ ॥
अगम्यागमनं नाम मातृष्वसृगुरुस्त्रियः ।
मातुलस्य प्रिया चेति गत्वेमा नास्ति निष्कृतिः २
मातृसङ्गे तु यदघं तदेव स्वसृसंगमे ।
गुरुस्त्रीसंगमे तद्वद्गुरवो बहवः स्मृताः ॥ ३ ॥
ब्रह्मोपदेशमारभ्य यावद्वेदान्तदर्शनम् ।

---

१ पुस्तकान्तरेऽत्र चतुर्थाध्यायसमाप्तिर्दृश्यते ।

एकेन शिक्ष्यते येन स महागुरुरुच्यते ॥ ४ ॥
ब्रह्मोपदेशमेकत्र वेदशास्त्राण्यथैकतः ।
आचार्यः स तु विज्ञेयस्तथा नैकास्तु देशिकाः॥५॥
गुरोरात्मान्तमेव स्यादाचार्यस्य प्रियागमे ।
द्वादशाब्दं चरेत्कृच्छ्रमेकैके तु षडब्दतः ॥ ६ ॥
मातुलस्य प्रियां गत्वा षडब्दं कृच्छ्रमाचरेत्॥७॥
ब्राह्मणस्तु सजातीयां प्रमदां यदि गच्छति ।
त्रिरात्रोपोषितः शुद्धः प्राणायामशतं चरेत् ॥ ८ ॥
कुलटां तु सजातीयां द्विरात्राच्छुद्धिमृच्छति ।
पञ्चाहात्क्षत्रियां गत्वा सप्ताहाद्वैश्यजामपि ॥ ९ ॥
चक्रीकिरातकैवर्तकर्मकारादियोषितः ।
शुद्धः स्याद्द्वादशाहेन पराशक्त्यर्चनेन च ॥ १० ॥
अन्त्यजां ब्राह्मणो गत्वा प्रमादादब्दतः शुचिः ११
देवदासी ब्रह्मदासी स्वदासी शूद्रदासिका ।
दास्यश्चतुर्विधाः प्रोक्ता द्वे चाद्ये क्षत्रियासमे १२
अन्या वैश्याङ्गनातुल्या तदन्या हीनजातिवत् ।
आत्मदासीं द्विजो गच्छेदुक्तार्धं दोषमाप्नुयात् १३

स्वस्त्रियं पुष्पिणीं गत्वा प्राजापत्यं चरेद्व्रतम् ।
द्विगुणेन परां नारीं चतुर्भिः क्षत्रियाङ्गनाम् ॥ १४ ॥
अष्टभिर्वैश्यनारीं च शूद्रां षोडशभिस्तथा ।
द्वात्रिंशता संकरजां वेश्यां शूद्रामिवाचरेत् ।
प्रायश्चित्तं चरेदेवं नोचेत्स ब्राह्मणाधमः ॥ १५ ॥
रजस्वलां तु यो भार्यां मोहतो गन्तुमिच्छति ।
स्नात्वान्यवस्त्रसंयुक्त उक्तार्धेनैव शुद्ध्यति ॥ १६ ॥
उपोष्य दिनमामायं स्नात्वा देवीं प्रपूजयेत् ।
तथैवान्याङ्गनां गत्वा तदुक्तार्धं समाचरेत् ॥ १७ ॥
पित्रोरनुज्ञया कन्यां यो गच्छेद्विधिना विना ।
त्रिरात्रोपोषणाच्छुद्धिस्तामेवोद्वाहयेत्ततः ॥ १८ ॥
कन्यागन्ता तु योऽन्यस्मै दत्तां पश्चात्तु गच्छति ।
पित्रोरनुज्ञया सार्धं त्रिदिनेन विशुद्ध्यति ॥ १९ ॥
ज्ञातः पितृभ्यां यो मासं कन्याभावे तु गच्छति ।
अन्योढां तां ततो गत्वा प्राणायामशतेनतु ॥ २० ॥
एकेन संगतां ज्ञात्वा योऽन्यस्मै संप्रयच्छति ।
वृषलः स तु विज्ञेयः सर्वकर्मबहिष्कृतः ॥ २१ ॥

ज्ञातः पितृभ्यां यो गत्वा परोढां तद्विनाशने ।
विधवा जायते नेयं पूर्वगन्तारमाप्नुयान् ॥ २२ ॥
अनुग्रहाद्द्विजातीनामुद्वाहविधिना ततः ।
तया कर्माणि कुर्वीत श्रौतस्मार्तादिकानि च॥२३॥
आदावुद्वाहिता वापि तद्विनाशेऽन्यसंगता ।
भोगैकसाधना सा तु न योग्याखिलकर्मसु॥२४॥
पिपीलिकान्तं ब्रह्माद्यं जगत्स्थावरजंगमम् ।
पञ्चभूतात्मकं प्रोक्तं चतुर्वासनयान्वितम् ।
जन्माद्याहारमदननिद्राभीत्या च सर्वदा ॥ २५ ॥
आहारं न विना जन्तुराहारो मदनः स्मृतः ।
दुःसहो मदनस्तस्मात्सर्वेषां प्राणिनामपि ॥ २६॥
पुंनारीरूपवत्कृत्वा मदनेन स विश्वसृट् ।
प्रवृत्तिमकरोदादौ सृष्टिस्थितिलयात्मिकाम् ॥२७॥
तत्प्रवृत्त्या प्रवर्तन्ते तन्निवृत्त्याऽक्षयां गतिम् ।
प्रवृत्त्यापि तथा मुक्तिर्निवृत्त्या या समीरिता २८
तद्रहस्यं तथोपायं शृणु वक्ष्यामि सांप्रतम् ।
सर्वात्मको वासुदेवः पुरुषस्तु पुरातनः ॥ २९ ॥

इयं हि मूलप्रकृतिर्लक्ष्मीः सर्वजगत्प्रसूः ।
पञ्चपञ्चात्मतृप्त्यर्थं मथनं क्रियते तराम् ॥ ३० ॥
एतन्मन्त्रानुभावाभ्यां मथनं क्रियते यदि ।
तावुभौ पुण्यकर्माणौ न दोषो विद्यते तयोः॥३१॥
इयमम्बा जगद्धात्री पुरुषोऽहं सदाशिवः ।
पञ्चविंशतितत्त्वानां प्रीतये मथ्यतेऽधुना ॥३२॥
एतन्मन्त्रानुभावाभ्यां मथनं क्रियते यदि ।
तावुभौ पुण्यकर्माणौ न दोषो विद्यते तयोः॥३३॥
इदं च शृणु देवेन्द्र रहस्यं परमं महत् ।
सर्वेषामेव पापानां यौगपद्येन नाशनम् ॥ ३४ ॥
भक्तिश्रद्धासमायुक्तः स्नात्वान्तर्जलसंस्थितः ।
अष्टोत्तरसहस्रं तु जपेत्पञ्चदशाक्षरीम् ।
आराध्य च परां शक्तिं मुच्यते सर्वकिल्बिषैः ३५
तेन नश्यन्ति पापानि कल्पकोटिकृतान्यपि ।
सर्वापद्भ्यो विमुच्येत सर्वाभीष्टं च विन्दति[1] ३६

१ पुस्तकान्तरेऽत्र पञ्चमाध्यायसमाप्तिर्दृश्यते ।

[अभोज्यवस्तुविचारः ॥]

इन्द्रः ॥
भगवन्सर्वधर्मज्ञ सर्वभूतहिते रत ।
संयोगजस्य पापस्य विशेषं वक्तुमर्हसि ॥ ३७ ॥

बृहस्पतिः ॥
संयोगजं तु यत्पापं तच्चतुर्धा निगद्यते ॥ ३८ ॥
कर्ता प्रधानं सहकृन्निमित्तोऽनुमतः क्रमात् ।
क्रमाद्दशांशतोऽघं स्याच्छुद्धिः पूर्वोक्तमार्गतः ३९
मद्यं कलञ्जं निर्यासं छत्राकं गृञ्जनं तथा ।
लशुनं च कलिङ्गं च महाकोशातकी तथा ॥४०॥
बिम्बी लिङ्गी कैरवं च हस्तिनी शिग्रुबिम्बिका ।
औदुम्बरं च वार्ताकं कतकं बिल्वमारिका ॥४१॥
क्रमाद्दशगुणान्यूनमघमेषां विनिर्दिशेत् ।
ब्रुवग्रामाङ्गवेश्याङ्गवेश्योपायनविक्रयी ॥ ४२ ॥
सेवकः स्वपुरस्थश्च कुग्रामस्थोऽभिशस्तकः ।
वैद्यो वैखानसः शैवो नारीजीवोऽन्नविक्रयी॥४३॥
शस्त्रजीवी परिव्राट् च वैदिकाचारनिन्दकः ।

क्रमाद्दशगुणान्न्यूनमेषां पक्कोदने भवेत् ।
स्वतण्डुलं वा तैः कृप्तमुक्तार्धं पापमादिशेत् ॥४४॥
ब्रह्मक्षत्रविशां चैव सच्छूद्राणां यदोदनम् ।
तैलपक्कमदृष्टं च भुञ्जन्पादमघं भवेत् ॥ ४५ ॥
द्विजन्मदासीकृप्तं च तया दृष्टे तदर्धकम् ।
वेश्यायास्तु त्रिपादं स्यात्तया दृष्टे तदोदने ॥४६॥
शूद्रवत्स्यान्न गोपान्नं विना गव्यचतुष्टयम् ।
तैलाज्यगुडसंयुक्तं पक्कं वेश्यान्न दुष्यति ॥ ४७ ॥
वेश्यावद्ब्राह्मणी भ्रष्टा तया दृष्टे न किंचन ।
ध्रुवस्यान्नं द्विजो भुक्त्वा प्राणायामशतं जपेत् ४८
अथवान्तर्जले जप्त्वा त्रिपदां वा त्रिवारकम् ।
इदं विष्णुस्त्र्यम्बकं वा तथैवान्तर्जले जपेत् ॥४९॥
स्त्री भुक्त्वा तु ध्रुवस्यान्नमेकाद्यान्भोजयेद्द्विजान् ।
उपोष्य रजनीमेकां ततः पापाद्विशुद्ध्यति ॥५० ॥
अथवा प्रोक्षयेदन्नमब्लिङ्गैः पावमानिकैः ॥ ५१ ॥
अन्नसूक्तं जपित्वा तु भृगुर्वै वारुणीति च ।
ब्रह्मार्पणमितिश्लोकं जप्त्वा भुक्त्वा न दोषभाक् ॥

इदं विष्णुरिति मन्त्रेण सप्तवाराभिमन्त्रितम् ।
सोहंभावेन तद्ध्यात्वा भुक्त्वा दोषैर्न लिप्यते ५३
अथवा शङ्करं ध्यायेज्जप्त्वा वै त्र्यम्बकं तथा ।
सोहंभावेन तद्भुक्त्वा नान्नदोषैः प्रलिप्यते॥५४॥
एवमुक्तप्रकारेण प्रायश्चित्तं समाचरेत् ।
इदं रहस्यं देवेन्द्र शृणुष्व वचनं मम ॥ ५५ ॥
ध्यात्वा देवीं परां शक्तिं जप्त्वा पञ्चदशाक्षरीम् ।
तन्निवेदितबुद्ध्या[1] तु योऽश्नाति प्रत्यहं द्विजः ॥५६॥
नचास्य दोषजं किंचिन्न दारिद्र्यभयं तथा ।
न व्याधिजं भयं तस्य न च शत्रुभयं तथा ।
जपतो मुक्तिरेवास्य सदा सर्वत्र मङ्गलम् ॥५७॥
एतत्ते कथितं शक्र पापानामपि विस्तरम् ।
प्रायश्चित्तं तथा तेषां किमन्यच्छ्रोतुमिच्छसि५८[2]

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने तृतीयोऽध्यायः ॥ ३ ॥

१ "बुद्ध्यादौ" इति च पाठः ।
२ पुस्तकान्तरेऽत्र षष्ठाध्यायसमाप्तिर्दृश्यते

## चतुर्थोऽध्यायः ॥ ४ ॥

[इन्द्रेण बृहस्पतिंप्रति स्वीयदौर्भाग्यप्रतीकारप्रश्नः ॥]

इन्द्रः ॥

भगवन्सर्वधर्मज्ञ त्रिकालज्ञानवित्तम ।
दुष्कृतं च प्रतीकारं भवता सम्यगीरितम् ॥ १ ॥
केन कर्मविपाकेन ममापदियमागता ।
प्रायश्चित्तं च किं तस्य वदस्व वदतां वर ॥ २ ॥

बृहस्पतिः ॥

कश्यपस्य सुतो जज्ञे दित्यां दनुरिति स्मृतः ।
कन्या रूपवती नाम धात्रे तां प्रददौ पिता ॥३॥
तस्याः पुत्रस्ततो जातो विश्वरूपो महाद्युतिः ।
नारायणपरो नित्यं वेदवेदाङ्गपारगः ॥ ४ ॥
ततो दैत्येश्वरो वव्रे भृगुपुत्रं पुरोहितम् ।
भवानपि कृतो राज्ये देवानामपि वासवः ॥ ५॥
भवता सह देवैस्तु पौरोहित्यार्थमादरात् ।
प्रार्थितो विश्वरूपस्तु बभूव तपतां वरः ॥ ६ ॥
स्वस्रीयो दानवानां तु देवानां च पुरोहितः ।

नात्यर्थमकरोद्वैरं दैत्येष्वपि महातपाः ॥ ७ ॥
बभूवतुस्तुल्यबलौ तदा दैत्येन्द्रवासवौ ।
ततस्त्वं कुपितो राजन्स्वमन्त्रीयं दानवेशितुः ॥ ८ ॥
हन्तुमिच्छन्नगाश्चाशु तपसः साधनं वनम् ।
तमासनस्थं मुनिभिस्त्रिशृङ्गमिव पर्वतम् ॥ ९ ॥
त्रयीमुखरदिग्भागं ब्रह्मानन्दैकनिष्ठितम् ।
सर्वभूतहितं तं तु मत्वारेरनुकूलिनम् ॥ १० ॥
शिरांसि यौगपद्येन छिन्नान्यस्य त्वयैव तु ।
तेन पापेन संयुक्तः पीडितश्च मुहुर्मुहुः ॥ ११ ॥
ततो मेरुगुहां गत्वा बहून्यब्दानि संस्थितः ।
ततस्तस्य वधं श्रुत्वा धाता तु मुनिवाक्यतः ॥१२॥
पुत्रशोकेन संतप्तस्त्वां शशाप रुषान्वितः ।
निःश्रीको भवतु क्षिप्रं मम शापेन वासवः ॥ १३ ॥
अनायकास्ततो देवा विषण्णा दैत्यपीडिताः ।
गत्वा तु ब्रह्मसदनं नत्वा तद्वृत्तमूचिरे ॥ १४ ॥
ततस्तु चिन्तयामास तदघस्य प्रतिक्रियाम् ।
तस्य प्रतिक्रियां वेत्तुं न शशाकासभूस्तदा ॥१५॥

ततो देवैः परिवृतो नारायणमुपागमत् ।
नत्वा स्तुत्वा तु सर्वज्ञस्तद्वृत्तान्तं व्यजिज्ञपत् १६
विचिन्त्य सोऽपि बहुधा कृपया लोकनायकः ।
तदघं तु त्रिधा भित्त्वा त्रिपु स्थानेष्वथार्पयत् ॥ १७ ॥
स्त्रीपु भूम्यां च वृक्षेपु तेपामपि ददौ वरम् ।
सदा भर्तृसमायोगं पुत्रावाप्तिमृतुष्वपि ॥ १८ ॥
छिन्ने पुनर्भवत्वं च सर्वेपामपि शाखिनाम् ।
खातपूर्ति धरण्याश्च प्रददौ मधुसूदनः ॥ १९ ॥
तेष्वघं प्रबभूवाशु रजोनिर्यासमूपरम् ॥ २० ॥
निर्गतो गह्वरात्तस्मात्तदेन्द्रो देवनायकः ।
राज्यं श्रियं च संप्राप्तः प्रसादात्परमेष्ठिनः ॥ २१ ॥
तेनैव सान्त्वितो धाता जगाद च जनार्दनम् ।
मम शापो वृथा न स्यादस्तु कालान्तरे हरे ॥ २२ ॥
भगवांस्तद्वचः श्रुत्वा धातुस्त्वमिततेजसः ।
प्रहृष्टो भाविकार्यज्ञस्तूष्णीमेव तदा ययौ ॥ २३ ॥
एतावन्तमिमं कालं त्रिलोकीं पालयन्भवान् ।
ऐश्वर्यमदमत्तत्वात्कैलासाद्रिमपीडयत् ॥ २४ ॥

सर्वज्ञेन शिवेनाथ प्रेरितो भगवान्मुनिः ।
दुर्वासास्त्वन्मदभ्रंशं कर्तुकामः शशाप ह ॥२५॥
एकमेव फलं जातमुभयोः शापयोरपि ।
अधुना पश्य निःश्रीकं त्रैलोक्यं समजायत ॥ २६॥
न यज्ञाः संप्रवर्तन्ते न दानानि च वासव ।
न यमा नापि नियमा न तपांसि च कुत्रचित् २७
विप्राः सर्वेऽपि निःश्रीका लोभोपहतचेतसः ।
निःसत्वा धैर्यहीनाश्च नास्तिकाःप्रायशोऽभवन्२८
निरौषधिरसा भूमिर्निर्वीर्या जायतेतराम् ॥ २९॥
भास्करो धूसराकारश्चन्द्रमाः कान्तिवर्जितः ।
निस्तेजस्को हविर्भोक्ता मरुद्धूलिमयाकृतिः॥३०॥
न प्रसन्ना दिशां भागा नभो नैव च निर्मलम् ।
दुर्बला देवताः सर्वा विभान्त्यन्यादृशा इव ।
विनष्टप्रायमेवासीत्त्रैलोक्यं सचराचरम् ॥ ३१ ॥[१]

हयग्रीवः ॥

इत्थं कथयतोरेव बृहस्पतिमहेन्द्रयोः ।
मलकाद्या महादैत्या देवलोकं बबाधिरे ॥ ३२ ॥

---

१ पुस्तकान्तरे सप्तमाध्यायसमाप्तिरत्र दृश्यते ।

नन्दनोद्यानमखिलं चिच्छिदुर्बलगर्विताः ।
उद्यानपालकान्सर्वानायुधैः समताडयन् ॥ ३३ ॥
प्राकारमभिपात्यैव प्रविश्य नगरान्तरम् ।
मन्दिरस्थान्सुरान्सर्वानत्यर्थं पर्यपीडयन् ॥ ३४ ॥
आजह्रुरप्सरोरत्नान्यशेषाणि मदोद्धताः ।
ततो देवाः समस्ताश्च चक्रन्दुर्भृशबाधिताः ॥३५॥
तादृशं घोषमाकर्ण्य वासवः प्रोज्झितासनः ।
सर्वैरनुगतो देवैः पलायनपरोऽभवत् ॥ ३६ ॥
ब्राह्मं धाम समभ्येत्य विषण्णवदनो वृषा ।
यथावत्कथयामास निखिलं दैत्यचेष्टितम् ॥ ३७ ॥
विधातापि तदाकर्ण्य सर्वदेवसमन्वितम् ।
हृतश्रीकं हरिहयमालोक्यैतदुवाचह ॥ ३८ ॥
इन्द्र त्वमखिलैर्देवैर्मुकुन्दं शरणं व्रज ।
दैत्यारातिर्जगत्कर्ता स ते श्रेयो विधास्यति ॥३९॥
इत्युक्त्वा तेन सहितः स्वयं ब्रह्मा पितामहः ।
समस्तदेवसहितः क्षीरोदधिमुपाययौ ॥ ४० ॥
अथ ब्रह्मादयो देवा भगवन्तं जनार्दनम् ।

तुष्टुवुर्वाग्भिरिष्टाभिः सर्वलोकमहेश्वरम् ॥ ४१ ॥
अथ प्रसन्नो भगवान्वासुदेवः सनातनः ।
जगाद सकलान्देवाञ्जगद्रक्षणलम्पटः ॥ ४२ ॥

[ समुद्रमथनप्रस्तावः ]

श्रीभगवान् ॥

भवतां संविधास्यामि तेजसैवोपबृंहणम् ।
यदुच्यते मयेदानीं युष्माभिस्तद्विधीयताम् ॥४३॥
ओषधिप्रवराः सर्वाः क्षिपत क्षीरसागरे ।
असुरैः सह संधाय तथा मे वचसेरिताः ॥४४॥
मन्थानं मन्दरं कृत्वा योक्त्रं कृत्वा च वासुकिम् ।
मयि स्थिते सहाये तु मथ्यताममृतं सुराः ॥४५॥
समस्तदानवाश्चापि वक्तव्याः सान्त्वपूर्वकम् ।
सामान्यमेव युष्माकमस्माकं च फलं त्विति॥४६॥
मथ्यमाने तु दुग्धाब्धौ सम्यगुत्पद्यते सुधा ।
तत्पानाद्बलिनो यूयममर्त्याश्च भविष्यथ ॥ ४७ ॥
यथा दैत्यास्तु पीयूषं नैतत्प्राप्स्यन्ति किंचन ।
केवलं क्लेशवन्तश्च करिष्यामि तथाप्यहम् ॥ ४८ ॥

इति श्रीवासुदेवेन कथिता निखिलाः सुराः ।
सन्धानं सकलैर्दैत्यैः कृतवन्तस्तपोधन ॥ ४९ ॥
नानाविधौषधिगणं समानीय सुरासुराः ।
क्षीराब्धिपयसि क्षिप्त्वा चन्द्रिकाधिकनिर्मले ५०
मन्थानं मन्दरं कृत्वा कृत्वा योक्त्रं च वासुकिम् ।
प्रारेभिरे प्रयत्नेन मथितुं परमामृतम् ॥ ५१ ॥
वासुकेः पुच्छभागे तु सहिताः सर्वदेवताः ।
पूर्वभागे तु दैतेया नियुक्तास्तत्र शौरिणा ॥ ५२ ॥
बलवन्तोऽपि दैत्यास्तन्मुखोत्थविषपावकैः ।
निर्दग्धवपुषः सर्वे निस्तेजस्कास्तदाभवन् ॥ ५३ ॥
पुच्छभागे तु कर्षन्तो मुहुराप्यायिताः सुराः ।
अनुकूलेन वातेन कृष्णेन प्रेरितेन ते ॥ ५४ ॥
आदिकूर्माकृतिः श्रीमान्मध्ये क्षीरपयोनिधेः ।
भ्रमतो मन्दराद्रेस्तु तस्याधिष्ठानतामगात् ॥५५॥
मध्ये च सर्वदेवानां रूपेणान्येन माधवः ।
चकर्ष वासुकिं वेगाद्दैत्यमध्ये परेण च ॥ ५६ ॥
ब्रह्मरूपेण तं शैलमुपर्याक्रान्तवान्हरिः ।

अपरेण च देवर्षे महता तेजसा मुहुः ॥ ५७ ॥
उपबृंहितवान्देवान्येन ते बलशालिनः ।
तेजसा पुनरन्येन बलात्कारसहेन सः ॥ ५८ ॥
उपबृंहितवान्नागं सर्वशक्तिर्जनार्दनः ॥ ५९ ॥
मथ्यमाने ततस्तस्मिन्क्षीराब्धौ देवदानवैः ।
किमेतदिति सिद्धानां दिवि चिन्तयतां तदा ॥६०॥
उत्थिता वारुणी देवी मदालोलविलोचना ।
असुराणां पुरस्तात्सा वर्धमाना व्यतिष्ठत ॥ ६१ ॥
जगृहुर्नैव तां दैत्या असुराश्चाभवंस्ततः ।
सुरा न विद्यते येषां त एवासुरशब्दिताः ॥६२॥
अथ सा सर्वदेवानामग्रतः समतिष्ठत ।
जगृहुस्तां मुदा देवाः सूचिताः परमेष्ठिना ॥ ६३ ॥
सुराग्रहणतो ह्येते देवाः प्राप्ताः सुराभिधाम् ।
आविर्बभूव पुरतः सुरभिः सुरपूजिता ॥ ६४ ॥
मुदं जग्मुस्तदा देवा दैतेयाश्च तपोधन ।
मथ्यमाने पुनस्तस्मिन्क्षीराब्धौ देवदानवैः ॥६५॥
अत्यर्थसुन्दराकारा धीराश्चाप्सरसां गणाः ।

आविर्भूताश्च देवेषु सर्वलोकमनोहराः ॥ ६६ ॥
मथ्यमाने ततो भूयः पारिजातो महाद्रुमः ।
आविरासीत्स्वगन्धेन परितो वासयञ्जगत् ॥६७॥
ततः शीतांशुरुद्भूतस्तं जग्राह महेश्वरः ।
विषजातं तदुत्पन्नं जगृहुर्नागजातयः ॥ ६८ ॥
कौस्तुभाख्यं महारत्नमाददे तज्जनार्दनः ॥ ६९ ॥
ततः स्वपत्रगन्धेन मदयन्ती महौषधिः ।
विजया नाम संजज्ञे भैरवस्तामुपाददे ॥ ७० ॥
ततो दिव्याम्बरधरो देवो धन्वन्तरिः स्वयम् ।
समुत्थितः करे बिभ्रदमृताढ्यं कमण्डलुम् ॥७१॥
ततः प्रहृष्टमनसो देवा दैत्याश्च सर्वशः ।
मुनयश्चाभवंस्तुष्टास्तदानीं तपसां निधे ॥ ७२ ॥

[ क्षीराब्धेः श्रियः प्रादुर्भावः ॥]

ततो विकसिताम्भोजवासिनी वरदायिनी ।
उत्थिता पद्महस्ता श्रीस्तस्मात्क्षीरमहार्णवात् ॥७३
अथ तां मुनयः सर्वे श्रीसूक्तेन श्रियं पराम् ।
तुष्टुवुस्तुष्टहृदया गन्धर्वाश्च जगुः पुरः ॥ ७४ ॥

विश्वाचीप्रमुखाः सर्वे ननृतुश्चाप्सरोगणाः ।
गङ्गाद्याः पुण्यनद्यश्च स्नानार्थमुपतस्थिरे ॥ ७५ ॥
अष्टौ दिग्दन्तिनश्चैव हेमपात्रस्थितं जलम् ।
आदाय स्नापयाञ्चक्रुस्तां श्रियं पद्मवासिनीम् ७६
तुलसी च समुत्पन्ना पदार्हा नैकजा हरेः ।
पद्ममालां ददौ तस्यै मूर्तिमान् क्षीरसागरः॥७७॥
भूषणानि च दिव्यानि विश्वकर्मा समर्पयत्॥७८॥
दिव्यमाल्याम्बरधरा दिव्यभूषणभूषिता ।
ययौ वक्षःस्थलं विष्णोः सर्वेषां पश्यतां रमा ७९
तुलसी सा धृता तेन विष्णुना प्रभविष्णुना ।
पश्यति स्म च सा देवी विष्णुवक्षःस्थलालया ।
देवान्दयार्द्रया दृष्ट्या सर्वलोकमहेश्वरी ॥ ८० ॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने क्षीरार्णवमथनकथनं नाम
चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

[ श्रीविष्णोर्मोहिनीरूपेणावतारः ॥ ]

हयग्रीवः ॥

अथ देवा महेन्द्राद्या विष्णुना प्रभविष्णुना ।
अङ्गीकृता महाधीराः प्रमोदं परमं ययुः ॥ १ ॥
मलकाद्यास्तु ते दैत्याः सर्वे विष्णुपराङ्मुखाः ।
सन्त्यक्ताश्च श्रिया देव्या भृशमुद्वेगमागताः ॥२॥
ततो जगृहिरे दैत्या धन्वन्तरिकरस्थितम् ।
परमामृतसाराढ्यं कलशं कलशोद्भव ॥ ३ ॥
अथासुराणां देवानामन्योन्यं कलहोऽभवत् ॥४॥
एतस्मिन्नन्तरे विष्णुः सर्वलोकैकरक्षकः ।
सम्यगाराधयामास ललितां स्वैकरूपिणीम् ॥ ५ ॥
सुराणां चासुराणां च रणं वीक्ष्य सुदारुणम् ।
ब्रह्मा निजपदं प्राप शम्भुः कैलासमास्थितः ॥ ६ ॥
मलकं योधयामास दैत्यानामधिपो वृषा ।
असुरैश्च सुराः सर्वे साम्परायमकुर्वत ॥ ७ ॥
भगवानपि योगीन्द्रः समाराध्य महेश्वरीम् ।

तदेकध्यानयोगेन तद्रूपः समजायत ॥ ८ ॥
सर्वसंमोहिनी सा तु साक्षाच्छृङ्गारनायिका ।
सर्वशृङ्गारवेषाढ्या सर्वाभरणभूषिता ॥ ९ ॥
सुराणामसुराणां च निवार्य रणमद्भुतम् ।
मन्दस्मितेन दैतेयान्मोहयन्ती जगाद ह ॥ १० ॥
अलं युद्धेन किं शस्त्रैर्मर्मस्थानविभेदिभिः ।
निष्ठुरैः किं वृथालापैः कण्ठशोषणहेतुभिः ॥११॥
अहमेवात्र मध्यस्था युष्माकं च दिवौकसाम् ।
यूयं चामी च नितरामत्र हि क्लेशभागिनः॥ १२ ॥
सर्वेषां सममेवाद्य दास्याम्यमृतमद्भुतम् ।
मम हस्ते प्रदातव्यं सुधापात्रमनुत्तमम् ॥ १३ ॥
इति तस्या वचः श्रुत्वा दैत्यास्तद्वाक्यमोहिताः ।
पीयूषकलशं तस्यै ददुस्ते मुग्धचेतसः ॥ १४ ॥
तत्पात्रं सा समादाय जगन्मोहनरूपिणी ।
सुराणामसुराणां च पृथक्पङ्क्तिं चकार ह ॥ १५ ॥
द्वयोः पंक्त्योश्च मध्यस्था तानुवाच सुरासुरान् ।
तूष्णीं भवन्तु सर्वेऽपि क्रमशो दीयतेऽमृतम्॥१६॥

तद्वाक्यमुररीचक्रुस्ते सर्वे समवायिनः ।
सा च संमोहिताशेषलोका दातुं प्रचक्रमे ॥ १७ ॥
कनत्कनकदर्वीका क्वणन्मङ्गलकङ्कणा ।
कमनीयविभूषाढ्या कला सा परमाद्भुता ॥१८॥
वामा वामकराम्भोजे सुधाकलशमुज्ज्वलम् ।
दधाना देवतापंक्तौ पूर्वं दर्व्या तथा दिशत् ॥१९॥
दिशन्ती क्रमशस्तत्र चन्द्रभास्करसूचितम् ।
दर्वीमुखेन चिच्छेद सैंहिकेयं तु मध्यगम् ॥ २० ॥
पीतामृतशिरोमात्रं तस्य व्योम जगाम च ।
तद्दृष्ट्वाप्यसुरास्तत्र तूष्णीमासत मोहिताः ॥२१॥
एवं क्रमेण तत्सर्वं विबुधेभ्यो वितीर्य सा ।
असुराणां पुरः पात्रं सा निधाय तिरोदधे ॥ २२ ॥
रिक्तपात्रं तु तद्दृष्ट्वा सर्वे दैतेयदानवाः ।
उद्वेलं केवलं क्रोधं प्राप्ता युद्धचिकीर्षया ॥ २३ ॥
इन्द्रादयः सुराः सर्वे सुधापानाद्बलोत्तराः ।
दुर्बलैरसुरैः सार्धं समयुध्यन्त सायुधाः॥ २४ ॥
ते वध्यमानाः शतशो दानवेन्द्राः सुरोत्तमैः ।

दिगन्तान्कतिचिज्जग्मुः पातालं कतिचिद्ययुः २५
दैत्यं मलयनामानं विजित्य विबुधेश्वरः ।
आत्मीयां श्रियमाजह्रे श्रीकटाक्षसमीक्षितः ॥२६॥
पुनः सिंहासनं प्राप्य महेन्द्रः सुरसेवितः ।
त्रैलोक्यं पालयामास पूर्ववत्पूर्वदेवजित् ॥ २७ ॥
निर्भया निखिला देवास्त्रैलोक्ये सचराचरे ।
यथाकामं चरन्ति स्म सर्वदा हृष्टचेतसः ॥ २८॥

[ नारदेन कैलासंगत्वा शंकराय मोहिन्याः सौन्दर्यातिशयवर्णनम्, शंकरेण तद्दर्शनाय विष्णुलोकगमनम् ॥ ]

तदा तदखिलं दृष्ट्वा मोहिनीचरितं मुनिः ।
विस्मितः कामचारी तु कैलासं नारदो गतः॥२९॥
नन्दिना च कृतानुज्ञः प्रणम्य परमेश्वरम् ।
तेन संभाव्यमानोऽसौ तुष्टो विष्टरमासत ॥ ३० ॥
आसनस्थं महादेवो मुनिं स्वेच्छाविहारिणम् ।
पप्रच्छ पार्वतीजानिरच्छस्फटिकसन्निभः ॥३१॥
भगवन्सर्ववृत्तज्ञ पवित्रीकृतविष्टप ।

कलहप्रिय देवर्षे किं वृत्तं तत्र नाकिनाम ॥ ३२ ॥
सुराणामसुराणां वा विजयः समजायत ।
किंवाप्यद्भुतवृत्तान्तं विष्णुना वापि किं कृतम् ३३
इति पृष्टो महेशेन नारदो मुनिसत्तमः ।
उवाच विस्मयाविष्टः प्रसन्नवदनेक्षणः ॥ ३४ ॥
सर्वं जानासि भगवन्सर्वज्ञोऽसि यतस्ततः ।
तथापि परिपृष्टेन मया तद्वक्ष्यतेऽधुना ॥ ३५ ॥
तत्तादृशे च समरे सति दैत्यदिवौकसाम् ।
आदिनारायणः श्रीमान्मोहिनीरूपमाददे ॥ ३६ ॥
तामुदारविभूषाढ्यां मूर्तां शृङ्गारदेवताम् ।
सुरासुराः समालोक्य विरताः समरोद्यमात् ३७
तन्मायामोहिता दैत्याः सुधापात्रं च याचिताः ।
कृत्वा तामेव मध्यस्थामर्पयामासुरञ्जसा ॥ ३८ ॥
तदा देवी तदादाय मन्दस्मितमनोहरा ।
देवेभ्य एव पीयूषमशेषं विततार सा ॥ ३९ ॥
तिरोहितामदृष्ट्वा तां दृष्ट्वा शून्यं च पात्रकम् ।
ज्वलन्मन्युमुखा दैत्या युद्धाय पुनरुत्थिताः ४०

अमरैरमृतास्वादादत्यद्भुतपराक्रमैः ।
पराजिता महादैत्या नष्टाः पातालमभ्ययुः ॥४१॥
इमं वृत्तान्तमाकर्ण्य भवानीपतिरव्ययः ।
पार्वतीसहितो विष्णुमाजगाम सविस्मयः ॥४२॥
क्षीरोदतीरगं दृष्ट्वा सस्त्रीकं वृषवाहनम् ।
भोगिभोगासनाद्विष्णुः समुत्थाय समागतः ॥४३
सस्नेहं गाढमालिङ्ग्य भवानीपतिमच्युतः ।
तदागमनकार्यं च पृष्टवान्विष्टरश्रवाः ॥ ४४ ॥
तमुवाच महादेवो भगवान्पुरुषोत्तमम् ।
महायोगीश्वरः श्रीमान् सर्वसौभाग्यसुन्दरः ॥४५
सर्वसंमोहजनकमवाङ्मनसगोचरम् ।
यद्रूपं भवतोपात्तं तन्मह्यं संप्रदर्शय ॥ ४६ ॥
द्रष्टुमिच्छामि ते रूपं शृङ्गारस्याधिदैवतम् ।
अवश्यं दर्शनीयं मे त्वं हि प्रार्थितकामधुक् ॥४७॥
इति संप्रार्थितः शश्वन्महादेवेन तेन सः ।
तस्यान्तिके तिरोधत्त महायोगीश्वरो हरिः ॥४८॥
शर्वोऽपि सर्वतश्चक्षुर्मुहुर्व्यापारयन्क्वचित् ।

अदृष्टपूर्वमाराममभिराम व्यलोकयन ॥ ४९ ॥
विकसत्कुसुमश्रेणीविनोदिमधुपालिकम् ।
चम्पकस्तवकामोदसुरभीकृतदिक्तटम् ॥ ५० ॥
माकन्दवृन्दमाध्वीकमाद्यदुल्लोलकोकिलम ।
अशोकमण्डलीकाण्डसताण्डवशिखण्डिकम् ॥५१
भृङ्गालिरवझंकारजितवल्लकिनिःस्वनम ।
पाटलोदारसौभाग्यपाटलीकुसुमोज्वलम् ॥ ५२ ॥
तमालतालहिन्तालकृतमालविकासितम् ।
पर्यन्तदीर्घिकादीर्घपङ्कजश्रीपरिष्कृतम् ॥ ५३ ॥
वातपोतचलच्चारुपल्लवोत्फुल्लपुष्पकम् ।
सन्तानप्रसवामोदसन्तानाधिकवासितम् ॥ ५४ ॥
तत्र सर्वर्तुपुष्पाढ्ये सर्वलोकमनोहरे ।
पारिजाततरोर्मूले कान्ता काचिददृश्यत ॥ ५५ ॥
बालार्कपाटलाकारा नवयौवनदर्पिता ।
उत्कृष्टपद्मरागाभचरणाब्जनखच्छटा ॥ ५६ ॥
यावकश्रीनिर्व्यपेक्षपादलौहित्यवाहिनी ।
कलनिस्वनमञ्जीरकणत्किङ्किणिमण्डिता ॥ ५७ ॥

अनङ्गवीरतूणीरदर्पोन्मथनजङ्घिका ।
करिशुण्डालकदलीकान्तितुल्योरुशोभिनी ॥५८॥
अरुणेन दुकूलेन सुस्पर्शेन तनीयसा ।
अलंकृतनितम्बाढ्या जघनाभोगभासुरा ॥ ५९ ॥
नवमाणिक्यसन्नद्धहेमकाञ्चीविराजिता ।
नतनाभिमहावर्तत्रिवल्यूर्मिप्रभाझरी ॥ ६० ॥
स्तनकुड्मलकान्दोलन्मुक्तादामशतावृता ।
अतिपीवरवक्षोजभारभङ्गुरमध्यभूः ॥ ६१ ॥
शिरीपकोमलभुजा कङ्कणाङ्गदशालिनी ।
सोर्मिकाङ्गुलिरुन्मृष्टशङ्खसुन्दरकन्धरा ॥ ६२ ॥
मुखदर्पणवृन्ताभचुबुका पाटलाधरा ।
कुन्दकुड्मलसच्छायदन्तदर्शितचन्द्रिका ॥ ६३ ॥
स्थूलमौक्तिकसन्नद्धनासाभरणभासुरा ।
केतकान्तर्दलद्रोणीदीर्घदीर्घविलोचना ॥ ६४ ॥
अर्धेन्दुतुलिता फाले सम्यक्कृप्तालकच्छदा ।
वालीवतंसमाणिक्यकुण्डलामण्डितश्रुतिः ॥ ६५ ॥
नवकर्पूरकस्तूरीसदामोदितवीटिका ।

स्फुरत्कस्तूरितिलका नीलकुन्तलसंहतिः ॥ ६६ ॥
सीमन्तरेखाविन्यस्तसिन्दूरश्रेणिभासुरा ।
स्फुरच्चन्द्रकलोत्तंसा मदालोलविलोचना ।
सर्वशृङ्गारवेषाढ्या सर्वाभरणभूषिता ॥ ६७ ॥
तामिमां कन्दुकक्रीडापरामालोलभूषणाम् ।
दृष्ट्वा क्षिप्रमुमां त्यक्त्वा सोऽन्वधावद्धेश्वरः ॥६८
गृहीत्वा कथमप्येनामालिलिङ्ग मुहुर्मुहुः ।
उद्धूयोद्धूय साप्येनं धावति स्म सुदूरतः ॥ ६९ ॥
पुनर्गृहीत्वा तामीशः कामं कामवशीकृतः ।
आश्लिष्यदतिवेगेन तद्वीर्यं प्रच्युतं तदा ॥ ७० ॥
ततः समुदितो देवो महाशास्ता महाबलः ।
अनेककोटिदैत्येन्द्रगर्वनिर्वापणक्षमः ॥ ७१ ॥
तद्वीर्यबिन्दुसंस्पर्शात्सा भूमिस्तत्र तत्र च ।
रजतस्वर्णवर्णाभूत्तत्क्षणाद्विन्ध्यमर्दन ॥ ७२ ॥
तत्रैवान्तर्दधे सापि देवता विश्वमोहिनी ।
निर्वृतः स गिरीशोऽपि गिरिं गौरीसखो ययौ ७३

[ भण्डासुरचरितारंभः ।]

अथाद्भुतमिदं वक्ष्ये लोपामुद्रापते शृणु ।
यन्न कस्यचिदाख्यातं ममैव हृदये स्थितम् ॥७४॥
पुरा भण्डासुरो नाम सर्वदैत्यशिखामणिः ।
पूर्वदेवान्बहुविधान्यः स्रष्टुं स्वेच्छया पटुः ॥७५॥
विशुक्रं नाम दैतेयवर्गसंरक्षणक्षमम् ।
शुक्रतुल्यं विचारज्ञं दक्षांसेन ससर्ज सः ॥ ७६ ॥
वामांसेन विषङ्गं च सृष्टवान्दुष्टशेखरः ।
धूमिनीनामधेयां च भगिनीं भण्डदानवः ॥ ७७ ॥
भ्रातृभ्यामुग्रवीर्याभ्यां सहितः सहताहितः ।
ब्रह्माण्डं खण्डयामास शौर्यवीर्यसमुच्छ्रितः ॥७८
ब्रह्मविष्णुमहेशाश्च तं दृष्ट्वा दीप्ततेजसम् ।
पलायनपराः सद्यः स्वे स्वे धाम्नि सदाऽवसन् ७९
तदानीमेव तद्बाहुसंमर्दनविमूर्च्छिताः ।
श्वसितुं चापि पटवो नाभवन्नाकिनां गणाः ॥८०॥
केचित्पातालगर्भेषु केचिदम्बुधिवारिषु ।
केचिद्दिगन्तकोणेषु कुञ्जेष्वेके च भूभृताम् ॥८१॥

विपिनं भृशवित्रस्तास्त्यक्तदारसुतश्रियः ।
अष्टाधिकाराः पशवो विचेरुश्छन्नवेषकाः ॥८२॥
यक्षान्महोरगान्सिद्धान्साध्यान्समरुद्गणान् ।
ब्रह्माणं पद्मनाभं च रुद्रं वज्रिणमेव च ।
मत्वा तृणाय तान्सर्वाल्लोकानभण्डः शशासह ८३

[ श्रीललिताम्बावतारः ॥ ]

अथ भण्डासुरं हन्तुं त्रैलोक्यं चापि रक्षितुम् ।
द्वितीयमुदभूद्रूपं महायागानलात्पुनः ॥ ८४ ॥
यद्रूपशालिनीमाहुर्ललितां परदेवताम् ।
पाशाङ्कुशधनुर्बाणपरिष्कृतकराम्बुजाम् ॥ ८५ ॥
सा देवी परमा शक्तिः परब्रह्मस्वरूपिणी ।
जघान भण्डदैत्येन्द्रं युद्धे युद्धविशारदा ॥ ८६ ॥

इति श्रीललितोपाख्याने मोहिन्या शंकरमोहनं नाम
पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ॥ ६ ॥

[ भण्डासुरोत्पत्तिः ॥ ]

अगस्त्यः ॥

कथं भण्डासुरो जातः कथं वा त्रिपुराम्बिका ।

कथं स निहतः संख्ये तत्सर्वं वद विस्तरात् ॥१॥
हयग्रीवः ॥
पुरा दाक्षायणीं त्यक्त्वा पितुर्यज्ञविनाशनात् ।
आत्मानमात्मना पश्यञ्ज्ञानानन्दरसात्मकः ॥२॥
उपास्यमानो मुनिभिरचिन्त्यगुणलक्षणः ।
गङ्गाकूले हिमवतः पर्यन्ते प्रविवेश ह ॥ ३ ॥
सापि शङ्करमाराध्य चिरकालं मनस्विनी ।
योगेन स्वां तनुं त्यक्त्वा सुतासीद्धिमभूभृतः ॥४॥
स शैलो नारदाच्छ्रुत्वा रुद्राणीति स्वकन्यकाम् ।
तस्य शुश्रूषणार्थाय स्थापयामास चान्तिके ॥५॥
एतस्मिन्नन्तरे देवास्तारकेणाभिपीडिताः ।
ब्रह्मणोक्ताः समाहूय मदनं चेदमब्रुवन् ॥ ६ ॥
सर्गादौ भगवान्ब्रह्मा सृजमानोऽखिलाः प्रजाः ।
न निर्वृतिरभूत्तस्य कदाचिदपि मानसे ।
तपश्चचार सुचिरं मनोवाक्कायकर्मभिः ॥ ७ ॥
ततः प्रसन्नो भगवान्सलक्ष्मीको जनार्दनः ।
वरेण छन्दयामास वरदः सर्वदेहिनाम् ॥ ८ ॥

ब्रह्मा ॥

यदि तुष्टोऽसि भगवन्ननायासेन वै जगत्।
चराचरमिदं चैव सृजामि त्वत्प्रसादतः ॥ ९ ॥
एवमुक्तो विधात्रा तु महालक्ष्मीमुदैक्षत।
तदा प्रादुरभूस्त्वं वै जगन्मोहनरूपधृक् ॥ १० ॥
तवायुधार्थं दत्तं च पुष्पबाणेक्षुकार्मुकौ।
विजयत्वमलक्ष्यत्वं प्रादात्प्रमुदितो हरिः ॥ ११ ॥
असौ सृजति भूतानि कारणेन स्वकर्मणा।
साक्षिभूतोऽस्य जगतो भवान् भजतु निर्वृतिम् १२
एवं लब्धवरो धाता त्वयि विन्यस्य तद्भरम्।
मनसो निर्वृतिं प्राप्य वर्ततेऽद्यापि मन्मथ ॥१३॥
अमोघं बलवीर्यं ते न ते मोघः पराक्रमः।
सुकुमाराण्यमोघानि कुसुमास्त्राणि ते सदा ॥१४॥
ब्रह्मदत्तवरोऽयं हि तारको नाम दानवः।
बाधते सकलाँल्लोकानस्मानपि विशेषतः ॥ १५ ॥
शिवपुत्रादृतेऽन्यत्र भयं तस्य न विद्यते।
त्वां विनास्मिन्महाकार्ये न कश्चित्प्रभवेदपि ॥१६

सुकरं च भवेत्कार्यं भवतो नान्यतः क्वचित् ॥१७
आत्मैकध्याननिरतः शिवो गौर्या समन्वितः ।
हिमाचलतटे रम्ये वर्तते मुनिभिर्वृतः ॥ १८ ॥
त्वन्नियोगाच्च गौर्यां तु जनिष्यति च तत्सुतः ।
इयत्कार्यमिदं कृत्वा त्रायस्वास्मान्महाबल ॥१९॥
एवमभ्यर्थितो देवैः स्तूयमानो मुहुर्मुहुः ।
जगामात्मविनाशाय यतो हिमवतस्तटम् ॥ २० ॥
किमप्याराधयन्तं तु गन्धपुष्पोपहारकैः ।
शुश्रूषणपरां तां तु ददर्शातिबलः स्मरः ॥ २१ ॥
अदृश्यः सर्वभूतानां नातिदूरेऽस्य संस्थितः ।
सुमनोमार्गणैरुग्रैस्तं विव्याध महेश्वरम् ॥ २२ ॥
विस्मृत्य सर्वकर्माणि विद्धस्तैरन्तिकस्थिताम् ।
गौरीं विलोकयामास मन्मथाविष्टचेतनः ॥ २३ ॥
धृतिमालम्ब्य च पुनः किमेतदिति चिन्तयन् ।
ददर्शाग्रे तु सन्नद्धं मन्मथं कुसुमायुधम् ॥ २४ ॥
तं दृष्ट्वा कुपितः शूली त्रैलोक्यदहनक्षमम् ।
तार्तीयं चक्षुरुन्मील्य ददाह मकरध्वजम् ॥२५॥

शिवेनैवमवज्ञाता दुःखिता शैलकन्यका ।
अनुज्ञया पितुः स्वस्य तपः कर्तुमगाद्वनम् ॥२६॥
अथ तद्भस्म संवीक्ष्य चित्रकर्मा गणेश्वरः ।
तद्भस्मना तु पुरुषं चित्राकारं चकार सः ॥२७॥
तं विचित्रतनुं रुद्रो ददर्शाग्रे तु पूरुषम् ।
तत्क्षणाज्जातजीवोऽसौ मूर्तिमानिव मन्मथः ।
महाबलोऽतितेजस्वी मध्याह्नार्कसमद्युतिः ॥२८॥
तं चित्रसेनो बाहुभ्यां समालिङ्ग्य मुदान्वितम् ।
स्तुहि बाल महादेवं स तु सर्वार्थसाधकः ॥२९॥
इत्युक्त्वा शतरुद्रीयमुपादिशदमेयधीः ।
ननाम शतशो रुद्रं शतरुद्रमनुं जपन् ॥ ३० ॥
ततः प्रसन्नो भगवान्महादेवो वृषध्वजः ।
वरेण छन्दयामास वरं वव्रे च बालकः ॥ ३१ ॥
प्रतिद्वन्द्विबलार्धं तु मद्बले नोपयोक्ष्यत ।
तदस्त्रशस्त्रमुख्यानि व्यर्थां कुर्वन्तु नो मम ॥३२॥
तथेति तत्प्रतिश्रुत्य विचार्य किमपि प्रभुः ।
षष्टिवर्षसहस्राणि राज्यमस्मै ददौ पुनः ॥ ३३ ॥

एतद्दृष्ट्वा तु चरितं धाता भण्डिति भण्डिति ।
यदुवाच ततो नाम्ना भण्डो लोकेषु कथ्यते ॥३४॥
इति दत्त्वा वरं तस्मै सर्वैर्मुनिगणैर्वृतः ।
दत्वास्त्राणि च शस्त्राणि तत्रैवान्तरधीयत ॥ ३५ ॥

इति श्रीललितोपाख्याने भण्डासुरोत्पत्तिकथनंनाम
षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

[ भण्डासुरपट्टाभिषेकादि ॥ ]

हयग्रीवः ॥

रुद्रकोपानलाज्जातो यतो भण्डो महाबलः ।
तस्माद्रौद्रस्वभावश्च दानवश्चाभवत्ततः ॥ १ ॥
अथागच्छन्महातेजाः शुक्रो दैत्यपुरोहितः ।
समायाताश्च शतशो दैतेयास्तु महाबलाः ॥ २ ॥
अथाहूय मयं भण्डो दैत्यवंशादिशिल्पिनम् ।
नियुक्तो भृगुपुत्रेण स जगाद मयं ततः ॥ ३ ॥
यत्र स्थित्वा तु दैत्येन्द्रैस्त्रैलोक्यं शासितं पुरा ।

तद्गत्वा शोणितपुरं निर्माणं कुर्वितोरितः ॥ ४ ॥
तच्छ्रुत्वा वचनं शिल्पी स गत्वा तत्पुरं महत् ।
चक्रेऽमरपुरप्रख्यं मनसैव क्षणेन तु ॥ ५ ॥
अथाभिषिक्तः शुक्रेण दैतेयैश्च महाबलैः ।
शुशुभे परया लक्ष्म्या तेजसा च समन्वितः ॥६॥
हिरण्याय तु यद्दत्तं किरीटं ब्रह्मणा पुरा ।
सजीवमविनाश्यं च दैत्येन्द्रैकविभूषणम ॥ ७ ॥
दधौ भृगुसुतोत्सृष्टं भण्डो बालार्कसंनिभम् ।
चामरे चन्द्रसंकाशे सजीवे ब्रह्मनिर्मिते ॥ ८ ॥
न रोगा नच दुःखानि ददौ यद्विनिषेवणात् ।
तस्यातपत्रं प्रददौ ब्रह्मणैव पुरा कृतम् ॥ ९ ॥
यस्य छायानिषण्णस्तु बाध्यते नास्त्रकोटिभिः ।
धनुश्च विजयं नाम खड्गं च रिपुघातिनम् ॥१०॥
अन्यान्यपि महार्हाणि भूषणानि प्रदत्तवान् ।
तस्य सिंहासनं प्रादादक्षयं सूर्यसंनिभम् ॥ ११ ॥

---

१ हिरण्याय ददौ यत्तु किरीटं प्रत्यभूः पुरा. (पद्मभूः इति पाठान्तरं).

ततः सिंहासनासीनः सर्वाभरणभूषितः ।
बभूवातीव तेजस्वी रत्नमुत्तेजितं यथा ॥ १२ ॥
बभूवुरथ दैतेयास्तस्याष्टौ तु महाबलाः ।
इन्द्रशत्रुरमित्रघ्नो विद्युन्माली विभीषणः ॥ १३ ॥
उग्रकर्मोग्रधन्वा च विजयः श्रुतिपारगः ।
संमोहिनी कुमुदिनी चित्राङ्गी सुन्दरी तथा ॥१४॥
चतस्रो वनितास्तस्य बभूवुः प्रियदर्शनाः ।
तमसेवन्त कालज्ञा देवाः सर्वे सवासवाः ॥१५॥
स्यन्दनास्तुरगा नागाः पादाताश्च सहस्रशः ।
संबभूवुर्महाकाया महान्तो जितकाशिनः ॥ १६ ॥
बभूवुर्दानवाः सर्वे भृगुपुत्रमतानुगाः ।
अर्चयन्तो महादेवमास्थिताः शिवशासने ॥ १७ ॥
बभूवुर्दानबास्तत्र पुत्रपौत्रधनान्विताः ।
गृहेगृहे च यज्ञाश्च संबभूवुः समन्ततः ॥ १८ ॥
ऋचो यजूंषि सामानि मीमांसान्यायकादयः ।
प्रवर्तन्तेस्म दैत्यानां गृहंप्रति गृहंप्रति ॥ १९ ॥
यथाऽऽश्रमेषु मुख्येषु मुनीनां च द्विजन्मनाम् ।

तथा यज्ञेषु दैत्यानां वभूवुर्हव्यभोजिनः ॥ २० ॥
एवं कृतवतोऽप्यस्य भण्डस्य जितकाशिनः ।
षष्टिवर्षसहस्राणि व्यतीतानि क्षणार्धवत् ॥ २१ ॥

[विष्णुकृतमायासृष्टिः ॥]

वर्धमानमथो दैत्यं तपसा च बलेन च ।
हीयमानबलं चेन्द्रं संप्रेक्ष्य कमलापतिः ॥ २२ ॥
ससर्ज मनसा कांचिन्मायां लोकविमोहिनीम् ।
तामुवाच ततो मायां देवदेवो जनार्दनः ॥ २३ ॥
त्वं हि सर्वाणि भूतानि मोहयन्ती निजौजसा ।
विचरस्व यथाकामं त्वां न ज्ञास्यति कश्चन ॥२४॥
त्वं तु शीघ्रमितो गत्वा भण्डं दैतेयनायकम् ।
मोहयित्वाऽचिरेणैव विषयानुपभोक्ष्यसि ॥ २५॥
एवं लब्धवरा माया तं प्रणम्य जनार्दनम् ।
ययाचेऽप्सरसां मुख्याः सहायार्थे तु काश्चन ॥२६
तथेत्यप्सरसो मुख्या युयोज स तया हरिः ।
ताभिर्विश्वाचीमुख्याभिः संयुक्ता सा मृगेक्षणा ।
प्रययौ मानसस्याग्र्यं तटमुज्ज्वलभूरुहम् ॥ २७ ॥

यत्र क्रीडति दैत्येन्द्रो निजनारीभिरन्वितः ।
तत्रैव मृगशावाक्षी मूले चम्पकशाखिनः ॥ २८ ॥
निवासमकरोद्रम्यं गायन्ती मधुरस्वनम् ।
अथागतस्तु दैत्येन्द्रो बलिभिर्मन्त्रिभिर्वृतः ॥ २९ ॥
श्रुत्वा वीणानिनादं तु ददर्श च वराङ्गनाम् ।
तां दृष्ट्वा चारुसर्वाङ्गीं विद्युल्लेखामिवापराम् ॥३०॥
मायामोहमहागर्ते पतितो मदनाभिभे ।
अथास्य मन्त्रिणः पेतुर्हृदये स्मरतापिताः ॥ ३१ ॥
तेन दैतेयनाथेन चिरं संप्रार्थिता सती ।
तैश्च संप्रार्थितास्ताश्च प्रतिशुश्रुवुरञ्जसा ॥ ३२ ॥
यास्त्वलभ्या महायज्ञैरश्वमेधादिकैरपि ।
ता लब्ध्वा मोहिनीमुख्या निर्वृतिं परमां ययुः ३३
विसस्मरुस्ततो वेदांस्तथा देवमुमापतिम् ।
विससर्जुस्तथा यज्ञान्क्रियाश्चान्याः शुभावहाः ३४
अवमानाहतश्चासीत्तेषामपि पुरोहितः ।
मुहूर्तमिव तेषां तु ययुरष्टौ शतं समाः ॥ ३५ ॥[1]
मोहितेष्वथ दैत्येषु सर्वे देवाः सवासवाः ।

१ पुस्तकान्तरेत्र एकादशाध्यायसमाप्तिर्दृश्यते ।

विमुक्तोपद्रवा ब्रह्मन्नामोदं परमं ययुः ॥ ३६ ॥
कदाचिदथ देवेन्द्रं दिव्यसिंहासनस्थितम् ।
सर्वदेवैः परिवृतं नारदो मुनिराययौ ॥ ३७ ॥
प्रणम्य मुनिशार्दूलं ज्वलन्तमिव पावकम् ।
कृताञ्जलिपुटो भूत्वा देवेशो वाक्यमब्रवीत् ॥३८॥
भगवन्सर्वधर्मज्ञ परावरविदां वर ।
अत्रैवागमनं तेऽद्य मां धन्यं कर्तुमिच्छतः ।
भविष्यच्छोभनाकारं तवागमनकारणम् ॥ ३९ ॥
त्वद्वाक्यामृतमाकर्ण्य श्रवणानन्दनिर्भरः ।
अशेषदुःखादुत्तीर्य कृतार्थः स्यां मुनीश्वर ॥४०॥

नारदः ॥

अद्य संमोहितो भण्डो दैत्येन्द्रो विष्णुमायया ४१
तया विमुक्तो लोकांस्त्रीन्दहत्यग्निरिवापरः ।
अधिकस्तव तेजोभिरस्त्रैर्मायाबलेन च ॥ ४२ ॥
तस्य तेजोपहारस्तु कर्तव्योऽतिबलस्य च ।
विनाराधनतो देव्याः पराशक्तेस्तथा सति ॥ ४३ ॥
अशक्योऽन्येन तपसा कल्पकोटिशतैरपि ।

पुरेवोदयतः शत्रोराराधयत बालिशाः ॥ ४४ ॥
आराधिता भगवती सा वः श्रेयो विधास्यति ।
एवं सम्बोधितस्तेन शक्रो देवगणेश्वरः ॥ ४५ ॥
तं मुनिं पूजयामास सर्वदेवैः समन्वितः ।
तपसे कृतसन्नाहो ययौ हैमवतं तटम् ॥ ४६ ॥
तत्र भागीरथीतीरे सर्वर्तुकुसुमोज्वले ।
पराशक्तेर्महापूजां चक्रेऽखिलसुरैः सह ॥ ४७ ॥
इन्द्रप्रस्थमभून्नाम्ना तदाद्यखिलसिद्धिदम् ।
नारदेनोपदिष्टेन विधिना परदेवताम् ॥ ४८ ॥
कुर्वतां महतीं पूजां जपध्यानरतात्मनाम् ।
उग्रे तपसि संस्थानामनन्यायत्तचेतसाम् ॥ ४९ ॥
दशवर्षसहस्राणि दशाहानीव संययुः ।
मोहितानथ तान्दृष्ट्वा भृगुपुत्रो महामतिः ॥ ५० ॥
भण्डासुरं समभ्येत्य निजगाद पुरोहितः ।
त्वामेवाश्रित्य राजेन्द्र सदा दानवसत्तमाः ॥५१॥
निर्भयास्त्रिषु लोकेषु चरन्तीच्छाविहारिणः ।
ज्ञातिमात्रेण भवतो हन्ति सर्वान्सदा हरिः॥५२॥

तेनैव निर्मिता माया यया संमोहितो भवान् ।
भवन्तं मोहितं दृष्ट्वा रन्ध्रान्वेषणतत्परः ॥ ५३ ॥
भवतां विजयार्थाय करोतीन्द्रो महत्तपः ।
यदि तुष्टा जगद्धात्री तस्यैव विजयो भवेत् ॥५४॥
इमां मायामयीं त्यक्त्वा मन्त्रिभिः सहितो भवान् ।
गत्वा हैमवतं शैलं परेषां विघ्नमाचर ॥ ५५ ॥
एवमुक्तस्तु गुरुणा हित्वा पर्यङ्कमुत्थितः ।
मन्त्रिश्रेष्ठानथाहूय यथावृत्तान्तमाह सः ॥ ५६ ॥
तच्छ्रुत्वा नृपतिं प्राह श्रुतवर्मा विमृश्य च ।
षष्टिर्वर्षसहस्राणां राज्यं तव शिवार्पितम् ।
तस्मादप्यधिकं वीर गतमासीदनेकशः ॥ ५७ ॥
अशक्यप्रतिकार्योऽयं यः कालः शिवचोदितः ।
काले तु भोगः कर्तव्यो दुःखस्य च सुखस्य च५८
तदाह भीमकर्माख्यो नोपेक्ष्योऽरिर्यथाबलम् ।
क्रियाविघ्ने कृतेऽस्माभिर्विजयस्ते भविष्यति॥५९॥
तव युद्धे महाराज परार्द्धबलहारिणी ।
दत्ता विद्या शिवेनैव तस्मात्ते विजयः सदा॥६०॥

अनुमेने च तद्वाक्यं भण्डो दानवनायकः ।
निर्गत्य सह सेनाभिर्ययौ हिमवतस्तटम् ।। ६१ ।।
तपोविघ्नकरान्दृष्ट्वा दानवाञ्जगदम्बिका ।
अलङ्घ्यमकरोदग्रे मायाप्राकारमुज्ज्वलम् ।। ६२ ।।
तं दृष्ट्वा दानवेन्द्रोऽपि किमेतदिति विस्मितः ।
संक्रुद्धो दानवास्त्रेण बभञ्जातिबलेन तु ।
पुनरेव तदग्रेऽभूदलङ्घ्यं सर्वदानवैः ।। ६४ ।।
वायव्यास्त्रेण तद्वीरो बभञ्ज च ननाद च ।।६३ ।।
पौनःपुन्येन तद्भग्नमभूत्पुनरुपस्थितम् ।
एतद्दृष्ट्वा तु दैत्येन्द्रो विषण्णः स्वपुरं ययौ ।। ६५ ।।
तां चादृष्ट्वा जगद्धात्रीं दृष्ट्वा तद्घोरसैनिकम् ।
भयाद्दुद्रुविरे देवा विमुक्तसकलक्रियाः ।। ६६ ।।
तानुवाच व्रती शक्रो दैत्येन्द्रोऽयमिहागतः ।
अशक्यं समरे योद्धुमस्माभिरखिलैरपि ।। ६७ ।।
पलायितानामपि नो गतिरन्या न कुत्रचित् ।
कुण्डं योजनविस्तारं सम्यक्कृत्वा तु शोभनम्।।६८।।
महायागविधानेन प्रणिधाय हुताशनम् ।

यजाम परमां शक्तिं महामांसैर्वयं सुराः ।
ब्रह्मभूता भविष्यामो भोक्ष्यामो वा त्रिविष्टपम् ६९
एवमुक्तास्ततः सर्वे देवाः सेन्द्रपुरोगमाः ।
विधिवज्जुहुवुर्मांसमुत्कृत्योत्कृत्य मन्त्रतः ॥ ७० ॥
हुतेषु सर्वमांसेषु पादेषु च करेषु च ।
होतुमिच्छत्सु देवेषु कलेवरमशेषतः ॥ ७१ ॥
प्रादुर्बभूव परमं तेजःपुञ्जमनूपमम् ।
कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतलम् ॥ ७२ ॥
तन्मध्यमे समुद्भूच्चक्राकारमनुत्तमम् ।
तन्मध्यमे महादेवीमुदयार्कसमप्रभाम् ॥ ७३ ॥
जगदुज्जीवनाकारां ब्रह्मविष्णुशिवात्मिकाम् ।
सौन्दर्यसारसीमान्तामानन्दरससागराम् ॥७४॥
जपाकुसुमसङ्काशां दाडिमीकुसुमाम्बराम् ।
सर्वाभरणसंयुक्तां शृङ्गारैकरसालयाम् ॥ ७५ ॥
कृपातरङ्गितापाङ्गनयनालोककौमुदीम् ।
पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्कराम् ॥ ७६ ॥
तां विलोक्य महादेवीं देवाः सर्वे सवासवाः ।

प्रणेमुर्मुदितात्मानो भूयोभूयोऽखिलात्मिकाम् ७७
तया विलोकिताः सद्यस्ते सर्वे विगतज्वराः ।
संपूर्णाङ्गा दृढतरा वज्रदेहा महाबलाः ॥ ७८ ॥
तुष्टुवुश्च तदा देवीमम्बिकामखिलार्थदाम् ॥७९॥

इति श्रीललितोपाख्याने देवीप्रादुर्भावो नाम
सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

## ललितास्तवराजः ॥

जय देवि जगन्मातर्जय देवि परात्परे ।
जय कल्याणनिलये जय कामकलात्मिके ॥ १ ॥
जयकामेशवामाक्षि जय कामाक्षि सुन्दरि ।
जयाखिलसुराराध्ये जय कामेशि कामदे ॥ २ ॥
जयब्रह्ममये देवि ब्रह्मानन्दरसात्मिके ।
जय नारायणि परे नन्दिताशेषविष्टपे ॥ ३ ॥
जय श्रीकण्ठदयिते जय श्रीललिताम्बिके ।
जय श्रीविजये देवि विजय श्रीसमृद्धिदे ॥ ४ ॥

जातस्य जायमानस्य चेष्टापूर्तस्य हेतवे ।
नमस्तस्यै त्रिजगतां पालयित्र्यै नमो नमः ॥ ५ ॥
कलामुहूर्तकाष्ठाहर्मासंसंवत्सरात्मने ।
नमः सहस्रशीर्षायै सहस्रमुखलोचने ॥ ६ ॥
नमः सहस्रहस्ताब्जपादपङ्कजशोभिने ।
अणोरणुतरे देवि महतोऽपि महीयसि ॥ ७ ॥
परात्परतरे मातस्तेजस्त्वं तेजसामपि ।
अतलं तु भवेत्पादौ वितलं जानुनी तव ॥ ८ ॥
रसातलं कटीदेशः कुक्षिस्ते धरणी भवेत् ।
हृदयं तु भुवर्लोकः स्वस्ते मुखमुदाहृतम् ॥ ९ ॥
दृशश्चन्द्रार्कदहना दिशस्ते बाहवोऽम्बिके ।
मरुतस्ते तनूच्छ्वासा वाचस्ते श्रुतयोऽखिलाः॥१०
क्रीडा ते लोकरचना सखा ते चिन्मयः शिवः ।
आहारस्ते सदानन्दो वासस्ते हृदयं सताम् ॥११॥
दृश्यादृश्यस्वरूपाणि रूपाणि भुवनानि ते ।
शिरोरुहा नभस्ते तु तारकाः कुसुमानि ते ॥१२॥
धर्माद्या बाहवस्ते स्युरधर्माद्यायुधानि ते ।

यमाश्च नियमाश्चैव करपादरुहास्तथा ॥ १३ ॥
स्तनौ स्वाहास्वधाकारौ लोकोज्जीवनकारकौ ।
प्राणायामास्तु ते नासारसना ते सरस्वती ॥१४॥
प्रत्याहारस्त्विन्द्रियाणि ध्यानं ते धीस्तृडासनम् ।
मनस्ते धारणाशक्तिर्हृदयं ते समाधिका ॥ १५ ॥
महीरुहास्तेऽङ्गरुहाः प्रभातं वसनं तव ।
भूतं भव्यं भविष्यच्च नित्यं च तव विग्रहम् ॥१६॥
यज्ञरूपा जगद्धात्री विष्वग्रूपा च पावनी ।
आधारं त्वां प्रपश्यन्ति न सम्यङ्निखिलाः प्रजाः॥
हृदयस्थापि लोकानामदृश्या मोहनात्मिका ।
नामरूपविभागं च या करोति स्वलीलया ॥ १८ ॥
तान्यधिष्ठाय तिष्ठन्ती तेष्वसक्ता च कामदा ।
नमस्तस्यै महादेव्यै सर्वशक्त्यै नमो नमः ॥ १९ ॥
या देवी परमाशक्तिः परब्रह्माभिधायिनी ।
ब्रह्मानन्दाभिधानायै तस्यै देव्यै नमो नमः ॥२०॥
यदाज्ञया प्रवर्तन्ते वह्निसूर्येन्दुमारुताः ।
पृथिव्यादीनि भूतानि तस्यै देव्यै नमो नमः ॥२१

या ससर्ज विधातारं मर्यादावादिभूरियम् ।
दधार स्वयमेवैका तस्यै देव्यै नमोनमः ॥ २२ ॥
यया धृता तु धरणी ययाकाशाप्रमेयया ।
यस्यामुदेति सविता तस्यै देव्यै नमो नमः ॥२३॥
यदन्तरस्थं त्रिदिवं यदाधारोऽन्तरिक्षकः ।
यन्मयश्चाखिलो लोकस्तस्यै देव्यै नमो नमः॥२४॥
यत्रोदेति जगत्कृत्स्नं यत्र तिष्ठति निर्भरम् ।
यत्रान्तमेति काले तु तस्यै देव्यै नमो नमः ॥२५॥

नमो नमस्ते रजसो भवायै
नमो नमः सात्विकसंस्थितायै ।
नमो नमस्ते तमसो हरायै
नमो नमो निर्गुणतः शिवायै ॥ २६ ॥
नमो नमस्ते जगदेकमात्रे
नमो नमस्ते जगदेकपित्रे ।
नमो नमस्तेऽखिलतन्त्ररूपे
नमो नमस्तेऽखिलयज्ञरूपे ॥ २७ ॥
नमो नमो लोकगुरुप्रधाने
नमो नमस्तेऽखिलवाग्विभूत्यै ।

नमोस्तु लक्ष्म्यै जगदेकतुष्ट्यै
नमो नमः शाम्भवि सर्वशक्त्यै ॥ २८ ॥
अनादिमध्यान्तमपाञ्चभौतिकं
ह्यवाङ्मनोगम्यमतर्क्यवैभवम् ।
अरूपमद्वन्द्वमदृष्टिगोचरं
प्रभावमग्र्यं कथमम्ब वर्ण्यते ॥ २९ ॥
प्रसीद विश्वेश्वरि विश्ववन्दिते
प्रसीद विश्वेश्वरि वेदरूपिणि ।
प्रसीद मायामयि मन्त्रविग्रहे
प्रसीद सर्वेश्वरि सर्वरूपिणि ॥ ३० ॥
इति स्तुत्वा महादेवीं देवाः सर्वे सवासवाः ।
भूयो भूयो नमस्कृत्य शरणं जग्मुरञ्जसा ॥ ३१ ॥
ततः प्रसन्ना सा देवी प्रणतं वीक्ष्य वासवम् ।
वरेण छन्दयामास वरदाखिलदेहिनाम् ॥ ३२ ॥

इन्द्रः ॥

यदि तुष्टासि कल्याणि वयं दैत्येन्द्रनिर्जिताः ।
दुर्धरं जीवितं देवि त्वां गताः शरणार्थिनः ॥ ३३ ॥

श्रीदेवी ॥

अहमेव विनिर्जित्य भण्डं दैत्यकुलेश्वरम् ।
अचिरात्तव दास्यामि त्रैलोक्यं सचराचरम् ॥३४॥
निर्भया मुदिताः सन्तु सर्वे देवगणास्तथा ॥ ३५ ॥
ये स्तुवन्ति च मां भक्त्या स्तवेनानेन मानवाः ।
भाजनं ते भविष्यन्ति धर्मश्रीयशसां सदा ॥३६॥
विद्याविनयसम्पन्ना नीरोगा दीर्घजीविनः ।
पुत्रमित्रकलत्राढ्या भवन्तु मदनुग्रहात् ॥ ३७ ॥
इति लब्धवरा देवा देवेन्द्रोऽपि महाबलः ।
आमोदं परमं जग्मुस्तां विलोक्य मुहुर्मुहुः ॥ ३८ ॥

इति श्रीललितोपाख्याने ललितास्तवराज-
कथनं नाम अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ॥ ९ ॥

[ देवीदर्शनाय ब्रह्माद्यागमनम् ॥ ]

हयग्रीवः ॥

एतस्मिन्नेव काले तु ब्रह्मा लोकपितामहः ।
आजगामाथ देवेशीं द्रष्टुकामो महर्षिभिः ॥ १ ॥

आजगाम ततो विष्णुरारूढो विनतासुतम् ।
शिवोऽपि वृषभारूढः समायातोऽखिलेश्वरीम्॥२॥
देवर्षयो नारदाद्याः समाजग्मुर्महेश्वरीम् ।
आययुस्तां महादेवीं सर्वे चाप्सरसां गणाः ।
विश्वावसुप्रभृतयो गन्धर्वाश्चैव यक्षकाः ॥ ३ ॥
ब्रह्मणाथ समादिष्टो विश्वकर्मा विशांपतिः ।
चकार नगरं देव्या यथामरपुरं तथा ॥ ४ ॥
ततो भगवती दुर्गा सर्वमन्त्राधिदेवता ।
विद्याधिदेवता श्यामा समाजग्मतुरम्बिकाम्॥५॥
ब्राह्म्याद्या मातरश्चैव स्वस्वभूतगणावृताः ।
सिद्धयोऽप्यणिमाद्याश्च योगिन्यश्चैव कोटिशः॥६
भैरवाः क्षेत्रपालाश्च महाशास्ता गणाग्रणीः ।
महागणेशः स्कन्दश्च बटुको वीरभद्रकः ॥ ७ ॥
आगत्य ते महादेवीं तुष्टुवुः प्रणतास्तथा ॥ ८ ॥
तत्राथ नगरीं रम्यां साट्टप्राकारतोरणाम् ।
गजाश्वरथशालाढ्यां राजवीथीविराजिताम् ॥ ९॥
सामन्तानाममात्यानां सैनिकानां द्विजन्मनाम् ।

वैतालदासदासीनां गृहाणि रुचिराणि च ॥ १० ॥
मध्ये राजगृहं दिव्यं द्वारगोपुरशोभितम् ।
शालाभिर्बहुभिर्युक्तं सभाभिरुपशोभितम् ॥ ११ ॥
सिंहासनसभां चैव नवरत्नमयीं शुभाम् ।
मध्ये सिंहासनं दिव्यं चिन्तामणिविनिर्मितम् १२
स्वयं प्रकाशमद्वन्द्वमुदयादित्यसंनिभम् ।
विलोक्य चिन्तयामास ब्रह्मा लोकपितामहः॥१३
यस्त्वेतत्समधिष्ठाय वर्तते वालिशोऽपि वा ।
पुरस्यास्य प्रभावेन सर्वलोकाधिपो भवेत् ॥ १४ ॥
न केवला स्त्री राज्यार्हा पुरुषोऽपि तया विना ।
मङ्गलाचारसंपन्नं महापुरुषलक्षणम् ॥ १५ ॥
अनुरूपाङ्गनायुक्तमभिषिञ्चेदिति स्मृतिः ।
विभातीयं वरारोहा मूर्ता शृङ्गारदेवता ॥ १६ ॥
वरोऽस्यास्त्रिषु लोकेषु न चान्यः शङ्कराहते ।
जटिलो मुण्डधारी च विरूपाक्षः कपालधृत् १७
कल्माषी भस्मदिग्धाङ्गः श्मशानस्थो विभीषणः ।
अमङ्गलास्पदं नैनं वरयेत्सा सुमङ्गला ॥ १८ ॥

इति चिन्तयमानस्य ब्रह्मणोऽग्रे महेश्वरः ।
कोटिकन्दर्पलावण्ययुक्तो दिव्यशरीरवान् ॥ १९ ॥
दिव्याम्बरधरः स्रग्वी दिव्यगन्धानुलेपनः ।
किरीटहारकेयूरकुण्डलाद्यैरलङ्कृतः ॥ २० ॥
प्रादुर्बभूव पुरुषो जगन्मोहनरूपधृत् ।
तं कुमारमथालिङ्गय ब्रह्मा लोकपितामहः ॥ २१ ॥
चक्रे कामेश्वरं नाम्ना कमनीयवपुर्धरम् ।
तस्यास्तु परमाशक्तेरनुरूपो वरस्त्वयम् ॥ २२ ॥
इति निश्चित्य तेनैव सहितस्तामथाययौ ।
अस्तुवंस्ते पराशक्तिं ब्रह्मविष्णुमहेश्वराः ॥ २३ ॥
तां दृष्ट्वा मृगशावाक्षीं कुमारो नीललोहितः ।
अभवन्मन्मथाविष्टो विस्मृत्य सकलाः क्रियाः २४
सापि तं वीक्ष्य तन्वङ्गी मूर्तिमन्तमिव स्मरम् ।
मदनाविष्टसर्वाङ्गी स्वानुरूपममन्यत ॥ २५ ॥
अन्योन्यालोकनासक्तौ तावुभौ मदनातुरौ ।
सर्वभावविशेषज्ञौ धृतिमन्तौ मनस्विनौ ।
परैरज्ञातचारित्रौ मुहूर्तं स्वस्थचेतसौ ।

अथोवाच महादेवीं ब्रह्मा लोकैकनायिकाम्॥२७॥
इमे देवाश्च ऋषयो गन्धर्वाप्सरसां गणाः ।
त्वामीशां द्रष्टुमिच्छन्ति सप्रियां परमासने ॥२८॥
को वानुरूपस्ते देवी प्रियो धन्यतमः पुमान् ।
लोकसंरक्षणार्थाय भजस्व पुरुषं परम् ॥ २९ ॥
राज्ञी भव पुरस्यास्य स्थिता भव वरासने ।
अभिषिक्तां महाभागे देवर्षिभिरकल्मषैः ॥ ३० ॥
साम्राज्यलक्ष्मीसंयुक्तां सर्वाभरणसंयुताम् ।
सप्रियामासनगतां द्रष्टुमिच्छामहे वयम् ॥ ३१ ॥

इति श्रीललितोपाख्याने देवीदर्शनाय ब्रह्माद्यागमनादिकथनं नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ॥ १० ॥

[ श्रीललिताम्बिकाकामेश्वरयोर्विवाहः ॥]

हयग्रीवः ॥

तच्छ्रुत्वा वचनं देवी मन्दस्मितमुखाम्बुजा ॥
उवाच सा ततो वाक्यं ब्रह्मविष्णुमुखान्सुरान्॥१

देव्युवाच ॥
स्वतन्त्राहं सदा देवा.स्वेच्छाचारविहारिणी ।
ममानुरूपचरितो भविता तु मम प्रियः ॥ २ ॥
तथेति तत्प्रतिश्रुत्य सर्वैर्देवैः पितामहः ।
उवाच च महादेवीं धर्मार्थसहितं वचः ॥ ३ ॥
कालक्रीता क्रयक्रीता पितृदत्ता स्वयंयुता ।
नारीपुरुषयोरेवमुद्वाहस्तु चतुर्विधः ॥ ४ ॥
कालक्रीता तु सा वेश्या दासी स्यात्क्रयसंयुता ।
भार्या स्यात्पितृदत्ता तु गान्धर्वी तु स्वयं युता ॥५॥
समधर्मेण युक्ता सा भार्या पित्रर्पिता यथा ।
ब्रह्मादयस्तु तामूचुः परब्रह्मस्वरूपिणीम् ॥ ६ ॥
यदद्वैतं परं ब्रह्म सदसद्भाववर्जितम् ।
चिदानन्दात्मकं तस्मात्प्रकृतिः समजायत ॥ ७ ॥
त्वमेवासि च तद्ब्रह्म प्रकृतिः सा त्वमेव हि ।
त्वमेवानादिरखिला कारणाकारणात्मिका ।
त्वामेव हि विचिन्वन्ति योगिनः सनकादयः ॥८॥

सदसत्कर्मरूपां च व्यक्ताव्यक्तोदयात्मिकाम् ।
त्वामेव हि प्रशंसन्ति पञ्चब्रह्मस्वरूपिणीम् ॥ ९ ॥
त्वमेव हि सृजस्यादौ त्वमेव ह्यवसि क्षणात् ।
त्वमेव भूयो हरसि विद्धासि महेश्वरि ॥ १० ॥
तस्मात्त्वामनयनाशस्ते न भवेत्प्रियसङ्गमात् ।
भजस्व पुरुषं कंचिल्लोकानुग्रहकाम्यया ॥ ११ ॥
इति विज्ञापिता देवी ब्रह्मणा सकलैः सुरैः ।
स्रजमुद्यम्य हस्तेन चिक्षेप गगनान्तरे ॥ १२ ॥
तयोत्सृष्टा तु सा माला शोभयन्ती नभस्तलम् ।
पपात कण्ठदेशे हि तदा कामेश्वरस्य तु ॥ १३ ॥
मुमुदुश्च ततो देवा ब्रह्मविष्णुपुरोगमाः ।
ववर्षुः पुष्पवर्षाणि बलारातीरिता घनाः ॥ १४ ॥
अथोवाच विधाता तु भगवन्तं जनार्दनम् ।
कर्तव्यो विधिनोद्वाहस्त्वनयोः शिवयोर्हरे ॥ १५ ॥
मुहूर्तोऽद्यैव संप्राप्तो जगन्मङ्गलकारकः ।
त्वद्रूपिणी महादेवी सहजश्च भवानसि ॥
दातुमर्हसि कल्याणीमस्मै कामशिवाय तु ॥ १६ ॥

तच्छ्रुत्वा वचनं तस्य देवदेवस्त्रिविक्रमः ।
ददौ तस्मै विधानेन प्रीत्या तां शङ्कराय तु ॥१७॥
देवर्षिपितृमुख्यानां गन्धर्वाप्सरसां तथा ।
सर्वासां देवजातीनां सांनिध्ये जलपूर्वकम् ॥ १८ ॥
कल्याणं कारयामास शिवयोरादिकेशवः ।
उपायनानि प्रददुः सर्वे ब्रह्मादयः सुराः ॥ १९ ॥
ददौ ब्रह्मेक्षुचापं तु वज्रसारमनश्वरम् ।
तयोः पुष्पायुधं प्रादादम्लानं हरिरव्ययम् ॥२०॥
नागपाशं ददौ ताभ्यां वरुणो यादसांपतिः ।
अङ्कुशं च ददौ ताभ्यां विश्वकर्मा विशांपतिः॥२१॥
किरीटमग्निः प्रायच्छत्ताटङ्के चन्द्रभास्करौ ।
नवरत्नमयीं भूषां प्रादाद्रत्नाकरः स्वयम् ॥ २२ ॥
ददौ सुराणामधिपो मधुपात्रमथाक्षयम् ।
चिन्तामणिमयीं मालां कुबेरः प्रददौ तदा ॥ २३ ॥
साम्राज्यसूचकं छत्रं ददौ लक्ष्मीपतिः स्वयम् ।
गङ्गा च यमुना चाभ्यां चामरे चन्द्रभास्वरे ॥२४॥
ब्रह्मा च वसवो रुद्रा ह्यादित्याश्चाश्विनौ तथा ।

दिक्पाला मरुतः साध्या गन्धर्वाः प्रमथेश्वराः २५
स्वानि स्वान्यायुधान्यस्यै प्रददुः परितोषिताः ।
रथांश्च तुरगान्नागान्महावेगान्महाबलान् ॥ २६ ॥
पुष्टानरोगानश्रान्तान्क्षुत्तृष्णापरिवर्जितान् ।
ददुर्वज्रोपमाकारानायुधान्सपरिच्छदान् ॥ २७ ॥

श्रीललिताम्बिकापट्टाभिषेकः ॥

अथाभिषेकमातेनुः साम्राज्ये सशिवां शिवाम् ।
अथाकरोद्विमानं तु नाम्ना तु कुसुमाकरम् ॥ २८ ॥
विधाताऽम्लानमाल्यं वै नित्यमच्छेद्यमायुधैः ।
दिविभूम्यन्तरिक्षे च कामगं सुसमृद्धिमत् ॥ २९ ॥
यद्गन्धाघ्राणमात्रेण भ्रान्तिरोगक्षुधार्तयः ।
तत्क्षणादेव नश्यन्ति मनोह्लादकरं शुभम् ॥ ३० ॥
तद्विमानमथारोप्य तावुभौ दिव्यदम्पती ।
चामरव्यजनच्छत्रध्वजयष्टिमनोहरम् ॥ ३१ ॥
वीणावेणुमृदङ्गादि विविधातोद्यवादनैः ।
सेव्यमाना सुरगणैर्निर्गत्य नृपमन्दिरात् ॥ ३२ ॥
यया वीथीं विहारेण शोभयन्ती निजौजसा ।

प्रतिहर्म्याग्रसंस्थाभिरप्सरोभिः सहस्रशः ॥ ३३ ॥
सलाजाक्षतहस्ताभिः पुरस्त्रीभिश्च वर्षिता ।
गाथाभिर्मङ्गलार्थाभिर्वीणावेणुविनिस्वनैः ॥ ३४ ॥
तुष्यन्ती वीथिवीथीषु मन्दं मन्दमथाययौ ।
प्रतिगृह्याप्सरोभिस्तु कृतां नीराजनाविधिम् ॥ ३५
अवरुह्य विमानाग्र्यात्प्रविवेश महासभाम् ।
सिंहासनमधिष्ठाय सहदेवेन शम्भुना ॥ ३६ ॥
यद्यद्वाञ्छन्ति तत्रस्था मनसैव महाजनाः ।
सर्वज्ञा साक्षिपातेन तत्तत्कामानपूरयत् ॥ ३७ ॥
तद्दृष्ट्वा चरितं देव्या ब्रह्मा लोकपितामहः ।
कामाक्षीति तदाभिख्यां ददौ कामेश्वरीति च ॥३८
ववर्ष काले मेघोऽपि पुरे तस्मिंस्तदाज्ञया ।
महार्हाणि च वस्तूनि दिव्यान्याभरणानि च ॥ ३९
चिन्तामणिः कल्पवृक्षाः कमला कामधेनवः ।
प्रतिवेश्मान्ततस्तस्थुः पुरे देव्याज्ञया तदा ॥ ४०॥
तत्सेवैकरसाकारा विमुक्तान्यक्रियागुणाः ।
सर्वकामार्थसंयुक्ता हृष्यन्तः सार्वकालिकम् ॥ ४१

पितामहो हरिश्चैव हरश्चैव च वासवः
अन्ये दिशामधीशाश्च सकला देवतागणाः ॥ ४२ ॥
देवर्षयो नारदाद्या वसिष्ठाद्यास्तपोधनाः ।
गन्धर्वाप्सरसो यक्षा याश्चान्या देवजातयः ॥४३
दिवि भूम्यन्तरिक्षेषु ससंबाधं वसन्ति ये ।
ते सर्वे चाप्यसंबाधं निवसन्तिस्म तत्पुरे ॥ ४४ ॥
इयं सद्वत्सला देवी नान्यस्येत्यखिलाञ्जनान् ।
तोषयामास सततमनुरागेण भूयसा ॥ ४५ ॥
राजा दुहति भूलोके विदुषः सकलेप्सितान् ।
राज्ञी दुदोहाभीष्टानि सर्वभूतलवासिनाम् ॥४६॥
त्रिलोकैकमहीपाले साम्बिके कामशङ्करे ।
दशवर्षसहस्राणि ययुः क्षण इवापरः ॥ ४७ ॥
ततः कदाचिदागत्य नारदो भगवानृषिः ।
प्रणम्य परमां शक्तिमुवाच विनयान्वितः ॥ ४८ ॥
परं ब्रह्म परं धाम पवित्रं परमेश्वरी ।
सदसद्भावसंकल्पविकल्पकलनात्मिका ॥ ४९ ॥
जगदभ्युदयार्थाय व्यक्तभावमुपागता ।

असज्जनविनाशार्थं सज्जनाभ्युदयार्थिनी ॥ ५० ॥
प्रवृत्तिस्तव कल्याणि साधूनां रक्षणाय हि ।
अयं भण्डासुरो देवि बाधते जगतां त्रयम् ॥ ५१ ॥
त्वयैकयैव जेतव्यो न शक्यस्त्वपरैः सुरैः ।
त्वत्सेवैकपरा देवाश्चिरकालमिहोषिताः ॥ ५२ ॥
त्वदाज्ञया गमिष्यन्तु स्वानि स्वानि पुराणि तु ।
अमङ्गलानि शून्यानि मृपार्थानि च सर्वतः ॥ ५३ ॥
एवं विज्ञापिता देवी नारदेनाखिलेश्वरी ।
स्वस्ववासनिवासाय प्रेषयामास चामरान् ॥५४॥
ब्रह्माणं च हरिं शम्भुं वासवादीन्दिशांपतीन् ।
यथार्हं पूजयित्वा तु प्रेषयामास चाम्बिका ५५
अपारयन्तस्तां त्यक्तुमपि संप्रेषिताः सुराः ।
स्वस्वांशैः शिवयोः सेवामादिपित्रोरकुर्वत ॥ ५६ ॥
एतदाख्यानमायुष्यं सर्वमङ्गलकारणम् ।
आविर्भावं महादेव्यास्तस्या राज्याभिषेचनम् ५७
यः प्रातरुत्थितो विद्वान्भक्तिश्रद्धासमन्वितः ।
जपेद्धनसमृद्धः स्यात्सुधासंमितवाग्भवेत् ॥ ५८ ॥

नाशुभं विद्यते तस्य परत्रेह च धीमतः ।
यशः प्राप्नोति विपुलं समानोत्तमतामपि ॥ ५९ ॥
अचला श्रीर्भवेत्तस्य श्रेयश्चैव पदे पदे ।
कदाचिन्न भयं तस्य तेजस्वी वीर्यवान्भवेत् ।
तापत्रयविहीनश्च पुरुषार्थैश्च पूर्यते ॥ ६० ॥
त्रिसन्ध्यं यो जपेन्नित्यं ध्यात्वा सिंहासनेश्वरीम् ।
षण्मासान्महतीं लक्ष्मीं प्राप्नुयाज्जापकोत्तमः ६१

इति श्रीललितोपाख्याने ललिताविवाहादिकथनं
नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ॥ ११ ॥

[ भण्डासुरवधाय देवीप्रस्थानम् ॥ ]

अथ सा जगतां माता ललिता परमेश्वरी ।
त्रैलोक्यकण्टकं भण्डं दैत्यं जेतुं विनिर्ययौ ॥ १ ॥
कृत्वा मार्दलिकारूपं सप्ताम्भोराशयस्तथा ।
प्रभूतमर्दलध्वानैः पूरयामासुरम्बरम् ॥ २ ॥
मृदङ्गा मुरजाश्चैव पटहा ढक्कलिङ्गणाः ।

शेलुका झल्लरीसंघा हुडुक्का हुडुवा घटाः ॥ ३ ॥
आनकाः पणवाश्चैव गोमुखाश्चार्धचन्द्रकाः ।
यवमध्या मुष्टिमध्या मड्डवो डिण्डिमा अपि ॥४॥
झर्झराश्चर्चरीताला तुङ्ग्यालिङ्ग्यप्रभेदकाः ।
ऊर्ध्वकाश्चैव तम्पोट्टा निस्सणा बर्बराः परे ॥ ५ ॥
हुंकाराः काकतुण्डाश्च वाद्यभेदास्तथा परे ।
दध्वनुः शक्तिसेनाभिराहताः समरोद्यमे ॥ ६ ॥
ललितापरमेशान्या अङ्कुशास्त्रात्समुद्गता ।
सम्पत्करीनाम देवी चचाल सह शक्तिभिः ॥ ७ ॥
अनेककोटिमातङ्गतुरङ्गरथपत्तिभिः ।
सेविता तरुणादित्यपाटला सम्पदीश्वरी ॥ ८ ॥
मत्तमुद्दण्डसङ्ग्रामरसिकं शैलसंनिभम् ।
रणकोलाहलं नाम सारुरोह मतङ्गजम् ॥ ९ ॥
तामन्वगाययौ सेना महती घोररावीणी ।
लोलाभिः केतुमालाभिरुल्लिखन्ती घनाघनान् १०
तस्याश्च संपन्नाथायाः पीनस्तनसुसङ्कटः ।
कङ्कटो घनसंनाहो रुरुचे वक्षसि स्थितः ॥ ११ ॥

कम्पमाना खड्गलता व्यरुचत्तत्करे धृता ।
कुटिला कालनाथस्य भ्रुकुटीव भयङ्करा ॥ १२ ॥
उत्पातवातसंपातचालिता इव पर्वताः ।
तामन्वगाययुः कोटिसंख्याताः कुञ्जरोत्तमाः १३
अथ श्रीललितादेव्याः श्रीपाशायुधसंभवा ।
अतित्वरितविक्रान्तिरश्वारूढा चलत्पुरः ॥ १४ ॥
तया सह हयप्रायं सैन्यं हेषातरङ्गितम् ।
व्यचलत्खुरकुद्दालनिर्दारितमहीतलम् ॥ १५ ॥
वनायुजाश्च काम्भोजा आरट्टाः सिन्धुदेशजाः ।
टङ्कणाः पार्वतीयाश्च पारशीकास्तथापरे ॥ १६ ॥
आजानेया घट्टपुरा घरट्टाः कालवन्तिजाः ।
बाह्लिकेया वनोद्भूता गान्धर्वाश्चापरे हयाः ॥१७॥
प्राग्देशजाश्च कैराताः प्रान्तदेशोद्भवा अपि ।
विनीताः साधुवोढारो वेगिनः स्थिरचेतसः॥१८॥
स्वामिचित्तविशेषज्ञा महायुद्धसहिष्णवः ।
लक्षणैर्बहुभिर्युक्ता जितक्रोधा जितश्रमाः ॥ १९॥
पञ्चधारासु शिक्षाढ्या विनीतार्धपुलायिताः ।

फालशुक्तिश्रिया युक्ताः श्वेतशुक्तिसमन्विताः २०
देवपद्मं देवमणिं देवस्वस्तिकमेव च ।
अर्धस्वस्तिकशुक्तिं च पुंस्वरं पुष्पदण्डिकाम् ॥२१॥
एतानि शुभलक्ष्माणि जयराज्यप्रदानि च ।
वहन्तो वातजवना वाजिनस्तां समन्वयुः ॥ २२ ॥
अपराजितनामानमतितेजस्विनं चलम् ।
अत्यन्तोत्तुङ्गवर्ष्माणं कलिकाविलसन्मुखम्॥२३॥
पार्श्वद्वयेऽपि पतितस्फुरत्केसरमण्डलम् ।
स्थूलवालधिविक्षेपक्षिप्यमाणपयोधरम् ॥ २४ ॥
जङ्घाकाण्डसमुन्नद्धमणिकिङ्किणिभासुरम् ।
वादयन्तमिवोच्चण्डैः खुरनिष्ठुरकुट्टनैः ॥ २५ ॥
भूमण्डलमहावाद्यं विजयस्य समृद्धये ।
हेपमाणं प्रतिमुहुः संदर्शितगतिक्रमम् ॥ २६ ॥
आलोलचामरव्याजाद्वहन्तं पक्षती इव ।
भाण्डैर्मनोहरैर्युक्तं घर्घरीजालमण्डितम् ॥ २७ ॥
हेषाघोषस्य कपटाद्धुङ्कुर्वाणमिवासुरान् ।
अश्वारूढा महादेवी समारूढा हयं ययौ ॥ २८ ॥

चतुर्भिर्बाहुभिः पाशमङ्कुशं वेत्रमेव च ।
हयवल्गां च दधती बहुविक्रमशालिनी ॥ २९ ॥
तरुणादित्यसङ्काशा ज्वलत्कान्तितरङ्गिणी ।
संचचाल हयारूढा नर्तयन्तीव वाजिनम् ॥३०॥
अथ श्रीदण्डनाथाया निर्याणपटहध्वनिः ।
उद्दण्डसिन्धुनिध्वानश्चकार बधिरं जगत ॥ ३१ ॥
वज्रबाणैः कठोरैश्च भिन्दन्त्यः ककुभो दश ।
अत्युद्दण्डभुजोष्माणः शक्तयः काश्चिदुत्थिताः ३२
काश्चिच्छ्रीदण्डनाथायाः सेनानासीरसङ्गताः ।
खड्गं फलकमादाय पुप्लुवुश्चण्डशक्तयः ॥ ३३ ॥
अत्यन्तसैन्यसंबाधं वेत्रसंताडनाशतैः ।
निवारयन्त्यो वेत्रिण्यो व्यचलञ्छक्तयः शतम् ३४
अथ तुङ्गध्वजश्रेणीर्महिपाङ्का मृगाङ्किताः ।
सिंहाङ्काश्चैव बिभ्राणाः शक्तयो व्यचलन्पुनः ३५
तदनु श्रीदण्डनाथा श्वेतछत्रकदम्बकैः ।
स्फुरत्कराः प्रचलिताः शक्तयः काश्चिदुद्धताः ३६
दण्डनाथाविनिर्याणे संख्यातीतैः सितप्रभैः ।

छत्रैर्गगनमारेजे निःसंख्यशशिमण्डलम् ॥ ३७ ॥
अन्योन्यसक्तैर्धवलच्छत्रैरन्तर्घनीभवत् ।
तिमिरं नुनुदे भूयस्तत्काण्डमणिरोचिषा ॥ ३८ ॥
वज्रप्रभायुधगणच्छायापूरितदिङ्मुखाः ।
तालवृन्ताः शतविधाः क्रोडमुख्यो बलेऽचलन् ३९
चण्डोच्चण्डादयस्तीव्रा भैरवाः शूलपाणयः ।
ज्वलत्केशपिशङ्गाभास्तटिद्भासुरदिङ्मुखाः ॥४० ॥
दहन्त इव दैत्यौघांस्तीक्ष्णैस्तीक्ष्णाक्षिवह्निभिः ।
प्रचेलुर्दण्डनाथायाः सेनानासीरधाविनः ॥ ४१॥
अथ पोत्रिमुखी देवी समानाकृतिभूषणाः ।
तत्समानायुधकरास्तत्समानस्ववाहनाः ॥ ४२ ॥
तीक्ष्णदंष्ट्रा विनिष्ठ्यूतवह्निधूमायिताम्बराः ।
तमालश्यामलाकाराः कपिलक्रूरलोचनाः ॥ ४३ ॥
सहस्रमहिषारूढाः प्रचेलुः सूकराननाः ।
अथ श्रीदण्डनाथा च किरिचक्ररथोत्तमात् ॥ ४४
अवरुह्य महासिंहमारुरोह स्ववाहनम् ।
वज्रघोषमिति ख्यातं धुतकेसरमण्डलम् ॥ ४५ ॥

व्यात्तास्यं विकटाकारं विशङ्कटविलोचनम् ।
दंष्ट्राकटकटाकारबधिरीकृतदिङ्मुखम् ॥ ४६ ॥
आदिकूर्मकठोरास्थिकर्परप्रतिमैर्नखैः ।
पिषन्तमिव भूचक्रमापातालनिमज्जिभिः ॥ ४७ ॥
योजनत्रयमुत्तुङ्गं वेगादुद्धतवालधिम् ।
सिंहवाहनमारुह्य व्यचलद्दण्डनायिका ॥ ४८ ॥
तस्यामसुरसंहारप्रवृत्तायां ज्वलत्क्रुधि ।
उद्वेगं बहुलं प्राप त्रैलोक्यं सचराचरम् ॥ ४९ ॥
किमसौ धक्ष्यति रुषा विश्वमद्यैव पोत्रिणी ।
किंवा मुसलघातेन भूमिं द्वेधा करिष्यति ।
अथवा हलनिर्घातैः क्षोभयिष्यति वारिधीन् ५०
इति त्रस्तमनाः सर्वो गगने नाकिनां गणः ।
दूरद्रुतविमानाश्च सत्रासात्तामुदैक्षत ॥ ५१ ॥
ववन्दिरे च ते देवा बद्धाञ्जलिपुटाश्चिताः ।
मुहुर्द्वादशनामानि कीर्तयन्तो नभःस्थले ॥ ५२ ॥

अगस्त्यः ॥

कानि द्वादशनामानि तस्या देव्या वद प्रभो ।

अश्वानन महाप्राज्ञ येषु मे कौतुकं महत् ॥ ५३ ॥

हयग्रीवः ॥

शृणु द्वादश नामानि तस्या देव्या घटोद्भव ।
येषामाकर्णनामात्रात्प्रसन्ना सा भविष्यति ॥ ५४ ॥
पञ्चमी दण्डनाथा च सङ्केता समयेश्वरी ।
तथा समयसङ्केता वाराही पोत्रिणी शिवा ॥ ५५ ॥
वार्ताली च महासेनाप्याज्ञाचक्रेश्वरी तथा ।
अरिघ्नी चेति संप्रोक्तं नामद्वादशकं मुने ॥ ५६ ॥
नामद्वादशधाभिख्यवज्रपञ्जरमध्यगः ।
सङ्कटे दुःखमाप्नोति न कदाचन मानवः ॥ ५७ ॥
एतैर्नामभिरभ्रस्थाः सङ्केतां बहु तुष्टुवुः ।
तेषामनुग्रहार्थाय प्रचचाल च सा पुनः ॥ ५८ ॥
अथ सङ्गीतयोगिन्या मन्त्रिराज्ञीपदस्पृशः ।
निर्याणसूचनकरी दिवि दध्वान काहली ॥ ५९ ॥
शृङ्गारप्रायभूषाणां शाद्वलश्यामलत्विषाम् ।
वीणासनाथपाणीनां शक्तीनां निर्ययौ बलम् ६०
काश्चिद्गायन्ति नृत्यन्ति मत्तकोकिलनिस्वनाः ।

काश्चित्कादम्बरीपानकषायितविलोचनाः ॥ ६१ ॥
बन्दिमागधरूपाश्च काश्चिदन्याः कलस्वनाः ।
वीणावेणुमृदङ्गाढ्याः सविलासपदक्रमाः ॥ ६२ ॥
प्रचेलुः शक्तयः श्यामा हर्षयन्तो जगज्जनान् ६३
मयूरवाहाः कतिचित्कतिचिद्धंसवाहनाः ।
कतिचिन्नकुलारूढाः कतिचित्कोकिलासनाः ६४
सर्वाश्च श्यामलाकाराः काश्चित्कर्णिरथस्थिताः ।
कदम्बमधुमत्ताश्च काश्चिदारूढसैन्धवाः ।
मन्त्रिनाथां नमस्कृत्य संप्रचेलुः पुरःपुरः ॥ ६५ ॥
अथारुह्य समुत्तुङ्गं गेयचक्रं महारथम् ।
बालार्कवर्णकवचा मदारुणविलोचना ॥ ६६ ॥
ईषत्प्रस्वेदकणिका मनोहरमुखाम्बुजा ।
प्रेषयन्ती कटाक्षेण किंचिद्भ्रूवल्लिताण्डवैः ॥ ६७ ॥
समस्तमपि तत्सैन्यं शक्तीनामुद्धतोद्धतम् ।
पिंछत्रिकोणचक्रेण बिरुदेन महीयसा ॥ ६८ ॥
असामान्येन चान्यासां शक्तीनामुज्वलोदया ।
निर्जगाम घनश्यामा श्यामला मन्त्रिनायिका ६९

तां तुष्टुवुः षोडशभिर्नामभिर्नाकवासिनः ।
तानि षोडश नामानि समाकर्णय कुम्भज ॥७०॥
सङ्गीतयोगिनी श्यामा श्यामला मन्त्रिनायिका ।
मन्त्रिणी सचिवेशानी प्रधानेशी शुकप्रिया ॥ ७१ ॥
वीणावती वैणिकी च मुद्रिणी प्रियकप्रिया ।
नीपप्रिया कदम्बेशी कदम्बवनवासिनी ॥ ७२ ॥
सदामदा च नामानि षोडशैतानि कुम्भज ॥७३॥
एतैर्यः सचिवेशानीं सकृत्स्तौति शरीरवान् ।
तस्य त्रैलोक्यमखिलं वशे तिष्ठत्यसंशयः ॥ ७४ ॥
मन्त्रिनाथा यत्र यत्र कटाक्षं विकिरत्यसौ ।
तत्रतत्र गताशङ्कं शक्तिसैन्यं पतत्यलम् ॥ ७५ ॥
ललितापरमेशान्या राज्यचर्चा तु यावती ।
शक्तीनामपि चर्चाया सा सर्वा तद्वशं वदा॥७६॥
अथ सङ्गीतयोगिन्याः करस्थशुकपोतकात् ।
निर्जगाम धनुर्वेदो वहन्सज्यं शरासनम् ॥ ७७ ॥
चतुर्बाहुयुतो वीरस्त्रिशिरास्त्रिविलोचनः ।
नमस्कृत्य प्रधानेशीमिदमाह स भक्तिमान् ॥७८॥

देवि भण्डासुरेन्द्रस्य युद्धाय त्वं प्रवर्तसे ।
अतस्तव मया साह्यं कर्तव्यं मन्त्रिनायिके ॥७९॥
चित्रजीवमिदं नाम्ना कोदण्डं सुमहत्तरम ।
गृहाण जगतामम्ब दानवानां निबर्हणम् ॥८०॥
इमौ चाक्षयबाणाढ्यौ तूणीरौ स्वर्णचित्रितौ ।
गृहाण दैत्यनाशाय ममानुग्रहहेतवे ॥ ८१ ॥
इति प्रणम्य शिरसा धनुर्वेदेन भक्तितः ।
अर्पितं चापतूणीरं जग्राह प्रियकप्रिया ॥ ८२ ॥
चित्रजीवं महच्चापमादाय च शुकप्रिया ।
विष्फारं जनयामास मौर्वीमुद्धाट्य भूरिशः ८३
सङ्गीतयोगिनीचापध्वनिना पूरितं जगत् ।
नाकालयानां च मनोनयनानन्दसंपदा ॥ ८४ ॥
यन्त्रिणी तन्त्रिणी चैव द्वे तस्याः परिचारिके ।
शुकं वीणां च शिरसा वहन्त्यौ परिचेरतुः ॥८५॥
आलोलवलयक्काणवर्धिष्णुगुणनिस्वनम् ।
धारयन्ती वपुः श्यामा चकारारिमनोज्वरम् ८६
चित्रजीवशरासेन भूषिता गीतयोगिनी ।

कादम्बिनीव रुरुचे कन्दलच्छक्रकार्मुका ॥८७॥
कालीकटाक्षवत्तीक्ष्णो नृत्यद्भुजगसंनिभः ।
उल्लसन्दक्षिणे पाणौ विलंलास शिलीमुखः ॥८८॥
गेयचक्ररथारूढां तां पश्चाच्च सिषेविरे ।
तद्वच्छ्यामलशोभाढ्या देव्यो बाणधनुर्धराः८९॥
सहस्राक्षौहिणीसंख्यास्तीव्रवेगा मदालसाः ।
आपूरयन्त्यः ककुभः कलैः किलकिलारवैः ॥९०॥

अथ चक्रराजरथनायिकाश्रिता
ज्वलिताङ्कुशा फणिसमानपाशभृत् ।
कलनिक्वणद्वलयमैक्षवं धनु-
र्दधती प्रदीप्तकुसुमेपुपञ्चका ॥ ९१ ॥

उदयत्सहस्रमहसां सहस्रतो-
ऽप्यतिपाटलं निजवपुः प्रभाझरम् ।
किरती दिशासु वदनस्य कान्तिभिः
सृजतीव चन्द्रमयमभ्रमण्डलम् ॥ ९२ ॥

दशयोजनायतिमता जगत्त्रयी-
मभिवृण्वता विशदमौक्तिकात्मना ।

धवलातपत्रवलयेन भासुरा
शशिमण्डलस्य सवितामुपेयुषा ॥ ९३ ॥
अभिवीजिता च मणिकाण्डशोभिना
विजयादिमुख्यपरिचारिकाजनैः ।
नवचन्द्रिकालहरिकान्तिकन्दली-
चतुरेण चामरचतुष्टयेन च ॥ ९४ ॥
शक्त्यैकराज्यपदवीमभिसूचयन्ती
साम्राज्यचिह्नशतमण्डितसैन्यदेशा ।
सङ्गीतवाद्यरचनाभिरथामराणां
संस्तूयमानविभवा विशदप्रकाशा ॥९५॥
वाचामगोचरमगोचरमेव बुद्धे-
रीदृक्तया न कथनीयमनन्यतुल्यम् ।
त्रैलोक्यगर्भपरिपूरितशक्तिचक्र-
साम्राज्यसंपदभिमानमभिस्पृशन्ती ॥९६॥
आबद्धभक्तिपिशुनाञ्जलिशेखराणा-
मारादहंप्रथमिकाकृतसेवनानाम् ।
ब्रह्मेन्द्ररुद्रहरिमुख्यसुरोत्तमानां
वक्त्राणि वर्धितनुतीनि कटाक्षयन्ती ॥९७॥

उद्दीप्तपुष्पशरपञ्चकतः समुत्थै-
र्ज्योतिर्मयं त्रिभुवनं महसा दधानैः ।
विद्युत्समद्युतिभिरप्सरसां समूहै-
र्विक्षिप्यमाणजयमङ्गललाजवर्षा ॥ ९८ ॥
कामेश्वरीप्रभृतिभिः कमनीयभाभिः
सङ्ग्रामवेषरचनासु मनोहराभिः ।
दीप्तायुधद्युतितिरस्कृतभास्कराभि-
र्नित्याभिरङ्घ्रिसविधे समुपास्यमाना ॥९९॥
श्रीचक्रनामतिलकं दशयोजनाति-
तुङ्गध्वजोल्लिखितमेघकदम्बमुच्चैः ।
तीव्राभिरावरणशक्तिपरम्पराभि-
र्युक्तं रथं समरकर्मणि चालयन्ती ॥१००॥
पञ्चाधिकैर्विंशतिनामरत्नैः
प्रपञ्चपापप्रशमाय दक्षैः ।
संस्तूयमाना ललिता मरुद्भिः
सङ्ग्राममुद्दिश्य समुच्चचाल ॥ १०१ ॥
अगस्त्यः ॥
वाजिवक्त्रमहाबुद्धे पञ्चविंशतिनामभिः ।

ललितापरमेशान्या देहि कर्णरसायनम् ॥१०२॥

हयग्रीवः ॥

सिंहासनेशी ललिता महाराज्ञी वराङ्कुशा ।
चापिनी त्रिपुरा चैव महात्रिपुरसुन्दरी ॥१०३॥
सुन्दरी चक्रनाथा च सम्राज्ञी चक्रिणी तथा ।
चक्रेश्वरी महादेवी कामेशी परमेश्वरी ॥ १०४ ॥
कामराजप्रिया कामकोटिका चक्रवर्तिनी ।
महाविद्या शिवानङ्गवल्लभा सर्वपाटला ॥१०५॥
कुलनाथाम्नायनाथा सर्वाम्नायनिवासिनी ।
शृङ्गारनायिका चेति पञ्चविंशतिनामभिः १०६॥
स्तुवन्ति ये महाभागां ललितां परमेश्वरीम् ।
ते प्राप्नुवन्ति सौभाग्यमष्टौ सिद्धीर्महद्यशः ॥१०७
इति प्रचण्डसंरम्भं चालयन्ती महद्बलम् ।
भण्डासुरं प्रति क्रुद्धा चचाल ललिताम्बिका १०८॥

॥ इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे ललितोपाख्याने एकादशोऽध्यायः ॥ ११ ॥

# द्वादशोऽध्यायः ॥ १२ ॥

## ॥ चक्रराजरथपर्वदेवतावर्णनम् ॥

अगस्त्यः ॥

चक्रराजरथेन्द्रस्य याः पर्वणि समाश्रिताः ।
देवताः प्रकटामुख्यास्तासामाख्याश्च मे वद ॥१॥
संख्याश्च तासामखिलान्वर्णभेदांश्च शोभनान् ।
आयुधानि च दिव्यानि कथयस्व हयानन ॥ २ ॥

हयग्रीवः ॥

नवमं पर्व दीप्तस्य रथस्य समुपाश्रिताः ।
दश प्रोक्ताः सिद्धिदेव्यस्तासां नामानि मच्छृणु ३॥
अणिमा महिमा चैव लघिमा गरिमा तथा ।
ईशिता वशिता चैव प्राप्तिः सिद्धिश्च सप्तमी ॥४॥
प्राकाम्या मुक्तिसिद्धिश्च सर्वकामाभिधा परा ।
एता देव्यश्चतुर्बाहा जपाकुसुमसन्निभाः ॥ ५ ॥
चिन्तामणिं कपालं च त्रिशूलं सिद्धिकज्जलम् ।
दधाना दयया पूर्णा योगिभिश्च निषेविताः ॥६॥
तत्र पर्वोर्ध्वभागे च ब्राह्म्याद्या अष्ट शक्तयः ।

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥७॥
वाराही चैव माहेन्द्री चामुण्डा चैव सप्तमी ।
महालक्ष्मीरष्टमी च द्विभुजाः शोणविग्रहाः ।
कपालमुत्पलं चैव बिभ्राणा रक्तवाससः ॥ ८ ॥
अथवान्यप्रकारेण केचिद्ध्यानं प्रचक्षते ।
ब्रह्मादिसदृशाकारा ब्रह्मादिसदृशायुधाः ॥ ९ ॥
ब्रह्मादीनां परं चिह्नं धारयन्त्यः प्रकीर्तिताः ।
तस्याप्यूर्ध्वस्थानगता मुद्रादेव्यो महत्तराः ॥१०॥
मुद्राविरचनायुक्तैर्हस्तैः कमलकान्तिभिः ।
दाडिमीपुष्पसङ्काशाः पीताम्बरमनोहराः ॥११॥
चतुर्भुजा भुजद्वन्द्वधृतचर्मकृपाणिकाः ।
मदरक्तविलोलाक्ष्यस्तासां नामानि मच्छृणु ॥१२॥
सर्वसंक्षोभिणी चैव सर्वविद्राविणी तथा ।
सर्वाकर्षिणिका मुद्रा तथा सर्ववशंकरी ॥ १३ ॥
सर्वोन्मादनमुद्रा च षष्ठी सर्वमहाङ्कुशा ।
सर्वखेचरमुद्रा च सर्वबीजा तथापरा ॥ १४ ॥
सर्वयोनिश्च नवमी तथा सर्वत्रिखण्डिका ।

सिद्धिब्राह्मयादिमुद्राश्च ह्येताः प्रकटशक्तयः ॥१५॥
भण्डासुरस्य संहारं कर्तुं चक्ररथे स्थिताः ।
या गुप्ताख्याः पूर्वमुक्तास्तासां नामानि मच्छृणु १६
कामाकर्षिणिका चैव बुद्ध्याकर्षिणिका कला ।
अहङ्काराकर्षिणी च शब्दाकर्षिणिका कला ॥१७॥
स्पर्शाकर्षिणिका नित्या रूपाकर्षिणिका कला ।
रसाकर्षिणिका चैव गन्धाकर्षिणिका कला ॥१८॥
चित्ताकर्षिणिका चैव धैर्याकर्षिणिका कला ।
स्मृत्याकर्षिणिका नित्या नामाकर्षिणिका कला १९
बीजाकर्षणिका नित्या चात्माकर्षिणिका कला ।
अमृताकर्षिणी नित्या शरीराकर्षिणी कला ॥२०॥
एताः षोडश शीतांशोः कलारूपाश्च शक्तयः ।
अष्टमं पर्व संप्राप्ता गुप्ता नाम्ना प्रकीर्तिताः॥२१॥
विद्रुमद्रुमसङ्काशा मन्दप्रहसिताननाः ।
चतुर्भुजास्त्रिणेत्राश्च चन्द्रार्धमुकुटोज्ज्वलाः ॥२२॥
चापबाणौ चर्मखड्गौ दधाना दिव्यकान्तयः ।
भण्डासुरवधार्थाय प्रवृत्ताः कुम्भसंभव ॥ २३ ॥

सायन्तनज्वलद्दीपप्रख्ये चक्ररथस्य तु ।
सप्तमे पर्वणि कृतावासा गुप्ततराभिधाः ॥ २४ ॥
अनङ्गशक्तयस्त्वष्टौ तासां नामानि मच्छृणु २५॥
अनङ्गकुसुमानङ्गमेखला च द्वितीयका ।
अनङ्गमदनाऽनङ्गमदनातुरया सह ॥ २६ ॥
अनङ्गरेखा चानङ्गवेगाऽनङ्गाङ्कुशापि च ।
अनङ्गमालिन्यपरा एता देव्यो जपात्विषः ॥२७॥
इक्षुचापं पुष्पशरान्पुष्पकन्दुकमुत्पलम् ।
बिभ्रत्यो दभ्रविक्रान्तिशालिन्यो ललिताज्ञया २८
भण्डासुरं प्रति क्रुद्धाः प्रज्वलन्त्य इव स्थिताः ।
चक्रराजरथेन्द्रस्य षष्ठं पर्व समाश्रिताः ॥ २९ ॥
सर्वसंक्षोभिणीमुख्याः संप्रदायाख्यया युताः ।
वेणीकृतकचस्तोमाः सिन्दूरतिलकोज्ज्वलाः ।
अतितीव्रस्वभावाश्च कालानलसमत्विषः ॥ ३० ॥
वह्निचापं वह्निबाणं वह्निरूपमसिं तथा ।
वह्निचक्राख्यफलकं दधाना दीप्तविग्रहाः ॥ ३१ ॥
असुरेन्द्रं प्रति क्रुद्धाः कामभस्मसमुद्भवम् ।

आज्ञाशक्तय एवैता ललिताया महौजसः ॥ ३२॥
सर्वसंक्षोभिणी चैव सर्वविद्राविणी तथा ।
सर्वाकर्षिणिका शक्तिः सर्वाह्लादिनिका तथा॥३३॥
सर्वसंमोहिनी शक्तिः सर्वस्तम्भनशक्तिका ।
सर्वजृम्भणशक्तिश्च तथा सर्ववशंकरी ॥ ३४ ॥
सर्वरञ्जनशक्तिश्च सर्वोन्मादनशक्तिका ।
सर्वार्थसाधनी शक्तिः सर्वसंपत्तिपूरणी ॥ ३५ ॥
सर्वमन्त्रमयी शक्तिः सर्वद्वन्द्वक्षयंकरी ।
इत्येवं संप्रदायानां नामानि कथितानि वै ॥३६॥
रथपञ्चमपर्वस्थाः कुलोत्तीर्णा इति स्मृताः ।
ताश्च स्फटिकसंकाशाः परशुं पाशमेव च ॥३७॥
गदां घण्टां मणिं चैव दधाना दीप्तविग्रहाः ।
देवद्विषमभिक्रुद्धा भ्रुकुटीकुटिलाननाः ॥ ३८ ॥
एतासामपि नामानि समाकर्णय कुम्भज ॥३९॥
सर्वसिद्धिप्रदा देवी सर्वसंपत्प्रदा पुनः ।
सर्वप्रियंकरी देवी सर्वमङ्गलकारिणी ॥ ४० ॥
सर्वकामप्रदा देवी सर्वदुःखविमोचनी ।

सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी ॥ ४१ ॥
सर्वाङ्गसुन्दरी देवी सर्वसौभाग्यदायिनी ।
दशैताः कथिता देव्यो दयया पूरिताशयाः॥४२॥
चक्रे तुरीयपर्वस्था मुक्तागौरसमत्विपः ।
निगर्भयोगिनी नाम्ना प्रथिता दश कीर्तिताः॥४३॥
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदायिनी ।
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ॥४४॥
सर्वाधारस्वरूपा च सर्वपापहरा तथा ।
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ।
दशमी देवता ज्ञेया सर्वेप्सितफलप्रदा ॥ ४६ ॥
एताश्चतुर्भुजा ज्ञेया वज्रं शक्तिं च तोमरम् ।
चक्रं चैवाभिबिभ्राणा भण्डासुरवधोद्यताः ॥४७॥
अथ चक्ररथेन्द्रस्य तृतीयं पर्व संश्रिताः ।
रहस्ययोगिनीनाम्ना प्रख्याता वागधीश्वराः ॥४८॥
रक्ताशोकप्रसूनाभा बाणकार्मुकपाणयः ।
कवचच्छन्नसर्वाङ्ग्यो वीणापुस्तकशोभिताः॥४९॥
वशिनी चैव कामेशी मोदिनी विमला तथा ।

अरुणा च जयिन्याख्या सर्वेशी कौलिनी तथा ।
अष्टावेताः स्मृता देव्यो दैत्यसंहारमृत्यवः ॥५०॥
अथ चक्ररथेन्द्रस्य द्वितीयं पर्व संश्रिताः ।
तिस्रस्त्रिपीठनिलया अष्टबाहुसमन्विताः ॥ ५१ ॥
चापबाणौ पानपात्रं मातुलुङ्गं कृपाणिकाम् ।
फलकं नागपाशं च घण्टां चैव महाध्वनिम् ।
बिभ्राणा मदिरामत्ता अतिपूर्वरहस्यकाः ॥ ५२ ॥
कामेशी चैव वज्रेशी भगमालिन्यथापरा ।
तिस्र एताः स्मृता देव्यो भण्डशासनतत्पराः५३॥
ललितासममाहात्म्या ललितासमतेजसः ।
एतास्तु नित्यं श्रीदेव्या अन्तरङ्गाः प्रकीर्तिताः ५४
अथानन्दमहापीठे रथमध्यमपर्वणि ।
परितो रचितावासाः प्रोक्ताः पञ्चदशापराः ५५॥
तिथिनित्याः कालरूपा विश्वं व्याप्यैव संस्थिताः ।
भण्डासुरादिदैत्येषु प्रारब्धभ्रुकुटीघनाः ॥ ५६ ॥
देव्या समनिजाकारा देवीसमनिजायुधाः ।
जगतामुपकाराय वर्तमाना युगे युगे ॥ ५७ ॥

तासां नामानि मत्तस्त्वमवधारय कुम्भज ॥५८॥
कामेशी भगमाला च नित्यक्लिन्ना तथैव च ।
भेरुण्डावह्निवासिन्यौ महावज्रेश्वरी तथा ॥५९॥
दूती च त्वरिता देवी नवमी कुलसुन्दरी ।
नित्या नीलपताका च विजया सर्वमङ्गला ।
ज्वालामालिनिका चित्रा दशपञ्च च कीर्तिताः ६०
एताभिः सहिता देवी सदा सेवकबुद्धिभिः ।
दुष्टं भण्डासुरं जेतुं निर्ययौ ललितेश्वरी ॥ ६१ ॥

[ गीतिचक्ररथपर्वदेवतावर्णनम् ]

मन्त्रिनाथा महाचक्रे गीतिचक्ररथोत्तमे ।
सप्तपर्वाणि चोक्तानि तत्र देव्यश्च ताः शृणु ६२॥
गेयचक्ररथे पर्वमध्यपीठनिकेतना ।
सङ्गीतयोगिनी प्रोक्ता श्रीदेव्या अतिवल्लभा ॥६३॥
तथैव प्रथमं पर्व मन्त्रिण्यास्तु निवासभूः ॥ ६४॥
अथ द्वितीयपर्वस्था गेयचक्ररथोत्तमे ।
रतिः प्रीतिर्मनोजा च वीणाकार्मुकपाणयः ॥६५॥
तमालश्यामलाकारा दानवोन्मर्दनक्षमाः ।

तृतीयं पर्वसंरूढा मनोभूबाणदेवताः ॥ ६६ ॥
द्राविणी शोपिणी चैव बन्धिनी मोहिनी तथा ।
उन्मादिनी च पञ्चैतां दीप्तकार्मुकपाणयः ॥६७॥
तत्र पर्वण्यधस्तात्तु वर्तमाना महौजसः ।
कामराजश्च कन्दर्पो मन्मथो मकरध्वजः ॥६८॥
मनोभवः पञ्चमः स्यादेते त्रैलोक्यमोहनाः ।
कस्तूरीतिलकोल्लासिफाला मुक्ताविभूपणाः ॥६९॥
कवचच्छन्नसर्वाङ्गाः पलाशप्रसवत्विषः ।
पञ्चकामा इमे प्रोक्ता भण्डासुरवधार्थिनः ॥७०॥
गेयचक्ररथेन्द्रस्य चतुर्थं पर्व संश्रिताः ।
ब्राह्मीमुख्यास्तु पूर्वोक्ताश्चण्डिका त्वष्टमी परा ७१
तत्र पर्वण्यधस्थास्तु लक्ष्मीश्चैव सरस्वती ।
रतिः प्रीतिः कीर्तिशान्ती पुष्टिस्तुष्टिश्च शक्तयः७२
एताश्च क्रोधरक्ताक्ष्यो दैत्यं प्रति महाबलाः ।
कुन्तचक्रधराः प्रोक्ताः कुमार्यः कुम्भसंभव॥७३॥
पञ्चमं पर्व संप्राप्ता वामाद्याः षोडशापराः ।
गीतिचक्ररथेन्द्रस्य तासां नामानि मच्छृणु ॥७४॥

वामा ज्येष्ठा च रौद्री च शान्तिः श्रद्धा सरस्वती ।
क्रियाशक्तिश्च लक्ष्मीश्च तुष्टिश्चैव तु मोहिनी॥७५॥
तथा प्रमथिनी चाश्वासिनी वीचिस्तथैव च ।
विद्युन्मालिन्यथ सुरा नन्दाथो नागबुद्धिका ७६
एतास्तु कुरुविन्दाभा जगत्क्षोभणलम्पटाः ।
महासमरसन्नाहमादधानाः पदे पदे ॥ ७७ ॥
वज्रकङ्कटसंछन्नाः कठोराट्टहसोज्वलाः ।
वज्रदण्डौ शतघ्नीं च संबिभ्राणा मुसुण्ठिकाम्७८
अथ गीतिरथेन्द्रस्य षष्ठं पर्व समाश्रिताः ।
असिताङ्गप्रभृतयो भैरवाः शस्त्रभीषणाः ॥ ७९ ॥
त्रिशिखं पानपात्रं च बिभ्राणा नीलवर्चसः ।
असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तश्च भैरवः॥८०॥
कपाली भीषणश्चैव संहारश्चाष्ट भैरवाः ।
अथ गीतिरथेन्द्रस्य सप्तमं पर्व संश्रिताः ॥ ८१ ॥
मातङ्गी सिद्धलक्ष्मीश्च महामातङ्गिका तथा ।
महती सिद्धलक्ष्मीश्च शोणा बाणधनुर्धराः ॥८२॥
तस्यैव पर्वणोऽधस्ताद्गणपः क्षेत्रपस्तथा ।

दुर्गाम्बा बटुकश्चैव सर्वे ते शस्त्रपाणयः ॥ ८३ ॥
तत्रैव पर्वणोऽधस्ताल्लक्ष्मीश्चैव सरस्वती ।
शङ्खपद्मनिधी चैव ते सर्वे शस्त्रपाणयः ।
लोकद्विषं प्रति क्रुद्धा भण्डं चण्डपराक्रमम्॥८४॥
शक्रादयश्च विष्णवन्ता दश दिक्चक्रनायकाः ।
शक्तिरूपास्तत्र पर्वण्यधस्तात्कृतसंश्रयाः ॥ ८५ ॥
वज्रं शक्तिं कालदण्डमसिं पाशं ध्वजं तथा ।
गदां त्रिशूलं दर्भास्त्रं चक्रं च दधतस्त्वमी ॥८६॥
सेवन्ते मन्त्रिनाथां तां नित्यं भक्तिपरायणाः ।
भण्डासुरादिदुर्दान्तान्विजेतुं विश्वकण्टकान् ॥८७
मन्त्रिनाथाश्रयद्वारा ललिताज्ञापनोत्सुकाः ।
गीतिचक्ररथेन्द्रस्य दिक्पालाः संश्रयं दधुः ॥८८॥
सर्वेषां चैव देवानां मन्त्रिणी द्वारतः कृता ।
विज्ञापना महादेव्याः कार्यसिद्धिं प्रयच्छति ॥८९
राज्ञि विज्ञापना चेत्स्यात्प्रधानद्वारतः कृता ।
तदा खलु फलप्राप्तिः सेवकानां प्रजायते ॥९०॥
अन्यथा कुत एतेषां सामर्थ्यं ज्वलितौजसः ।

अप्रधृष्यप्रभावायाः श्रीदेव्या उपसर्पणे ॥ ९१ ॥
सा हि संगीतविद्येशी श्रीदेव्या अतिवल्लभा ।
नातिलङ्घयति क्वापि तदुक्तं कार्यसिद्धिषु ॥ ९२ ॥
श्रीदेव्याः शक्तिसाम्राज्ये सर्वकर्माणि मन्त्रिणी ।
अकर्तुमन्यथाकर्तुं कर्तुं चैव प्रगल्भते ॥ ९३ ॥
तस्मात्सर्वेऽपि दिक्पालाः श्रीदेव्या जयकाङ्क्षिणः ।
तस्याः प्रधानभूतायाः सेवामेव वितन्वते ॥९४॥
इति श्रीललितादेव्याश्चक्रराजरथोत्तमे ।
पर्वस्थितानां देवीनां नामानि कथितान्यलम्॥९५
भण्डासुरस्य संहारे तासां दिव्यायुधान्यपि ।
प्रोक्तानि गेयचक्रस्य पर्वदेव्यश्च कीर्तिताः ॥९६॥
इमानि पर्वदेवीनां नामान्याकर्णयन्ति ये ।
सर्वपापविनिर्मुक्ता युद्धे विजयिनो नराः ॥ ९७॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने द्वादशोऽध्यायः ॥ १२ ॥

# त्रयोदशोऽध्यायः ॥ १३ ॥

[ किरिचक्ररथपर्वदेवतावर्णनम् ॥ ]

हयग्रीवः ॥

किरिचक्ररथेन्द्रस्य पञ्चपर्व समाश्रिताः ।
देवताश्च शृणु प्राज्ञ नाम यच्छृण्वतां जयः ॥१॥
प्रथमं पर्व बिन्द्वाख्यं संप्राप्ता दण्डनायिका ।
सा तत्र जगदुद्दण्डकण्टकव्रातघस्मरी ॥ २ ॥
नानाविधास्त्रज्वालाभिर्नर्तयन्ती जयश्रियम् ।
उद्दण्डपोत्रनिर्घातनिर्भिण्णोद्धतदानवा ॥ ३ ॥
दंष्ट्राबालमृगाङ्कस्य विहासनविभावरी ।
प्रावृषेण्यपयोवाहव्यूहनीलवपुर्लता ॥ ४ ॥
किरिचक्ररथेन्द्रस्य सालङ्कारायते सदा ।
पोत्रिणी पुत्रिताशेषविश्वा वार्तालिकाम्बिका॥५॥
तस्यैव रथनाथस्य द्वितीयं पर्व संश्रिताः ।
जृम्भिनी मोहिनी चैव स्तम्भिनी तिस्र एवच ।
उत्फुल्लदाडिमप्रख्याः सर्वदानवमर्दनाः ॥ ६ ॥
मुसलं च हलं हालापात्रं फणिमहागुणम् ।

ज्वलन्माणिक्यवलयैर्बिभ्राणाः पाणिभिर्निजैः॥७॥
अतिदीप्तकरालाक्षिज्वालाभिर्दैत्यसैनिकान् ।
दहन्त्य इव निश्शङ्कं सेवन्ते सूकराननाम् ॥ ८ ॥
किरिचक्ररथेन्द्रस्य तृतीयं पर्व संश्रिताः ।
अग्निधन्याद्याः पञ्च देव्यो देवीमन्त्रकृतास्पदाः ९
कठोरेणाट्टहासेन भिन्दन्त्यो भुवनत्रयम् ।
ज्वाला इव च कल्पाग्नेरङ्गनावेषमाश्रिताः ।
भण्डासुरस्य सैन्यानां सर्वेषां रुधिरप्लुतिम् ॥११॥
लिलिक्षमाणा जिह्वाभिर्लेलिहानाभिरुज्ज्वलाः ।
सेवन्ते सततं दण्डनाथामुद्दण्डविक्रमाम् ॥ १२ ॥
किरिचक्ररथेन्द्रस्य चतुर्थं पर्व संश्रिताः ।
ब्राह्मयाद्याः पञ्चमीवर्ज्या अष्टमीवर्जिता अपि॥१३
षडेव देव्यः षट्चक्रं ज्वलज्ज्वालाकलेवराः ।
महता विक्रमौघेन पिबन्त्य इव दानवान् ॥ १४॥
आज्ञया दण्डनाथायास्तं प्रदेशमुपासते ।
तस्यैव पर्वणोऽधस्तात्परितः स्थानमाश्रिताः ॥१५॥
याकिनी राकिनी चैव लाकिनी वाकिनी तथा ।

शाकिनी डाकिनी चैव तासामैक्यस्वरूपिणी १६
हाकिनी सप्तमीत्येताश्चण्डदोर्दण्डविक्रमाः।
पिबन्त्य इव भूतानि पिंक्षन्त्य इव मेदिनीम् ॥१७
त्वचं रक्तं तथा मांसं मेदोऽस्थि च विरोधिनाम्।
मज्जां प्लीहं च शुक्लं च पिबन्त्यो विकटाननाः १८
निष्ठुरैः सिंहनादैश्च पूरयन्त्यो दिशो दश।
धातुनाथा इति प्रोक्ता अणिमाद्यष्टसिद्धिदाः॥१९
मोहने मारणे चैव स्तम्भने ताडने तथा।
भक्षणे दुष्टदैत्यानामामूलं च निकृन्तने ॥ २० ॥
पण्डिताः खण्डिताशेषविपदो भक्तिशालिषु।
धातुनाथा इमाः प्रोक्ताः सर्वधातुषु संस्थिताः २१
सप्तापि वारिधीनूर्मिमालासंचूषिताम्बरान्।
क्षणार्धेनैव निष्पातुं निष्पन्नबहुसाहसाः ॥ २२ ॥
शकटीचक्रवद्वृत्तभयङ्करविलोचनाः।
स्वस्वामिनीद्रोहकृतां स्वकीयसमयद्रुहाम् ॥ २३ ॥
वैदिकद्रोहिणां देवद्रोहिणां वीरवैरिणाम्।
यज्ञद्रोहकृतां दुष्टदैत्यानां भक्षणे क्षमाः ॥ २४ ॥

नित्यमेव हि सेवन्ते पोत्रिणीं दण्डनायिकाम् ।
तत्रैव पर्वणः पार्श्वद्वितये कृतमन्दिरे ॥ २५ ॥
क्रोधिनीस्तम्भिनीख्याते वर्तेते देवते उभे ।
चामरे वीजयन्त्यौ च लोककङ्कणदोल्लिते ॥ २६ ॥
देवद्विपां चमूरक्तहालापानमदोद्धते ।
सदैव घूर्णमानाक्ष्यौ सदा प्रहसितानने ॥ २७ ॥
अथ तस्य रथेन्द्रस्य किरिचक्राभिधाजुषः ।
पार्श्वद्वयकृतावासमायुधद्वयमुद्धतम् ॥ २८ ॥
हलं च मुसलं चैव देवनारूपमास्थितम् ।
स्वकीयमुकुटस्थाने स्वकीयायुधविग्रहम् ।
आविभ्राणं जगद्दर्पघस्मरं विबुधैः स्मृतम् ॥२९॥
एतदायुधयुग्मेन ललिता दण्डनायिका ।
खण्डयिष्यति सङ्ग्रामे विषङ्गं नाम दानवम् ॥३०॥
तस्यैव पर्वणो दण्डनाथायास्त्वग्रसीमनि ।
वर्तमानो महाभीम-सिंहनादध्वनन्नभाः ॥ ३१ ॥
दंष्ट्राकटकटात्कारबधिरीकृतदिङ्मुखः ।
चण्डोच्चण्ड इति ख्यातश्चतुर्हस्तस्त्रिलोचनः ॥३२॥

शूलं खड्गं प्रेतपाशौ दधानो दीप्तविग्रहः ।
सदा संसेवते देवीं पश्यन्नेव हि पोत्रिणीम्॥३३॥
किरिचक्ररथेन्द्रस्य पञ्चमं पर्व संश्रिताः ।
वार्ताल्याद्या अष्ट देव्यो दिक्ष्वष्टसु च विश्रुताः३४
अष्टपर्वतनिष्पातिघोरनिर्घातनिस्वनाः ।
अष्टनागस्फुरद्रूपा अनष्टबलतेजसः ॥ ३५ ॥
प्रकृष्टदोःप्रकाण्डोष्महुतदानवकोटयः ।
सेवन्ते ललितादेव्या दण्डनाथामहर्निशम् ॥३६॥
तासामाख्याश्च विख्याताः समाकर्णय तापस ।
वार्ताली चैव वाराही सा वराहमुखी परा॥३७॥
अन्धिनी रुन्धिनी चैव जृम्भिनी चैव मोहिनी ।
स्तम्भिनीति रिपुक्षोभस्तम्भनोच्चाटनक्षमाः॥३८॥
तस्यैव पर्वणो वामभागे सन्ततसंस्थितिः ।
दण्डनाथोपवाह्यस्तु कासरो धूसराकृतिः ॥ ३९॥
अर्धक्रोशायतः शृङ्गद्वितयः क्रोशविग्रहः ।
खड्गवन्निष्ठुरैर्लोमजालैः संवृतविग्रहः ॥ ४० ॥
कालदण्डवदुच्चण्डवालकाण्डभयङ्करः ।

नीलाञ्जनाचलप्रस्थविकटोन्नतपृष्ठभूः ॥ ४१ ॥
महानीलगिरिश्रेष्ठगरिष्ठस्कन्धमण्डलः ।
प्रभूतोष्मलनिश्वासप्रसराकम्पिताम्बुधिः ॥ ४२ ॥
घर्घरध्वनिना कालमहिषं विहसन्निव ।
वर्तते खुरविक्षिप्तपुष्कलावर्तवारिदः ॥ ४३ ॥
तस्यैव पर्वणोऽधस्तादुच्चस्थानकृतालयाः ।
इन्द्रादयोऽनेकभेदा दिशामष्टकदेवताः ॥ ४४ ॥
ललितायां कार्यसिद्धिं विज्ञापयितुमागताः ।
लोकस्यापि च संरक्षां संपादयितुमागताः ।
तन्नामानि शृणु प्राज्ञ सङ्क्षेपात्कथितानि मत् ४५
इन्द्रश्चाप्सरसश्चैव सचतुष्षष्टिकोटयः ।
सिद्धा अग्निश्च साध्याश्च विश्वेदेवास्तथापरे॥४६॥
विश्वकर्मा मयश्चैव मातरश्च बलोन्नताः ।
रुद्रस्य परिवाराश्च रुद्राश्चैव पिशाचकाः ॥ ४७ ॥
निर्ऋती रक्षसां नाथो राक्षसा बहवस्तथा ।
मित्राश्च तत्र गन्धर्वाः सदा गानविशारदाः ॥४८
विश्वावसुप्रभृतयो विख्यातास्तत्पुरोगमाः ।

तथा भूतगणाश्चान्ये वरुणो वसवः परे ॥ ४९ ॥
विद्याधराः किन्नराश्च मारुतेश्वर एव च ।
तथा चित्ररथश्चैत्ररथकाननकारकः ॥ ५० ॥
तुम्बुरुर्नारदो यक्षः सोमो यक्षेश्वरस्तथा ।
देवाश्च भगवांस्तत्र गोविन्दः कमलापतिः ॥५१॥
ईशानश्च जगच्चक्ररक्षकः शूलभीषणः ।
ब्रह्मा चाश्विनिपुत्रौ च वैद्यविद्याविशारदौ ॥५२॥
धन्वन्तरिश्च भगवानथान्ये गणनायकाः ।
कटक्रोडगलद्दानसंतर्पितमधुव्रताः ॥ ५३ ॥
एवंप्रकारा बहवो देवतास्तत्र जाग्रति ।
पूर्वादिदिशमारभ्य परितः कृतमन्दिराः ॥ ५४ ॥
तत्रैव देवताश्चक्रे शक्रासुरमरुद्दिशः ।
आश्रित्य किल वर्तन्ते तदधिष्ठानदेवताः ॥ ५५ ॥
जृम्भिनी स्तम्भिनी चैव मोहिनी तिस्र एव हि ।
तस्यैव पर्वणः प्रान्ते किरिचक्रस्य भास्वतः ॥५६॥
कपालं च गदां बिभ्रदूर्ध्वकेशो महावपुः ।
पातालतलजम्बालबहुलाकारकालिमा ॥ ५७ ॥

अट्टहासमहावज्रदीर्णब्रह्माण्डमण्डलः ।
भिन्दन्डमरुकध्वाने रोदसीकन्दरोदरम् ॥ ५८ ॥
फूत्कारित्रिफणायुक्तं फणिपाशं करे वहन् ।
क्षेत्रपालः सदा भाति सेवमानः किटीश्वरीम् ॥५९
तस्यैव च समीपस्थस्तस्या वाहनकेसरी ।
यमारुह्य प्रववृधे भण्डासुरवधैषिणी ॥ ६० ॥
प्रागुक्तमेव दण्डशीवाहसिंहस्य लक्षणम् ।
तस्यैव पर्वणोऽधस्ताद्दण्डनाथासमत्विषः ॥ ६१ ॥
दण्डिनीसदृशाशेषभूषणायुधमण्डिताः ।
श्यामाः क्रोडाननाश्चन्द्ररेखोत्तंसितकुन्तलाः ६२॥
हलं च मुसलं हस्ते घूर्णयन्त्यो मुहुर्मुहुः ।
ललिताद्रोहिणां श्यामाद्रोहिणां स्वामिनीद्रुहाम् ॥
रक्तस्रोतोभिरुत्कूलैः पूरयन्त्यः कपालकम् ।
निजभक्तद्रोहकृतामान्त्रमालाविभूषणाः ॥ ६४ ॥
स्वगोष्ठीसमयाक्षेपकारिणां मुण्डमण्डलैः ।
अखण्डरक्तविच्छेदैः कृतवैकक्ष्यकश्रियः ।
सहस्रं देवताः प्रोक्ताः सेवमानाः किटीश्वरीम् ६५

तासां नामानि सर्वासां दण्डिन्याः कुम्भसंभव ।
सहस्रनामाध्याये तु वक्ष्यन्ते नाधुना पुनः ॥६६
अथासां देवतानां च कोलास्यायां समीपतः ।
वाहनः कृष्णसारङ्गो दण्डिन्याः समवस्थितः॥६७
क्रोशार्धार्धायतः शृङ्गे तदर्धार्धायतो मुखे ।
क्रोशप्रमाणपादश्च सदा चोद्धृतवालधिः ॥ ६८ ॥
उदरे धवलच्छायो हुङ्कारेण महीयसा ।
हसन्मारुतवाहस्य हरिणस्य पराक्रमम् ॥ ६९ ॥
तस्यैव पर्वणो देशे वर्तते वाहनोत्तमः ॥ ७० ॥
किरिचक्ररथेन्द्रस्य तस्य तत्रैव पर्वणि ।
वर्तते मदिरासिन्धुर्देवतारूपमास्थितः ॥ ७१ ॥
माणिक्यगिरिवच्छोणं हस्ते पिशितपिण्डकम् ।
दधानो घूर्णमानाक्षः स्वर्णाम्भोजस्रगावृतः ।
मदशक्त्या समाश्लिष्टो धृतरक्तसरोजया ॥ ७२ ॥
यदायदा भण्डदैत्यसंग्रामः संप्रवर्तते ।
युद्धे खेदमनुप्राप्ताः शक्तयः स्युः पिपासिताः॥७३
तदातदा सुरासिन्धुरात्मानं बहुधा क्षिपन् ।

रणखेदं देवतानामञ्जसाऽपाकरिष्यति ॥ ७४ ॥
तदत्यद्भुतमेवपं भविष्यति न संशयः ।
तदा श्रोष्यसि संग्रामे कथ्यमानं मया मुदा॥७५॥
तस्यैव पर्वणोऽधस्तादष्टदिक्ष्वंध एव च ।
उपर्यपि कृतावासा हेतुकाद्या दश स्मृताः ॥७६॥
महान्तो भैरवश्रेष्ठाः ख्याता वातापितापन ।
उद्दीप्तायुधतेजोभिर्दिवा दीपितभानवः ॥ ७७ ॥
कल्पान्तकाले दण्डिन्या आज्ञया विश्वघस्मराः ।
अत्युदग्रप्रकृतयः कटुदंष्ट्रारटन्मुखाः ।
त्रिशूलाग्रविनिर्भिण्णमहावारिदमण्डलाः ॥ ७८ ॥
हेतुकस्त्रिपुरारिश्च तृतीयश्चाग्निभैरवः ।
यमजिह्वैकपादौ च तौ च कालकरालकौ ॥ ७९ ॥
भीमरूपो हाटकेशस्तथैवाचलनामवान् ।
एते दशैव विख्याता दशकोटिभटान्विताः ।
तस्यैव किरिचक्रस्य वर्तन्ते पर्वसीमनि ॥ ८० ॥
एवं हि दण्डनाथायाः किरिचक्रस्थदेवताः ।
जृम्भिण्याद्यचलेन्द्रान्ताः प्रोक्तास्त्रैलोक्यपालनाः॥

तत्रत्यैर्देवतावृन्दैर्बहवस्तत्र सङ्गरे ।
दानवा मारयिष्यन्ते पास्यन्ते रक्तवृष्टयः ॥ ८२ ॥
इत्थं बहुविधत्राणं पर्वस्थैर्देवतागणैः ।
किरिचक्रं दण्डनेत्र्या रथरत्नं चचाल ह ॥ ८३ ॥
चक्रराजरथो यत्र तत्र गेयरथोत्तमः ।
यत्र गेयरथस्तत्र किरिचक्ररथोत्तमः ।
एतद्रथत्रयं तत्र त्रैलोक्यमिव जङ्गमम् ॥ ८४ ॥
शक्तिसेनासहस्रस्य मध्ये विरुरुचेतराम् ।
मेरुमन्दरविन्ध्यानां समवाय इवाभवत् ॥ ८५ ॥
महाघोषः प्रववृधे शक्तीनां सैन्यमण्डले ।
चचाल वसुधा सर्वा तच्चक्रैरवदारिता ॥ ८६ ॥
ललिताचक्रराजाख्यरथनाथस्य कीर्तिताः ।
षट्सारथय उद्दण्डपाशग्रहणकोविदाः ॥ ८७ ॥
इरादेवी प्रथमतस्तथा त्रिपुरभैरवी ।
संहारभैरवश्चान्यो रक्तयोगिनिवल्लभः ॥ ८८ ॥
सारसः पञ्चमश्चैव चामुण्डा च तथा परा ।
एतास्तु देवतास्तत्र रथसारथयः स्मृताः ॥ ८९ ॥

गेयचक्ररथेन्द्रस्य सारथिस्तु हसन्तिका ।
किरिचक्ररथेन्द्रस्य स्तम्भिनी सारथिः स्मृता ९०
दशयोजनमुन्नम्रो ललितारथपुङ्गवः ।
सप्तयोजनमुच्छ्रायी गीतिचक्ररथोत्तमः ॥ ९१ ॥
पञ्चयोजनमुन्नम्रः किरिचक्ररथो मुने ॥ ९२ ॥
महामुक्तातपत्रं तु दशयोजनविस्तृतम् ।
वर्तते ललितेशान्या रथ एव नचान्यतः॥ ९३ ॥
तदेव शक्तिसाम्राज्यसूचकं परिकीर्तितम् ।
सामान्यमातपत्रं तु रथद्वन्द्वेऽपि वर्तते ॥ ९४ ॥
अथ सा ललितेशानी सर्वशक्तिमहेश्वरी ।
महासाम्राज्यपदवीमारूढा भुवनेश्वरी ।
चचाल भण्डदैत्यस्य जयसिद्ध्यभिकाङ्क्षिणी ॥९५॥
शब्दायन्ते दिशः सर्वाः कम्पते च वसुन्धरा ।
क्षुभ्यन्ति सर्वभूतानि ललितेश्या विनिर्गमे॥९६॥
देवदुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः ।
विश्वावसुप्रभृतयो गन्धर्वाः सुरगायकाः ॥ ९७ ॥
तुम्बुरुर्नारदश्चैव साक्षादेव सरस्वती ।

जयमङ्गलशब्दानि पठन्ति पटुगीतिभिः ॥ ९८ ॥
हर्षसंफुल्लवदनाः स्फुरत्पुलकभूषणाः ।
मुहुर्जयजयेत्येवं स्तुवानां ललितेश्वरीम् ॥ ९९ ॥
हर्षेणान्धा मदोन्मत्ताः प्रनृत्यन्तः पदेपदे ।
सप्तर्षयो वसिष्ठाद्या ऋग्यजुःसामरूपिभिः ।
अथर्वरूपैर्मन्त्रैश्च वर्धयन्तो जयश्रियम् ॥ १०० ॥
हविषेव महावह्निशिखामत्यन्तपावनीम् ।
आशीर्वादेन महता वर्धयामासुरुत्तमाः ॥ १०१ ॥
तैः स्तूयमाना ललिता प्रचचाल रथोत्तमे ।
भण्डासुरं विनिर्जेतुमुद्दण्डैः सह सैनिकैः ॥१०२॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

[ शून्यनगरोत्पातप्रादुर्भावः ॥ ]

हयग्रीवः ॥

आकर्ण्य ललितादेव्या यात्रानिःसाणनिस्वनम् ।
महान्तं क्षोभमायाता भण्डासुरपुरालयाः ॥ १ ॥

यत्तत्रासीद्दुराशस्य भण्डदैत्यस्य दुर्धियः ।
महेन्द्रपर्वतोपान्ते महार्णवतटे पुरम् ॥ २ ॥
तत्तु शून्यकनाम्नैव विख्यातं भुवनत्रये ।
विषंगाग्रजदैत्यस्य सदावासः किलाभवत् ॥ ३ ॥
तस्मिन्नेव पुरे तस्य शतयोजनविस्तरे ।
वित्रेसुरसुराः सर्वे श्रीदेव्यागमसंभ्रमात् ॥ ४ ॥
शतयोजनविस्तीर्णं तत्सर्वं पुरमासुरम् ।
धूमैरिवावृतमभूदुत्पातजनितैर्मुहुः ॥ ५ ॥
अकाण्ड एव निर्भिण्णा भित्तयो दैत्यपत्तने ।
घूर्णमानाः पतन्तिस्म महोल्का गगनस्थलात् ॥६॥
उत्पातानां प्राथमिको भूकम्पः पर्यवर्तत ।
मही जज्वाल सकला तत्र शून्यकपत्तने ॥ ७ ॥
अकाण्ड एव हृत्कम्पं भेजुर्दैत्यपुरौकसः ।
ध्वजाग्रवर्तिनः काका गृध्राश्चैव बलाः खगाः॥८॥
आदित्यमण्डलं दृष्ट्वा दृष्ट्वा चक्रन्दुरुच्चकैः ।
क्रव्यादा बहवस्तत्र लोचनैर्नावलोकिताः ।
मुहुराकाशवाणीभिः परुषाभिर्बभाषिरे ॥ ९ ॥

सर्वतो दिक्षु दृश्यन्ते केतवस्तु मलीमसाः।
धूमायमानाः प्रक्षोभजनका दैत्यरक्षसाम् ॥१०॥
दैत्यस्त्रीणां च विभ्रष्टा अकाण्डाद्भूषणस्रजः।
हाहेति दूरं क्रन्दन्त्यः पर्यश्रु समरोदिपुः॥ ११॥
दर्पणानां वर्मणां च ध्वजानां खड्गसम्पदाम्।
मणीनामम्बराणां च मालिन्यमभवन्मुहुः ॥१२॥
सौधेषु चन्द्रशालासु केलीवेश्मसु सर्वशः।
अट्टालकेषु गोष्ठीषु विपणीषु सभासु च॥ १३॥
चतुष्किकास्वलिन्देषु प्रक्रीडेषु बलेषु च।
सर्वतोभद्रवासेषु एन्द्यावर्तादिवेश्मसु॥ १४॥
विच्छन्दकेषु शुद्धान्तेष्ववरोधनपालिषु।
स्वस्तिकेषु च सर्वेषु गर्भागारपुटेषु च॥ १५॥
गोपुरेषु कवाटेषु वलभीनां च सीमसु।
वातायनेषु कक्ष्यासु धिष्ण्येषु च खल्लूरिषु॥१६॥
सर्वत्र दैत्यनगरावासिभिर्जनमण्डलैः।
अश्रूयन्त महाघोषाः परुषा भूतभाषिताः॥१७॥
शिथिली सर्वतो जाता घोरवार्णा भयानकाः।

करटैः कटुकालापैरवलोक्य दिवाकरम् ॥ १८ ॥
समराटकरोटीनां कोटयश्चापतन् भुवि ।
अपतन्वेदिमध्येषु विन्दवः शोणिताम्भसाम् ॥१९
केशोण्डुकाश्च निष्पेतुः सर्वतो धूमधूमलाः ॥२०॥
भौमान्तरिक्षदिव्यानामुत्पातानामिति व्रजम् ।
अवलोक्य भृशं त्रस्ताः सर्वे नगरवासिनः ।
निवेदयामासुरमी भण्डाय प्रथितौजसे ॥ २१ ॥
स च भण्डः प्रचण्डोष्मा तैरुत्पातकदम्बकैः ।
असंजातधृतिभ्रंशो मन्त्रस्थानमुपागमत् ॥ २२ ॥
मेरोरिव वपुर्भेदं वहुरत्नविचित्रितम् ।
अध्यासामास दैत्येन्द्रः सिंहासनमनुत्तमम्॥२३॥
स्फुरन्मुकुटलग्नानां रत्नानां किरणोद्गमैः ।
दीपयन्नखिलाशान्तानद्भुतद्दानवेश्वरः ॥ २४ ॥
एकयोजनविस्तारे महत्यास्थानमण्टपे ।
तुङ्गसिंहासनस्थं तु निषेवाते तदानुजौ ॥ २५ ॥
विशुक्रश्च विषङ्गश्च महाबलपराक्रमौ ।
त्रैलोक्यकण्टकीभूतभुजदण्डभयङ्करौ ॥ २६ ॥

अग्रजस्य सदैवाज्ञामविलङ्घ्य मुहुर्मुहुः ।
त्रैलोक्यविजये लब्धं वर्धयन्तौ महद्यशः ॥२७॥
नतेन शिरसा तस्य मृद्नन्तौ पादपीठिकाम् ।
कृताञ्जलिप्रणामौ च समुपाविशतां भुवि ॥२८॥
अथास्थानस्थिते तस्मिन्नमरद्वेषिणां वरे ।
सर्वे सामन्तदैत्येन्द्रास्तं द्रष्टुं समुपागताः ॥ २९ ॥
तेषामेकैकसैन्यानां गणना नहि विद्यते ।
स्वस्वनाम समुच्चार्य प्रणेमुः शून्यकेश्वरम् ॥३०॥
स च तानसुरान्सर्वानतिधीरकनीनिकैः ।
संभावयन्समालोकैः कियन्तं चित्क्षणं स्थितः॥३१

[ भण्डादीनां मन्त्रक्रमः ॥ ]

अवोचत विशुक्रस्तमग्रजं दानवेश्वरम् ।
मथ्यमानमहासिन्धुसमानगलनिस्वनः ॥ ३२ ॥
देव त्वदीयदोर्दण्डविध्वस्तबलविक्रमाः ।
पापिनः पामराचारा दुरात्मानः सुराधमाः॥३३॥
शरण्यमन्यतः क्वापि नाप्नुवन्तो विषादिनः ।
ज्वलज्ज्वालामये वह्नौ पतिता नाशमागताः ॥३४॥

तस्माद्दैवात्समुत्पन्ना काचित्स्त्री वलगर्विता ।
स्वयमेव किलाम्राक्षीत्तान्देवान्वासवादिकान्॥३५
तैः पुनः प्रबलोत्साहैः प्रोत्साहितपराक्रमा ।
बहुस्त्रीपरिवारा च विविधायुधमण्डिता ॥ ३६ ॥
अस्माञ्जेतुं किलायाति हा कष्टं विधिवैशसम् ।
अवलानां समूहश्चेद्बलिनोऽस्मान्विजेष्यते ॥ ३७॥
तर्हि पल्लवभङ्गेन पाषाणस्य विदारणम् ।
उच्यमानमिदं हन्त परिहासाय कल्पते ॥ ३८ ॥
विडम्बना न किमसौ लज्जाकरमिदं न किम् ।
अस्मत्सैनिकनासीरभटेभ्योऽपि भवद्भियः ॥३९॥
कान्दिशीकत्वमापन्नाः शक्राद्यास्त्रिदिवौकसः ।
ब्रह्मादयश्च निर्भिण्णविग्रहा मद्बलायुधैः ॥ ४० ॥
विष्णोश्च का कथा वास्ति वित्रस्तः स महेश्वरः ।
अन्येषामिह का वार्ता दिक्पाः सर्वे पलायिताः ४१
अस्माकमिषुभिस्तीक्ष्णैरदृश्यैरङ्गपातिभिः ।
सर्वत्र विद्धमर्माणो दुर्मना विबुधाः कृताः ॥४२॥
तादृशानामपि महापराक्रमभुजोष्मणाम् ।

अस्माकं विजयायाद्य स्त्री काचिदभिधावति ।।४३

यद्यपि स्त्री तदाप्येषा नावमान्या कदाचन ।
अल्पोऽपि रिपुरात्मज्ञैर्नावमान्यो जिगीषुभिः ४४

तस्मात्तदुत्सारणार्थं प्रेषणीयास्तु किङ्कराः ।
सकचग्राहमाकृष्य साऽऽनेतव्या मदोद्धता ।।४५।।

देव त्वदीयशुद्धान्तवर्तिनीनां मृगीदृशाम् ।
चिरेण चेटिकाभावं सा दुष्टा संश्रयिष्यति ।।४६।।

एकैकस्माद्भटादस्मात्सैन्येषु परिपन्थिनः ।
शङ्कते खलु वित्रस्तं त्रैलोक्यं सचराचरम् ।। ४७ ।।

अत्र देवस्य चित्तं तु प्रमाणमिति दानवः ।
निवेद्य भण्डदैत्याय क्रोधं तस्य व्यवीवृधत् ।।४८।।

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने भण्डासुरादिमन्त्रक्रमो नाम
चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

[ विषङ्गकृतसन्मन्त्रोपदेशः ॥ ]

हयग्रीवः ॥

विषङ्गस्तु महासत्त्वो विचारज्ञो विचक्षणः ।
इदमाह महादैत्यमग्रजन्मानमुद्धतम् ॥ १ ॥
देव त्वमेव जानासि सर्वकार्यमरिन्दम ।
ननु ते क्वापि वक्तव्यं नीतिवर्त्मनि वर्तने ॥ २ ॥
सर्वं विचार्य कर्तव्यं विचारः परमा गतिः ।
अविचारेण चेत्कर्म समूलमवकृन्तति ॥ ३ ॥
परस्य कटके चाराः प्रेषणीयाः प्रयत्नतः ।
तेषां बलाबलं ज्ञेयं जयसंसिद्धिमिच्छुना ॥ ४ ॥
चारचक्षुर्दृढप्रज्ञः सदा शङ्कितमानसः ।
अशङ्किताकारवांश्च गुप्तमन्त्रः स्वमन्त्रिषु ॥ ५ ॥
षड्डुपायान्प्रयुञ्जानः सर्वत्राभ्यर्हिते पदे ।
विजयं लभते राजा जाल्मो मङ्क्षु विनश्यति ॥६॥
अविमृश्यैव यः कश्चिदारम्भः स विनाशकः ।
विमृश्य तु कृतं कर्म विशेषाज्जयदायकम् ॥ ७ ॥

तिर्यगित्यपि नारीति क्षुद्र इत्यपि राजभिः ।
कार्या वैरिणि नावज्ञा शक्तेः सर्वत्र संभवात्॥८॥
स्तम्भोत्पन्नेन केनापि नरतिर्यग्वपुर्धृता ।
भूतेन सर्वभूतानां हिरण्यः कण्टको हतः ॥ ९ ॥
पुरा हि चण्डिका नाम्न नारी मायाविजृम्भिणी ।
निशुम्भशुम्भौ महिषं व्यापादितवती रणे ॥१०॥
तत्प्रसङ्गेन बह्वस्तया दैत्या विनाशिताः ।
अतो वदामि नावज्ञा स्त्रीमात्रे क्रियतां क्वचित् ॥११
शक्तिरेव हि सर्वत्र कारणं विजयश्रियः ।
शक्तेराधारतां प्राप्तैस्त्रीपुंल्लिङ्गैर्न नो भयम् ॥१२॥
शक्तिश्च सर्वतो भाति संसारस्य स्वभावतः ।
तर्हि तस्या दुराशायाः प्रवृत्तिर्ज्ञायतां त्वया ॥१३॥
केयं कस्मात्समुत्पन्ना किमाचारा किमाश्रया ।
किंबला किंसहाया वा देव तत्प्रविचार्यताम् ॥१४
इत्युक्तः स विषङ्गेण नीतिमर्मविदामुना ।
अवज्ञाभ्रुकुटीं चक्रे स्त्रीति हेलापरायणः ॥ १५ ॥
अरे नीतिविचारोऽयं समसत्त्वेषु शत्रुषु ।

युज्यते वनितायां तु को विचारो महौजसाम् ॥१६
अस्मद्बले महासत्वा अक्षौहिण्यधिपाः शतम् ।
पातुं समस्तजलधीनलं दग्धुं त्रिविष्टपम् ॥ १७ ॥
अरे पापसमाचार किं वृथा शङ्कसे स्त्रियम् ।
तत्सर्वं हि मया पूर्वं चारद्वारा विलोकितम् ॥१८॥
अग्नेः समुत्थिता काचिल्ललितानामधारिणी ।
यथार्थनामवत्येषा पुष्पवत्पेशलाकृतिः ॥ १९ ॥
न सत्त्वं नच वा वीर्यं न संग्रामेषु वा गतिः ।
अश्रावि चारनिवहात्किंतु मायापरायणा ॥ २०॥
तत्सत्वेनाविद्यमानं स्त्रीकदम्बकमात्मनः ।
उत्पादितवती किंचित्तेन चैवं विचेष्टते ॥ २१ ॥
अथवा भवदुक्तेन न्यायेनास्तु महद्बलम् ।
त्रैलोक्योल्लङ्घिमहिमा भण्डः केन विजीयते ॥२२॥
इदानीमपि मद्बाहुबलसंमर्दमूर्च्छिताः ।
श्वसितुं चापि पटवो न कदाचन नाकिनः ॥२३॥
केचित्पातालगर्भेषु केचिदम्बुधिवारिषु ।
केचिद्दिगन्तकोणेषु केचित्कुञ्जेषु भूभृताम् ॥२४॥

विलीना भृशवित्रस्तास्त्यक्तदारसुतश्रियः ।
भ्रष्टाधिकारा बहवश्छन्नवेषाश्चरन्ति ते ॥ २५ ॥
एतादृशं न जानाति मम बाहुपराक्रमम् ।
अबला नचिरोत्पन्ना तेनैषा दर्पमश्नुते ॥ २६ ॥
न जानन्ति स्त्रियो मूढा वृथा कल्पितसाहसाः ।
विनाशमनुधावन्ति कार्याकार्यविमोहिताः ॥२७॥
अथवा तां पुरस्कृत्य यद्यागच्छन्ति नाकिनः ।
यक्षा महोरगाः सिद्धाः साध्या वा युद्धदुर्मदाः॥२८
ब्रह्मा वा पद्मनाभो वा रुद्रो वाथ सुराधिपः ।
अन्ये वा हरितां नाथास्तेषां पेष्टुमहं पटुः ॥२९॥
अथवा मम सेनासु सेनान्यो रणदुर्मदाः ।
पक्वकर्करिकापेषमिव पेक्ष्यन्ति वैरिणः ॥ ३० ॥
कुटिलाक्षः कुरण्डश्च करङ्कः काकवाशितः ।
वज्रदन्तो वज्रमुखो वज्रलोमा बलाहकः ॥ ३१ ॥
सूचीमुखः फालमुखो विकर्णो विकटाननः ।
करालाक्षः करटको दमनो दीर्घजीवकः ॥ ३२ ॥
हुम्बेको हुलुमुलश्च कल्कसः कल्किवाहनः ।

पुल्कसः पुण्ड्रकेतुश्च चण्डबाहुश्च कुक्कुरः ॥ ३३ ॥
जम्बूकाक्षो जम्भनश्च तीक्ष्णशृङ्गस्त्रिकण्टकः ।
चन्द्रगुप्तश्चतुर्बाहुश्चकोराक्षश्चतुश्शिराः ॥ ३४ ॥
वज्रघोषश्चोर्ध्वकेशो महामायो महाहनुः ।
मखशत्रुर्मखास्कन्दी सिंहघोषः सिरालकः ॥३५॥
अन्धकः सिन्धुनेत्रश्च कूपकः कूपलोचनः ।
गुहाक्षो गण्डगल्लश्च चण्डवर्मा यमान्तकः ॥३६॥
लट्टणः पण्डसेनश्च पुरजित्पूर्वमारकः ।
स्वर्गशत्रुः स्वर्गबलो दुर्गाख्यः स्वर्गकण्टकः ॥३७॥
अतिमायो बृहन्माय उपमाय उलूकजित् ।
पुरुषेणो विषेणश्च कुन्तिषेणः कुरूपकः ॥ ३८ ॥
मलदश्च करूशश्च मङ्गलो द्रुघणस्तथा ।
कोल्लाटः कुटिलाक्षश्च दाशेरो बभ्रुवाहनः॥ ३९॥
दुष्टहासो धृष्टकेतुः परिक्षित्पापकञ्चुकः ।
महामोहो महादंष्ट्रो दुर्मतिः स्वर्गमेजयः ॥ ४० ॥
शठकेतुः शठवसुः शठदन्तः शठप्रियः ।
दुःशठो दुर्विनीतश्च भिन्नकर्णश्चमूरुहः ॥ ४१ ॥

अट्टहासी महाहासी सिंहहासी मदोत्कटः ।
कुम्भोत्कचः कुम्भनासः कुम्भग्रीवः कुटोदरः॥४२
हस्तिमेढ्रो महाण्डश्च कुम्भाण्डः पूतिनासिकः ।
पूतिदन्तः पूतिचक्षुः पूत्यास्यः पूतिमेहनः ॥४३॥
इत्येवमादयः शूरा हिरण्यकशिपोः समाः ।
हिरण्याक्षसमाश्चैव मम पुत्रा महाबलाः ॥ ४४ ॥
एकैकस्य सुतास्तेषु जाताः शूराः शतं शतम् ।
सेनान्यश्च मदोद्वृत्ता मम पुत्रैरनुद्रुताः ॥ ४५ ॥
नाशयिष्यन्ति समरे दुर्वृत्तानमराधमान् ।
एते चेत्कुपिता युद्धे सहस्राक्षौहिणीश्वराः ॥ ४६ ॥
भस्मशेषि भवेद्युद्धं हा हन्त किमुताबला ।
मायाविलासः सर्वोऽपि तस्याः समरसीमनि ॥४७
महामायाविनामस्मद्बलानामामिषं भवेत् ।
तद्वृथा शङ्कया खिन्नं मा ते भवतु मानसम् ॥४८॥
इत्युक्त्वा भण्डदैत्येन्द्रः समुत्थाय नृपासनात् ।
उवाच निजसेनान्यं कुटिलाक्षं महाबलम् ॥४९॥

उत्तिष्ठ रे बलं सर्वं सन्नाह्य समन्ततः ।
शून्यकस्य समन्ताच्च द्वारेषु बलमर्पय ॥ ५० ॥
दुर्गाणि संगृहाण त्वं कुरु क्षेपणिकाशतम् ।
दुष्टाभिचाराः कर्तव्या मन्त्रिभिश्च पुरोहितैः ।
सज्जीकुरु च शस्त्राणि युद्धमेतदुपस्थितम् ॥ ५१ ॥
सेनापतिषु यं कंचिदग्रे प्रस्थापयाधुना ।
अनेकबलसंघातसहितं घोरदर्शनम् ॥ ५२ ॥
तेन सङ्ग्रामसमये संनिपात्य विनिर्जिता ।
केशेष्वाकृष्यतां मूढा देवसत्त्वेन दर्पिता ॥ ५३ ॥
इत्याभाष्य चमूनाथं सहस्रपृतनाधिपम् ।
कुटिलाक्षं महासत्त्वं स्वयं चान्तःपुरं गतः ॥५४॥
आपतन्त्या महादेव्या यात्रानिःसाणनिस्वनः ।
अश्रूयत च दैत्येन्द्रैरतिकर्णज्वरावहः ॥ ५५ ॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने भण्डासुराहङ्कारवर्णनं नाम
पञ्चदशोऽध्यायः ॥ १५ ॥

# षोडशोऽध्यायः ॥ १६ ॥

## [ भण्डासुरसेनासन्नाहः ॥ ]

हयग्रीवः ॥

अथ श्रीललितासेनानिःसाणप्रतिनिस्वनः ।
उच्चचालासुरेन्द्राणामुद्धतो दुन्दुभिस्वनः ॥ १ ॥
तेन मर्दितदिक्केन क्षुभ्यद्गर्भपयोधिना ।
बधिरीकृतलोकेन चकम्पे जगतां त्रयी ॥ २ ॥
मर्दयन्ककुभां वृन्दं भिन्दन्भूधरकन्दरान् ।
ववृधे गगनाभोगे दैत्यनिःसाणनिस्वनः ॥ ३ ॥
महानरहरिक्रोधहुंकारोद्धतमध्वनिः ।
विरसं विररासोच्चैर्विबुधद्वेषिझल्लरी ॥ ४ ॥
ततः किलकिलारावमुखरा दैत्यकोटयः ।
समनह्यन्त संक्रुद्धाः प्रति तां परमेश्वरीम् ॥ ५ ॥
कश्चिद्रत्नविचित्रेण वर्मणा छन्नविग्रहः ।
चकाशे जङ्गम इव प्रोत्तुङ्गो रोहणाचलः ॥ ६ ॥
कालरात्रिमिवोदग्रां शस्त्राकारेण गोपिताम् ।
अधुनीत भटः कश्चिदतिधौतां कृपाणिकाम् ॥७॥

उल्लासयन्कराग्रेण कुन्तपल्लवमेकतः ।
आरूढतुरगो वीथ्यां चारिभेदं चकार ह ॥ ८ ॥
केचिदारुरुहुर्योधा मातङ्गांस्तुङ्गवर्ष्मणः ।
उत्पातवातसंपातप्रेरितानिव पर्वतान् ॥ ९ ॥
पट्टसैर्मुद्गरैश्चैव भिदुरैर्भिन्दिपालकैः ।
द्रुघणैश्च मुसुण्डीभिः शणयैर्मुसलैरपि ॥ १० ॥
गदाभिश्च शतघ्नीभिस्त्रिशिखैर्विशिखैस्तथा ।
अर्धचक्रैर्महाचक्रैर्वक्रास्त्रैरुरगाननैः ॥ ११ ॥
फणिशीर्षप्रभेदैश्च धनुर्भिः शार्ङ्गधन्विभिः ।
दण्डैः क्षेपणिकाशस्त्रैर्वज्रबाणैर्घरट्टकैः ॥ १२ ॥
यवमध्यैर्मुष्टिमध्यैर्वलयैः खण्डलैरपि ।
कर्तरैः कोणमध्यैश्च फणिदन्तैः परश्वधैः ।
पाशायुधैः पाशतुण्डैः काकतुण्डैः सहस्रशः॥१३॥
एवमादिभिरत्युग्रैरायुधैर्जीवहारिभिः ।
परिकर्मितहस्ताग्रा वर्मिता दैत्यकोटयः ॥ १४ ॥
अश्वारोहा गजारोहा गर्दभारोहिणः परे ।
उष्ट्रारोहा वृकारोहाः शुनकारोहिणस्तथा ॥ १५॥

काकाधिरोहिणो गृध्रारोहाः कंकाधिरोहिणः ।
व्याघ्राधिरोहाश्च परे तथा सिंहाधिरोहिणः ॥१६॥
शरभारोहिणश्चान्ये भेरुण्डारोहिणः परे ।
सूकरारोहिणो व्यालारूढाः प्रेताधिरोहिणः ॥१७॥
एवं नानाविधैर्वाहवाहिभिर्ललितांप्रति ।
प्रचेले प्रबलक्रोधसंमूर्च्छितनिजाशयैः ॥ १८ ॥
कुटिलाक्षश्चमूभर्ता दुर्मदं नाम दानवम् ।
दशाक्षौहिणिकायुक्तं प्राहिणोल्ललितांप्रति ॥ १९ ॥
दिधक्षुभिरिवाशेषविश्वं सह बलोत्कटैः ।
भटैर्युक्तः स सेनानीर्ललिताभिमुखो ययौ ॥२०॥
भिन्दन्पटहसंरावैश्चतुर्दशजगद्दरीम् ।
अट्टहासं वितन्वानो दुर्मुखस्तन्मुखो ययौ ॥२१॥
अथ भण्डासुराज्ञप्तः कुटिलाक्षो महाबलः ।
शून्यकस्य पुरद्वारे प्राचीने समकल्पयत् ॥ २२॥
रक्षणार्थं दशाक्षौहिण्युपेतं तालजङ्घकम् ।
अवाचीने पुरद्वारे दशाक्षौहिणिसंयुतम् ।
नाम्ना तालभुजं दैत्यं रक्षणार्थमकल्पयत् ॥ २३॥

प्रतीचीने पुरद्वारे दशाक्षोहिणिसंयुतम् ।
तालग्रीवं नाम दैत्यं रक्षणार्थमकल्पयत् ॥ २४ ॥
उत्तरे तु पुरद्वारे तालकेतुं महाबलम् ।
आदिदेश सुरक्षार्थं दशाक्षोहिणिसंयुतम् ॥ २५ ॥
पुरस्य सालवलये कटिशीर्षकवेश्मसु ।
मण्डलाकारतो वस्तुं दशाक्षोहिणिमादिशत् ॥२६
एवं पञ्चाशता कृत्वाऽक्षोहिणीभिस्तु रक्षणम् ।
शून्यकस्य पुरस्यैप तद्वृत्तं स्वामिनेऽवदत् ॥ २७ ॥

कुटिलाक्षः ॥

देव त्वदाज्ञया दत्तं सैन्यैर्नगररक्षणम् ।
दुर्मदः प्रेषितः पूर्वं तां दुष्टां ललितांप्रति ॥ २८ ॥
अस्मत्किंकरमात्रेण सुनिरासा हि साऽबला ।
तथाऽपि राज्ञामाचारः कर्तव्यं पुररक्षणम् ॥२९॥
इत्युक्त्वा भण्डदैत्येन्द्रं कुटिलाक्षोऽतिगर्वितः ।
स्वसैन्यं सज्जयामास सेनापतिभिरन्वितः ॥ ३० ॥

[ संपत्करीकृतदुर्मदवधः ॥ ]

यस्तु संप्रेपितः पूर्वं कुटिलाक्षेण दानवः ।

स ध्वनद्ध्वजिनीयुक्तो ललितासैन्यमक्षिणोत् ॥३१
कृत्वा किलकिलारावं भटास्तस्य सहस्रशः ।
दोधूयमानैरसिभिर्निपेतुः शक्तिसैनिके ॥ ३२ ॥
ताश्च शक्तय उद्दण्डस्फुरिताट्टहसस्वनाः ।
देदीप्यमानशस्त्राभाः समयुध्यन्त दानवैः ॥३३॥
शक्तीनां दानवानां च संक्षोभितजगत्त्रयम् ।
समवर्तत संग्रामो धूलिग्रामं तदाम्बरम् ॥ ३४ ॥
रथवंशेषु मूर्च्छन्त्यः करिकर्णैः प्रचालिताः ।
अश्वनिश्वासविक्षिप्ता धूलयः प्रजुघूर्णिरे ॥ ३५ ॥
तमापतन्तमालोक्य दृप्ताक्षौहिणिसंवृतम् ।
संपत्करी त्वतिक्रोधादभिदुद्राव संगरे ॥ ३६ ॥
संपत्करीसमानाभिः शक्तिभिः समधिष्ठिताः ।
अश्वाश्च दन्तिनो मत्ता व्यमृद्नन्दानवीं चमूम्॥३७
अन्योन्यं तुमुले युद्धे जाते किलकिलारवे ।
धूलीषु धूयमानासु ताड्यमानासु भेरिषु ॥ ३८ ॥
इतस्ततः प्रववृधे रक्तसिन्धुर्महीयसी ।
शक्तिभिः पात्यमानानां दानवानां सहस्रशः॥३९॥

ध्वजानि लुठितान्यासन्विलूनानि शिलीमुखैः ।
विस्रस्ततत्तच्चिह्नानि समं छत्रकदम्बकैः ॥ ४० ॥
रक्तारुणायां युद्धोर्व्यां पतितैश्छत्रमण्डलैः ।
आलम्भि तुलनां सन्ध्या रक्ताभ्रहिमरोचिषा ॥४१
ज्वालाकलापाः कल्पाग्नेरिव वारि पयोनिधेः ।
दैत्यसैन्यानि निवहाः शक्तीनां पर्यवारयन् ॥४२॥
शक्तिच्छटोज्वलच्छस्त्रधारानिष्कृत्तकन्धराः ।
दानवानां रणतले निपेतुर्मुण्डमण्डलाः ॥ ४३ ॥
दष्टोष्ठैर्भ्रुकुटीक्रूरैः क्रोधसंरक्तलोचनैः ।
मुण्डैरखण्डमभवत्संग्रामधरणीतलम् ॥ ४४ ॥
एवं प्रवृत्ते समरे जगच्चक्रभयंकरे ।
शक्तयो भृशसंक्रुद्धा दैत्यसेनाममर्दयन् ॥ ४५ ॥
इतस्ततः शक्तिशस्त्रैस्ताडिता मूर्च्छिता इति ।
विनेदुर्दानवास्तत्र संपद्देवीबलाहताः ॥ ४६ ॥
अथ भग्नं समाश्वास्य निजं बलमरिन्दमः ।
उष्ट्रमारुह्य सहसा दुर्मदोऽभ्यद्रवच्चमूम् ॥ ४७ ॥
दीर्घग्रीवः समुन्नम्रः पृष्ठे निष्ठुरतोदनः ।

अधिष्ठितो दुर्मदेन वाहनोष्ट्रश्चचालह ॥ ४८ ॥
तमुष्ट्रवाहनं दुष्टमन्वयुः क्रुद्धचेतसः ।
दानवा निश्वसत्सर्पभीमंशस्त्रा युयुत्सया ॥ ४९ ॥
अवाकिरदसौ भल्लैरुल्लसत्फलशालिभिः ।
संपत्करीचमूचक्रं वनं वार्भिरिवाम्बुदः ॥ ५० ॥
तस्य दुःसहसत्वस्य ताडिता बहुभिः शरैः ।
स्तम्भितेवाभवत्सेना सम्पत्कर्याः क्षणं रणे ॥ ५१ ॥
अथ क्रोधारुणं चक्षुर्दधाना संपदम्बिका ।
रणकोलाहलं नागमारूढायुध्यतामुना ॥ ५२ ॥
आलोलकङ्कणक्काणरमणीयतरः करः ।
तस्याश्चकर्ष कोदण्डमौर्वीमाकर्णमाहवे ॥ ५३ ॥
लघुहस्ततया तस्या नाकृष्टं नच मोक्षणम् ।
ददृशे धनुषश्चक्रात्केवलं शरधोरणिः ॥ ५४ ॥
अर्कांशुभरसंपर्कस्फुरत्प्रतिफलत्फलाः ।
शराः संपत्करीचापच्युताः समदहन्नरीन् ॥ ५५ ॥
दुर्मदस्य च तस्याश्च सुमहद्युद्धमुद्धतम् ।
अभूदन्योन्यसंघट्टसस्फुलिङ्गशिलीमुखम् ॥ ५६ ॥

प्रथमं प्रसृतैर्बाणैः सम्पद्देवीसुरद्विषोः ।
अन्धकारः समभवत्तिरस्कुर्वन्नहस्करम् ॥ ५७ ॥
तदन्तरे च बाणानामतिसंघट्टयोनयः ।
विस्फुलिङ्गा विदधिरे खद्योतभ्रमचातुरीम् ॥५८॥
तयाधिरूढः सुश्रोण्या रणकोलाहलः करी ।
पराक्रमं बहुविधं दर्शयामास संगरे ॥ ५९ ॥
करेण कतिचिद्दैत्यान्पादाघातेन कांश्चन ।
उदग्रदन्तमुसलाघातैरन्यांश्च दानवान् ॥ ६० ॥
वालदण्डाहतैरन्यान्फीत्कारैरपरान्रिपून् ।
गात्रव्यामर्दनैरन्यान्नखाघातैस्तथापरान् ॥ ६१ ॥
प्रथिमानाभिघातेन कांश्चिद्दैत्यान्विमर्दयन् ।
चतुरं चरितं चक्रे सम्पद्देवीमतङ्गजः ॥ ६२ ॥
स दुर्मदः क्रुधा रक्तदृष्टिरेकेन पत्रिणा ।
सम्पत्करीमुकुटगं मणिमेकमपातयत् ॥ ६३ ॥
अथ क्रोधारुणदृशा तया मुक्तैः शिलीमुखैः ।
विक्षतो वक्षसि क्षिप्रं जीवितं दुर्मदो जहौ ॥६४॥
ततः किलकिलारावं कृत्वा शक्तिचमूवरैः ।

तत्सैनिकचरास्त्वन्ये निहता दानवोत्तमाः ॥६५॥
हतावशिष्टा दैत्यास्तु शक्तिबाणखिलीकृताः ।
पलायिता रणक्षोण्याः शून्यकं पुरमाश्रयन् ॥६६॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्य-
संवादे ललितोपाख्याने दुर्मदवधो नाम
षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ॥ १७ ॥

[ अश्वारूढाकृतकुरुण्डवधः ॥ ]

हयग्रीवः ॥

तं वृत्तान्तं समाकर्ण्य संक्रुद्धो दानवेश्वरः ।
प्रचण्डेन प्रभावेन दीप्यमान इवात्मनि ॥ १ ॥
स शीघ्रस्पर्शमुद्धूय खड्गमुग्रविलोचनः ।
कुटिलाक्षं निकटगं बभाषे पृतनापतिम् ॥ २ ॥
कथं सा दुष्टवनिता दुर्मदं बलशालिनम् ।
निपातितवती युद्धे कष्ट एव विधेः क्रमः ॥ ३ ॥
न सुरेषु न मर्त्येषु नोरगेन्द्रेषु यद्बलम् ।

अभूत्प्रतिहतं सोऽपि दुर्मदोऽबलया हतः ॥ ४ ॥
तां दुष्टवनितां जेतुमाक्रष्टुं च कचे हठात् ।
सेनापतिं कुरुण्डाख्यं प्रेषयाहवदुर्मदम् ॥ ५ ॥
इति संबोधितस्तेन कुटिलाक्षो महाबलम् ।
कुरुण्डं चण्डदोर्दण्डमाजुहात्र प्रभोः पुरः ॥ ६ ॥
स कुरुण्डः समागत्य प्रणामं स्वामिनेऽदिशत् ।
उवाच कुटिलाक्षस्तं गच्छ सज्जय सैनिकम् ॥७॥
मायायां चतुरोऽसि त्वं चित्रयुद्धविशारदः ।
कूटयुद्धे च निपुणस्तां स्त्रियं परिमर्दय ॥ ८ ॥
इति स्वामिपुरस्थेन कुटिलाक्षेण देशितः ।
निर्जगाम पुरात्तूर्णं कुरुण्डश्चण्डविक्रमः ॥ ९ ॥
विंशत्यक्षोहिणीभिश्च समन्तात्परिवारितः ।
मर्दयन्त्स महीगोलं हस्तिवाजिपदातिभिः ।
दुर्मदस्याग्रजश्चण्डः कुरुण्डः समरं ययौ ॥ १० ॥
धूलिभिस्तुमुलीकुर्वन्दिगन्तं धीरमानसः ।
शोकरोषाग्रहग्रस्तो जवनाश्वगतो ययौ ॥ ११ ॥
शार्ङ्गं धनुः समादाय घोरटङ्कारनिस्वनम् ।

ववर्ष शरधाराभिः संपत्कर्या महाचमूम् ॥ १२ ॥
पापे मदनुजं हत्वा दुर्मदं युद्धदुर्मदम् ।
वृथा वहसि विक्रान्तिलवलेशान्महामदम् ॥१३॥
इदानीमेव भवतीमेभिर्नाराचमण्डलैः ।
अन्तकस्य पुरीमद्य प्रापयिष्यामि पश्य माम्॥१४
अतिहृद्यमतिस्वादु त्वद्वपुर्वल्लिनिर्गतम् ।
अपूर्वमङ्गनारक्तं पिबन्तु रणपूतनाः ॥ १५ ॥
ममानुजवधोत्थस्य प्रत्यवायस्य दुष्फलम् ।
अधुना भोक्ष्यसे दुष्टे पश्य मे भुजयोर्बलम् ॥१६
इति सन्तर्जयन्त्संपत्करीं करिवरस्थिताम् ।
सैन्यं प्रोत्साहयामास शक्तिसेनाविमर्दने ॥ १७॥
अथ तां पृतनां चण्डीं कुरुण्डस्य महौजसः ।
विमर्दयितुमुद्युक्ता स्वसैन्यं प्रोदसीसहत् ॥ १८ ॥
अपूर्वाहवसंजातकौतुकाथ जगाद ताम् ।
अश्वारूढा समागत्य स्नेहेनार्द्रमिदं वचः ॥ १९ ॥
सखि संपत्करि प्रीत्या मम वाणी निशम्यताम् ।
अस्य युद्धमिदं देहि मम कर्तुं गुणोत्तरे ॥ २० ॥

क्षणं सहस्व समरे मयैवैष नियोत्स्यते ।
याचितासि सखित्वेन नात्र संशयमाचर ॥ २१ ॥
इति तस्या वचः श्रुत्वा संपद्देवी कृतस्मिता ।
निवर्तयामास चमूं कुरुण्डाभिमुखोत्थिताम् ॥२२॥
अथ बालार्कवर्णाभिः शक्तिभिः समधिष्ठिताः ।
तरङ्गा इव सैन्याब्धेस्तुरङ्गा वातरंहसः ॥ २३ ॥
खरैः खुरपुटैः क्षोणीमुल्लिखन्तो मुहुर्मुहुः ।
पेतुरेकप्रवाहेण कुरुण्डस्य चमूमुखे ॥ २४ ॥
वल्गाविभागकृत्येषु संवर्तननिवर्तने ।
गतिभेदेषु चारीषु पञ्चधारासु पातने ॥ २५ ॥
प्रोत्साहने च संज्ञाभिः करपादाग्रयोनिभिः ।
चतुराभिस्तुरङ्गस्य हृदयज्ञाभिराहवे ॥ २६ ॥
अश्वारूढाम्बिकासैन्यशक्तिभिः सह दानवाः ।
प्रोत्साहिताः कुरुण्डेन समयुध्यन्त दुर्मदाः ॥२७॥
एवं प्रवृत्ते समरे शक्तीनां च सुरद्विषाम् ।
अपराजितनामानं हयमारुह्य वेगिनम् ।
अभ्यद्रवद्दुराचारमश्वारूढा कुरुण्डकम् ॥ २८ ॥

प्रचलद्वेणिसुभगा चलच्चन्द्रकलोज्ज्वला ।
संध्यानुरक्तशीतांशुमण्डलीसुन्दरानना ॥ २९ ॥
स्मयमानेव समरे गृहीतमणिकार्मुका ।
अवाकिरच्छरासारैः कुरुण्डं तुरगासना ॥ ३० ॥
तुरगारूढया क्षिप्राः समाक्रान्तदिगन्तराः ।
दिशो दश व्यानशिरे रुक्मपुङ्खाः शिलीमुखाः ३१
दुर्मदस्याग्रजः क्रुद्धः कुरुण्डश्चण्डविक्रमः ।
विशिखैः शार्ङ्गनिष्ठ्यूतैरश्वारूढामवाकिरत् ॥३२॥
चण्डैः खुरपुटैः सैन्यं खण्डयन्नतिवेगतः ।
अश्वारूढातुरङ्गोऽपि मर्दयामास दानवान् ॥३३॥
तस्य हेषारवाद्दूरमुत्पाताम्बुदनिस्वनाः ।
अमूर्च्छयन्ननेकानि तस्यानीकानि वैरिणः ॥ ३४ ॥
इतस्ततः प्रचलिता दैत्यचक्रे हयासना ।
निजं पाशायुधं दिव्यं मुमोच ज्वलिताकृति॥३५॥
तस्मात्पाशात्कोटिशोऽन्ये पाशा भुजगभीषणाः ।
समस्तमपि तत्सैन्यं बध्वाबध्वा व्यमूर्च्छयन् ॥३६
अथ सैनिकबन्धेन क्रुद्धः स च कुरुण्डकः ।

शरेणैकेन चिच्छेद तस्या मणिधनुर्गुणम ॥ ३७॥
छिन्नमौर्वि धनुस्त्यक्त्वा भृशं क्रुद्धा हयासना ।
अङ्कुशं पातयामास तस्य वक्षसि दुर्मतेः ॥ ३८ ॥
तेनाङ्कुशेन ज्वलना पीतजीवितशोणितः ।
कुरुण्डो न्यपतद्भूमौ वज्ररुग्ण इव द्रुमः ॥ ३९ ॥
तदङ्कुशविनिष्क्रान्ताः पूतनाः काश्चिदुद्भटाः ।
तत्सैन्यं पाशनिष्पन्दं भक्षयित्वा क्षयं गताः॥४०॥
इत्थं कुरुण्डे निहते विंशत्यक्षोहिणीपतौ ।
हतावशिष्टास्तद्भृत्याः प्रपलायिषत द्रुतम् ॥ ४१ ॥
कुरुण्डं सानुजं युद्धे शक्तिसैन्यनिपातितम् ।
श्रुत्वा शून्यकनाथोऽपि निशश्वास भुजंगवत् ॥४२॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्य-
संवादे ललितोपाख्याने कुरुण्डवधो नाम
सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ॥ ८ ॥

[ करङ्कादिपञ्चसेनापतिवधः ॥ ]

हयग्रीवः

अथाश्वारूढया ध्वस्ते कुरुण्डे भण्डदानवः ।
कुटिलाक्षमिदं प्रोचे पुनरेव युयुत्सया ॥ १ ॥
स्वप्नेऽपि यन्न संभाव्यं यन्न श्रुतमितः पुरा ।
यच्च नो शङ्कितं चित्ते तदेतत्कष्टमागतम् ॥ २ ॥
कुरुण्डदुर्मदौ सत्त्वशालिनौ भ्रातरौ हतौ ।
दुष्टदास्याः प्रभावोऽयं मायाविन्या महत्तरः ॥३॥
इतः परं करङ्कादीन्पञ्च सेनाधिनायकान् ।
शतमक्षौहिणीनां च प्रस्थापय रणाङ्गणम् ॥ ४ ॥
ते युद्धदुर्मदाः शूराः संग्रामेषु तनुत्यजः ।
सर्वथैव विजेष्यन्ति दुर्विदग्धविलासिनीम् ॥ ५ ॥
इति भण्डवचः श्रुत्वा भृशं च त्वरयान्वितः ।
कुटिलाक्षः करङ्कादीनाजुहाव चमूपतीन् ॥ ६ ॥
ते स्वामिनं नमस्कृत्य कुटिलाक्षेण दर्शिताः ।
अम्भौ पतिष्णव इव क्रुधान्धा निर्ययुः पुरात् ॥७॥

तेषां प्रयाणनिःसाणरणितं भृशदुःसहम् ।
आकर्ण्य दिग्गजास्तूर्णं शीर्णकर्णा विघूर्णिरे ॥ ८ ॥
शतमक्षोहिणीनां च प्रचलत्केतुमालिकम् ।
उत्तरङ्गतुरङ्गालि वभौ मत्तमतङ्गजम् ॥ ९ ॥
ह्रेषमाणहयाकीर्णं क्रन्दद्भटकुलोद्भटम् ।
बृंह्यमाणगजं गर्जद्रथचक्रं चचाल तत् ॥ १० ॥
चक्रनेमिहतक्षोणीक्षोदक्षपितरोचिषा ।
वभूवे तुहिनासारच्छन्नेनेव विवस्वता ॥ ११ ॥
धूलीमयमिवाशेषमभवद्विश्वमण्डलम् ।
क्वचिच्छब्दमयं चैव निःसाणकठिनस्वनैः ॥ १२ ॥
उद्धूतैर्धूलिकाजालैराक्रान्ते दैत्यसैनिके ।
इयत्तया न सेनायाः संख्यापि परिभाविता ॥ १३ ॥
ध्वजा बहुविधाकारा मीनव्यालादिचित्रिताः ।
प्रचेलुर्धूलिकाजाले मत्स्या इव महोदधौ ॥ १४ ॥
तानापतत आलोक्य ललितासैनिकं प्रति ।
वित्रेसुरमराः सर्वे शक्तीनां भङ्गशङ्कया ॥ १५ ॥
ते करङ्कमुखाः पञ्च सेनापतय उद्धताः ।

सर्पिणीं नाम समरे मायां चक्रुर्महीयसीम् ॥१६॥
तैः समुत्पादिता दुष्टा सर्पिणी रणशाम्बरी ।
धूम्रवर्णा च धूम्रोष्ठी धूम्रलम्बपयोधरा ॥ १७ ॥
महोदधिवदत्यन्तगम्भीरकुहरोदरा ।
पुरश्चचाल शक्तीनां त्रासयन्ती मनो रणे ॥ १८ ॥
कद्रूरिव परा दुष्टा वहुसर्पविभूषणा ।
सर्पाणामुद्भवस्थानं मायामयशरीरिणाम् ॥ १९ ॥
सेनापतीनां नासीरे कम्पयन्ती महीतलम् ।
वल्गितं वहुधा चक्रे शिवाघोरविराविणी ॥ २० ॥
तयैव मायया पूर्वं ते सुरेन्द्रान्व्यजेषत ।
करङ्काद्या दुरात्मानः पञ्च पञ्चत्वकामुकाः ॥२१॥
अथ प्रववृधे युद्धं शक्तीनाममरद्विषाम् ।
अन्योन्यं वीरभाषाभिः प्रोत्साहितरणक्रुधा ॥२२॥
अत्यन्तसङ्कुलतया नविज्ञातपरस्पराः ।
शक्तयो दानवाश्चैव प्रजह्रुः शस्त्रपाणयः ॥ २३ ॥
अन्योन्यशस्त्रसंघट्टसमुत्थितहुताशने ।
प्रवृत्तविशिखस्तोमप्रच्छन्नहरिदन्तरे ॥ २४ ॥

बहुरक्तनदीपूरह्रियमाणहतद्विपे ।
मांसकर्दमनिर्मग्ननिष्पन्दरथमण्डले ॥ २५ ॥
विकीर्णकेशशैवालविलसद्रक्तनिर्झरे ।
अतिनिष्ठुरवीरोत्थसिंहनादभयङ्करे ॥ २६ ॥
रजोन्धकारतुमुले राक्षसीतृप्तिदायिनि ।
निस्त्रिंशकविनिर्भिण्णदैत्यकण्ठोत्थितासृजि ॥२७॥
प्रवृत्ते घोरसंग्रामे शक्तीनां च सुरद्विपाम् ।
अथ स्वं बलमादाय पञ्चभिः प्रेरिता सती ।
सर्पिणी बहुधा सर्पान्विससर्ज शरीरतः ॥२८॥
तक्षककर्कोटकसमा वासुकिप्रतिमत्विषः ।
नानाविधवपुर्वर्णा नानादंष्ट्राभयङ्कराः ।
नानाविधविषज्वाला निर्दग्धभुवनत्रयाः ॥ २९ ॥
दारदं वत्सनाभं च कालकूटमथापरम् ।
सौराष्ट्रजविषं घोरं ब्रह्मपुत्रमथापरम् ॥ ३० ॥
प्रदीपनं शौक्लिकेयमन्यान्यपि विषाणि च ।
व्यात्तैः स्वकीयवदनैर्विलोलरसनाढ्यैः ।
विकिरन्तः शक्तिसैन्ये विसस्रुः सर्पिणीतनोः॥३१

धूम्रवर्णा द्विवदनाः सर्पा अतिभयङ्कराः ।
सर्पिण्या नयनद्वन्द्वादुत्थिताः सर्पकोटयः ॥३२॥
अग्रे पुच्छे च वदनं धारयन्तः फणान्वितम् ।
आस्यादानीलवपुषः सर्पिण्याः फणिनोऽभवन् ३३
अन्ये शबलवर्णाभाश्चतुर्वक्राश्चतूरदाः ।
नासिकाविवरात्तस्या उद्गता उग्ररोचिषः ॥ ३४ ॥
पीतवर्णास्त्रिफणका दंष्ट्रातिविकटाननाः ।
सर्पिण्याः कर्णकुहरादुत्थिताः क्रोधदीपिताः ॥३५
लम्बमानमहाचर्मादतिस्थूलपयोधरात् ।
नाभिकुण्डाच्च बहवो रक्तवर्णा भयानकाः ॥ ३६ ॥
हालाहलं वमन्तश्च प्रोत्थिताः पन्नगाधिपाः ।
विदशन्तः शक्तिसेनां दहन्तो विषवह्निभिः ।
बध्नन्तो भोगपाशैश्च निघ्नन्तः फणमण्डलैः ॥३७॥
अत्यन्तमाकुलीचक्रुर्ललितेशीचमूममी ।
खण्ड्यमाना अपि मुहुः शक्तीनां शस्त्रकोटिभिः ३८
उपर्युपरि वर्धन्ते सर्पाः स्म प्रविसर्पिणः ।
नश्यन्ति बहवः सर्पा जायन्ते चापरे पुनः ॥३९॥

एकस्य नाशसमये बह्वोऽन्ये समुत्थिताः ।
मूलभूता यतो दुष्टा सर्पिणी न विनश्यति ॥४०॥
अतस्तत्कृतसर्पाणां नाशे सर्पान्तरोद्गमः ॥ ४१ ॥
ततश्च शक्तिसैन्यस्य शरीराणि विषानलैः ।
दह्यमानानि दुःखेन विमुक्तान्यभवन्रणे ॥ ४२ ॥
किंकर्तव्यविमूढेषु शक्तिचक्रेषु भोगिभिः ।
पराक्रमं बहुविधं चक्रुस्ते पञ्च दानवाः ॥ ४३ ॥
करङ्को गर्दभशतैर्युक्तं स्यन्दनमास्थितः ।
उत्पातवारिद इव प्रववर्ष शरावलीः ॥ ४४ ॥
काकवासितनामान्यः सेनानाथो गजे स्थितः ।
चक्रेण तीक्ष्णधारेण शक्तिसेनाममर्दयत् ॥ ४५ ॥
वज्रदन्ताभिधश्चान्यो भण्डदैत्यचमूपतिः ।
वज्रबाणाभिघातेन महोष्ट्रस्थो रणं व्यधात् ॥४६॥
अथ वज्रमुखश्चान्यश्चक्रीवन्तं महत्तरम् ।
आरुह्य कुन्तधाराभिः शक्तिचक्रममर्दयत् ॥ ४७ ॥
वज्रलोमाभिधश्चान्यश्चमूनाथो महाबलः ।
गृध्रयुग्यरथारूढः प्रजहार शिलीमुखैः ॥ ४८ ॥

तैः सेनापतिभिर्दुष्टैः प्रोत्साहितमहाहवे ।
शतमक्षोहिणीनां च निपपातैकहेलया ॥ ४९ ॥
सर्पिणी च दुराचारा बहुमायापरिग्रहा ।
क्षणेक्षणे कोटिसंख्यान्विससर्ज फणाधरान् ॥५०॥
तया व्याकुलितं सैन्यमवलोक्य रुषाकुला ।
नकुली गरुडारूढा संपपात रणाजिरे ॥ ५१ ॥
प्रतप्तकनकप्रख्या ललितातालुसंभवा ।
समस्तवाङ्मयाकारा दन्तैर्वज्रमयैर्युता ॥ ५२ ॥
सर्पिण्यभिमुखं तत्र विससर्ज निजं बलम् ॥५३॥
तयाधिष्ठिततुङ्गांसः पक्षविक्षिप्तभूधरः ।
गरुडः प्राचलद्युद्धे सुमेरुरिव जङ्गमः ॥ ५४ ॥
सर्पिणीमायया जातान्सर्पान्दृष्ट्वा भयानकान् ।
क्रोधरक्तेक्षणं व्यात्तं नकुली विदधे मुखम् ॥५५॥
अथ श्रीनकुलीदेव्या द्वात्रिंशद्दन्तकोटितः ।
द्वात्रिंशत्कोटयो जाता नकुलाः कनकप्रभाः ॥५६॥
इतस्ततः खण्डयन्तः सर्पिणीसर्पमण्डलम् ।
निजदंष्ट्रावमर्शेन नाशयन्तश्च तद्विषम् ॥ ५७ ॥

व्यभ्रमन्समरे घोरे बभ्रवः स्वर्णबभ्रवः ।
उत्कर्णाः क्रोधसंपर्काद्धृपिताशेषलोमकाः ॥ ५८ ॥
उत्पुच्छा नकुला व्यात्तवदना व्यदशन्नहीन् ।
एकैकमायासर्पस्य बभ्रुरेकैक उद्गतः ॥ ५९ ॥
तीक्ष्णदन्तनिपातेन खण्डयामास विग्रहम् ।
भोगिभोगस्रुतै रक्तैः सृक्कणी शोणतां गते ॥ ६० ॥
वहन्तो नकुलाजिह्वापल्लवैः पुप्लुवुर्मृधे ॥ ६१ ॥
नकुलैर्दश्यमानानामत्यन्तचटुलं वपुः ।
मुहुः कुण्डलितैर्भोगैः पन्नगानां व्यवेष्टत ॥ ६२ ॥
नकुलावलिदष्टानां नष्टासूनां फणाभृताम् ।
फणाशतसमुत्कीर्णा मणयो व्यरुचन्रणे ॥ ६३ ॥
नकुलाघातसंकीर्णफणाचक्रविनिर्गताः ।
मणयस्तन्महाकोपवह्निज्वाला इवाबभुः ॥ ६४ ॥
एवं प्रकारतो बभ्रुमण्डलैरवखण्डिते ।
मायामये सर्पजाते सर्पिणी कोपमादधे ॥ ६५ ॥
तया सह महद्युद्धं कृत्वा सा नकुलीश्वरी ।
गारुडास्त्रमतिक्रूरं समधत्त शिलीमुखे ॥ ६६ ॥

तद्वारुडास्त्रमुद्दामज्वालादीपितदिङ्मुखम् ।
प्रविश्य सर्पिणीदेहं सर्पमायां व्यशोषयन् ॥६७॥
मायाशक्तिविनाशेन सर्पिणी विलयं गता ।
क्रोधं च तद्विनाशेन प्राप्ताः पञ्च चमूवराः ॥६८
यद्बलेन सुरान्सर्वान्सेनान्यस्तेऽवमेनिरे ।
सा सर्पिणी कथाशेषं नीता नकुलिवीर्यतः ॥६९॥
अथ स्वबलनाशेन भृशं क्रुद्धाश्चमूवराः ।
एकोद्योगेन शस्त्रौघैर्नकुलीं तामवाकिरन् ॥ ७० ॥
एकैव सा तार्क्ष्यरथा पञ्चभिः पृतनेश्वरैः ।
लघुहस्ततया युद्धं चकार शरवर्षिणी ॥ ७१ ॥
पट्टिसैर्मुसलैश्चैव भिण्डिपालैः सहस्रशः ।
नकुलान्खण्डयामासुरितश्चेतश्च दानवाः ॥ ७२ ॥
ज्वलदग्निप्रकाशास्ते नकुला वैरिणां बलम् ।
वज्रसारमयैर्दन्तैर्व्यदशन्मर्मसीमसु ॥ ७३ ॥
ततो हाहाकृतं घोरं कुर्वाणा दैत्यकिंकराः ।
उदग्रदंशनकुलैर्नकुलैराकुलीकृताः ॥ ७४ ॥
उत्प्लुत्य गगनात्केचिद्घोरसीत्कारकारिणः ।

दशन्तिस्म द्विपां सैन्यं नकुलाः प्रज्वलत्क्रुधा ७५
कर्णेषु दष्टा नासायामन्ये दष्टाः क्षयं गताः ।
अपरे विलयं प्राप्ता दष्टा मर्मसु बभ्रुभिः ॥ ७६ ॥
पतन्ति केचिन्नकुला दानवानां शिरस्तटे ।
पृष्ठतो व्यदशन्केचिदागत्य कृतसीत्कृताः ॥ ७७ ॥
विकला विद्धमर्माणो भयवित्रस्तशस्त्रकाः ।
नकुलैरभिभूतास्ते न्यपतन्नमरद्रुहः ॥ ७८ ॥
केचित्प्रविश्य नकुला व्यात्तान्यास्यानि वैरिणाम् ।
भोगिभोगानिवाकृष्य प्रादशन्रसनालताः ॥ ७९ ॥
अन्ये कर्णेषु नकुलाः प्राविशन्देववैरिणाम् ।
सूक्ष्मरूपा विशन्त्यन्ये नासारन्ध्राणि बभ्रवः ॥८०
इति तैरभिभूतानि नकुलैरवलोकयन् ।
निजसैन्यानि दीनानि करङ्कः कोपमास्थितः ॥८१
अन्येऽपि च चमूनाथा लघुहस्ता महाबलाः ।
प्रतिबभ्रु शरस्तोमानवर्षन्वारिदा इव ॥ ८२ ॥
दैत्यसैन्यपतिप्रौढकोदण्डोत्थाः शिलीमुखाः ।
बभ्रूणां दन्तकोटीषु कठोरं घट्टनं व्यधुः ॥ ८३ ॥

चमूपतिशरव्यूहैराहतेभ्यः परःशतम् ।
बभ्रूणां वज्रदन्तेभ्यो निश्चक्राम हुताशनः ॥८४॥
पश्चापि ते चमूनाथा विसृष्टैरेकहेलया ।
स्फुरत्फलैः शरकुलैर्बभ्रुसेनाममर्दयन् ॥ ८५ ॥
इतस्ततश्चमूनाथक्षिप्तैश्च शरकोटिभिः ।
विशीर्णगात्रा नकुला नकुलीं पर्यवारयन् ॥ ८६ ॥
अथ सा नकुली वाणी वाङ्मयस्यैकनायिका ।
नकुलानां परावृत्त्या महान्तं कोपमास्थिता ॥८७॥
अक्षीणनकुलं नाम महास्त्रं सर्वतोमुखम् ।
वह्निज्वालापरीताग्रं संदधे शार्ङ्गधन्वनि ॥ ८८ ॥
तदस्त्रतो विनिष्ठ्यूता नकुलाः कोटिसंख्यकाः ।
वज्राङ्गा वज्ररोमाणो वज्रदन्ता महाजवाः॥८९॥
वज्रसाराश्च निबिडा वज्रवालभयंकराः ।
वज्राकारनखैस्तूर्णं दारयन्तो महीतलम् ॥ ९० ॥
वज्ररत्नप्रकाशेन लोचनेनोपशोभिताः ।
वज्रसंपातसदृशनासासीत्कारकारिणः ॥ ९१ ॥
मर्दयन्तः सुरारातिसैन्यं दशनकोटिभिः ।

पराक्रमं बहुविधं तेनिरे ते निरेनसः ॥ ९२ ॥
एवं नकुलकोटीभिर्वज्रघोरैर्महानखैः ।
विदष्टाः प्रत्यवयवं विनेशुर्दानवाधमाः ॥ ९३ ॥
एवं वज्रमयैर्वभ्रुमण्डलैः खण्डिते बले ।
शताक्षोहिणिकासंख्ये स्वस्वमात्रावशेषिताः॥९४॥
अतित्रासेन रोषेण गृहीताश्च चमूवराः ।
संग्राममधिकं तेनुः समाकृष्टशरासनाः ॥ ९५ ॥
तैः समं बहुधा युद्धं तन्वाना नकुलीश्वरी ।
उत्प्लुत्य गरुडारूढा निपपात रणाङ्गणे ॥ ९६ ॥
महाजवेन तार्क्ष्येण गत्वा सा नकुलीश्वरी ।
पट्टसेन करङ्कस्य चिच्छेद कठिनं शिरः ॥ ९७ ॥
काकवासितमुख्यानां चतुर्णामपि वैरिणाम् ।
उत्पत्योत्पत्य तार्क्ष्येण व्यलुनादसिना शिरः॥९८
तादृशं लाघवं दृष्ट्वा नकुल्या श्यामलाम्बिका ।
बहु मेने महासत्वां दुष्टासुरविनाशिनीम् ॥९९॥
निजाङ्गदेवतात्वं च तस्यै श्यामाम्बिका ददौ ।
लोकोत्तरे गुणे दृष्टे कस्य न प्रीतिसम्भवः १००

हतशिष्टा भीतभीताः शून्यकायपलायिताः ।
तमुदन्तं ततः श्रुत्वा भण्डश्चण्डो रुषाभवत् १०१

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने करङ्कादिपञ्चसेनापतिवधो नाम
अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

[ बलाहकादिसप्तसेनापतिवधः ]

हयग्रीवः ॥

हतेषु तेषु रोषान्धो निश्वसञ्शून्यकेश्वरः ।
कुटिलाक्षमिति प्रोचे युयुत्साव्याकुलाशयः ॥१॥
भद्र सेनापतेऽस्माकमभद्रं समुपागतम् ।
करङ्काद्याश्चमूनाथाः कन्दलद्भुजविक्रमाः ॥ २ ॥
सर्पिणीमायया सर्वगीर्वाणमदभञ्जनाः ।
पापीयस्या तया गूढमायया विनिपातिताः ॥३॥
बलाहकप्रभृतयः सप्त ये सैनिकाधिपाः ।
तानुदग्रभुजासत्वान्प्रहिणु प्रथनं प्रति ॥ ४ ॥

त्रिशतं चाक्षोहिणीनां प्रस्थापय सहैव ः ॥ ५ ॥
ते मर्दयित्वा ललितासैन्यं मायापरायणाः ।
विजयाग्रसरा भूयः संप्राप्स्यन्ति ममान्तिकम् ६
कीकसागर्भसंजातास्ते प्रचण्डपराक्रमाः ।
बलाहकमुखाः सप्त भ्रातरो जयिनः सदा ।
तेषामवश्यं विजयो भविष्यति रणाङ्गणे ॥ ७ ॥
इति भण्डासुरेणोक्तः कुटिलाक्षः समाह्वयत् ।
बलाहकमुखान्सप्त सेनापालान्मदोत्कटान् ॥ ८ ॥
बलाहकः प्रथमतस्ततः सूचीमुखोऽपरः ।
अन्यः फालमुखश्चैव विकर्णो विकटाननः ॥ ९ ॥
करालाक्षः करटकः सप्तैते वीर्यशालिनः ।
भण्डासुरं नमस्कृत्य युद्धकौतूहलोल्बणाः ॥ १० ॥
कीकसासूनवः सर्वे भ्रातरोऽन्योन्यमादृताः ।
अन्योन्यसुसहायाश्च निरगुर्नगरान्तरात् ॥११॥
त्रिशताक्षोहिणी सेना तानन्वगगमत्तदा ।
उल्लिखन्ती केतुजालैरम्बरे घनमण्डलम् ॥ १२ ॥
घोरसंराविणी पादाघातैर्मर्दितमेदिनी ।

पिबन्ती धूलिकाजालैरशेषानपि सागरान् ॥१३॥
भेरीनिःसाणतम्पोट्टपणवानकनिस्वनैः ।
नभोगुणमयं विश्वमादधाना पदेपदे ॥ १४ ॥
त्रिशताक्षोहिणीसेनां तां गृहीत्वा मदोद्धताः ।
प्रपेष्टुमिव विश्वस्य कैकसेयाः प्रतस्थिरे ॥ १५ ॥
रोषारुणमुखाः सूर्यमण्डलोद्दीप्तकङ्कटाः ।
उद्दीप्तशस्त्राभरणाश्चेलुर्दीप्तोर्ध्वकेशिनः ॥ १६ ॥
सप्तलोकान्प्रमथितुं प्रेपिताः पूर्वमुत्थिताः ।
भण्डासुरेण महता जगद्विजयकारिणा ॥ १७ ॥
सप्तलोकविमर्देन तेन दृष्टा महाबलाः ।
प्रेषिता ललितासैन्यं जेतुकामेन दुर्धिया ॥ १८ ॥
ते पतन्तो रणतलमुज्ज्वलच्छस्त्रपाणयः ।
शक्तिसेनामभिमुखं सक्रोधमभिदुद्रुवुः ॥ १९ ॥
मुहुः किलकिलारावैर्घोपयन्तो दिशो दश ।
देव्यास्तु सैनिकं यत्र तत्र ते जग्मुरुद्धताः ॥२०॥
सैन्यं च ललितादेव्याः सन्नद्धं शस्त्रभीषणम् ।
अभ्यमित्रीणमभवद्रुद्धभ्रुकुटिनिस्वनम् ॥ २१ ॥

पाशिन्यो मुसलिन्यश्च चक्रिण्यश्चापरा मुने ।
मुद्गरिण्यः पट्टसिन्यः कोदण्डिन्यस्तथा मुने २२
अनेकाः शक्तयस्तीव्रा ललितासैन्यसंगताः ।
पिबन्त्य इव दैत्याब्धिं संनिपेतुः सहस्रशः ॥२३॥
आयातायात हे दुष्टाः पापिन्यो वनिताधमाः ।
मायापरिग्रहैर्दूरं मोहयन्त्यो जडाशयान् ॥ २४ ॥
नेष्यामो भवतीरद्य प्रेतनाथनिकेतनम् ।
श्वसद्भुजगसंकाशैर्बाणैरत्यन्तभीषणैः ॥ २५ ॥
इति शक्तीर्भर्त्सयन्तो दानवाश्चक्रुराहवम् ।
शक्तयश्चापि संक्रुद्धा दानवान्प्रति कुम्भज ॥२६॥
रोषेण महताविष्टाश्चक्रुर्युद्धं सुदारुणम् ॥ २७ ॥
काचिच्चिच्छेद दैत्येन्द्रं कण्ठे पट्टसपातनात् ।
तद्गलोल्लुठितो रक्तपूर ऊर्ध्वमुखोऽभवत् ॥ २८ ॥
तत्र लग्ना बहुतरा गृध्रा मण्डलतांगताः ।
तेनैव प्रेतनाथस्य छत्रछविरुदञ्चिता ॥ २९ ॥
काचिच्छक्तिः सुराराति मुक्तशक्त्यायुधं रणे ।
लूनतच्छक्तिनैकेन बाणेन व्यलुनीत च ॥ ३० ॥

एका हस्तिनमारूढा कस्यचिद्दैत्यदुर्मतेः ।
उरःस्थले स्वकरिणो वप्राघातमशिक्षयत् ॥ ३१ ॥
काचित्प्रतिभटारूढं दन्तिनं कुम्भसीमनि ।
खड्गेन सहसा लूत्वा स्वकुचस्य प्रियं व्यधात् ३२
करमुक्तेन चक्रेण कस्यचिद्देववैरिणः ।
धनुर्दण्डं द्विधा कृत्वा स्वभ्रुवोः प्रीतिमातनोत् ३३
शक्तिरन्या शरैः शातैः शातयित्वा विरोधिनः ।
कृपाणयष्टिं रोमाल्याः स्वकीयाया मुदं व्यधात् ३४
काचिन्मुद्गरपातेन चूर्णयित्वा विरोधिनः ।
रथचक्रं नितम्बस्य स्वस्य तेनातनोन्मुदम् ॥ ३५ ॥
रथकूबरमुग्रेण कस्यचिद्दानवप्रभोः ।
खड्गेन भिन्दती स्वस्य प्रियमूर्वोस्ततान ह ॥३६॥
अभ्यन्तरं शक्तिसेना दैत्यानां प्रविवेश च ।
प्रविवेशच दैत्यानां सेना शक्तिबलान्तरम् ॥ ३७॥
नीरक्षीरवदत्यन्ताश्लेषः शक्तिसुरद्विषाम् ।
संकुलाकारतां प्राप्तो युद्धकालेऽभवत्तदा ॥ ३८ ॥
शक्तीनां खड्गपातेन लूनशुण्डारदद्वयाः ।

दैत्यानां करिणो मत्ता महाक्रोडा इवाभवन् ३९
इत्थं प्रवृत्ते समरे वीराणां च भयङ्करे ।
अशक्ये स्मर्तुमप्यन्तःकातरत्ववतां नृणाम् ।
भीषणानां भीषणे च शस्त्रव्यापारदुर्गमे ॥ ४० ॥
बलाहको महागृध्रं वज्रतीक्ष्णस्वकञ्चुकम् ।
कालदण्डोपमं जङ्घाकाण्डे चण्डपराक्रमम् ॥४१॥
संहारगुप्तनामानं पूर्वमग्नेः समुत्थितम् ।
धूमवद्धूसराकारं पक्षक्षेपभयङ्करम् ॥ ४२ ॥
आरुह्य विविधं युद्धं कृतवान्युद्धदुर्मदः ।
पक्षौ वितत्य क्रोशार्धसंमितौ भीमनिस्वनौ ॥ ४३
अङ्गारकुण्डवत्तुण्डं विदार्याभक्षयच्चमूम् ।
संहारगुप्तः सहसा गृध्रः क्रूरविलोचनः ।
बलाहकमुवाहोच्चैराकृष्टधनुषं रणे ॥ ४४ ॥
बलाहको धनुर्धून्वन्गृध्रपृष्ठकृतस्थितिः ।
सपक्षशैलकूटस्थो बलाहक इवाबभौ ॥ ४५ ॥
सूचीमुखश्च दैत्येन्द्रः सूचिनिष्ठुरपक्षतिम् ।
काकवाहनमारुह्य कठिनं समरं व्यधात् ॥ ४६ ॥

मत्तकासरशृङ्गाभं चञ्चूदण्डं समुद्वहन् ।
कालदण्डप्रमाणेन जङ्घाकाण्डेन भीषणः ॥ ४७ ॥
पुष्कलावर्तकसमौ जम्बालसदृशद्युती ।
क्रोशमात्रायतौ पक्षावुभावपि समुद्वहन् ॥ ४८ ॥
सूचीमुखाधिष्ठितोऽसौ करटः कटुवाशितः ।
ममर्द चञ्चुघातेन शक्तीनां मण्डलं महत् ॥४९॥
अथ कालमुखः फालं गृहीत्वा निजमायुधम् ।
कङ्कमारुह्य समरं चकार गिरिसंनिभम् ॥ ५० ॥
विकटाख्यश्च दैत्येन्द्रश्चमूभर्ता महाबलः ।
भेरुण्डपतगारूढः प्रचण्डं युद्धमातनोत् ॥ ५१ ॥
विकटाननामानं विलसत्पट्टसायुधम् ।
उवाह समरे चण्डः कुक्कुटोऽतिभयङ्करः ॥ ५२ ॥
गर्जन्कण्ठस्थरोमाणि हर्षयञ्ज्वलदीक्षणः ।
पश्यन्पुरः शक्तिसैन्यं चचाल चरणायुधः ॥५३॥
करालाक्षश्चमूभर्ता षष्ठोऽत्यन्तगरिष्ठदोः ।
वज्रनिष्ठुरघोषश्च प्राचलत्प्रेतवाहनः ॥ ५४ ॥
तपःश्मशानमन्त्रेण तेन संसाधितः पुरा ।

प्रेतो भूतसमाविष्टस्तमुवाह रणाजिरे ॥ ५५ ॥
अवाङ्मुखो दीर्घबाहुः प्रसारितपदद्वयः ।
प्रेतो वाहनतां प्राप्तः करालाक्षमथावहत् ॥ ५६ ॥
अन्यः करटको नाम दैत्यसेनाशिखामणिः ।
मर्दयामास शक्तीनां सैन्यं वेतालवाहनः ॥ ५७ ॥
योजनायतमूर्तिः स वेतालः क्रूरलोचनः ।
श्मशानभूमौ वेतालमन्त्रेणानेन साधितः ।
मर्दयामास पृतनां शक्तीनां तेन देशितः ॥ ५८ ॥
तस्य वेतालवर्यस्य वर्तमानोऽससीमनि ।
बहुधायुध्यत तदा शक्तिभिः सह दानवः ॥ ५९ ॥
एवमेते खलासानः सप्त सप्तार्णवोपमाः ।
शक्तीनां सैनिकं तत्र व्याकुलीचक्रुरुद्धताः ॥६०॥
ते सप्त पूर्वं तपसा सवितारमतोषयन् ।
तेन दत्तो वरस्तेषां तपस्तुष्टेन भास्वता ॥ ६१ ॥
कैकसेया महाभागा भवतां तपसाधुना ।
परितुष्टोऽस्मि भद्रं वो भवन्तो वृण्वतां वरम् ६२
इत्युक्ते दिननाथेन कैकसेयास्तपस्कृतः ।

प्रार्थयामासुरत्यर्थं दुर्दान्तं वरमीदृशम् ॥ ६३ ॥
रणेषु संनिधातव्यमस्माकं नेत्रकुक्षिषु ।
भवता घोरतेजोभिर्दहता प्रतिरोधिनः ॥ ६४ ॥
त्वया यदा संनिहितं तपनास्माकमक्षिषु ।
तदाक्षिविषयः सर्वो निश्चेष्टो भवतात्प्रभो ॥ ६५ ॥
त्वत्संनिधिसमृद्धेन नेत्रेणास्माकमीक्षिताः ।
स्तब्धशस्त्रा भविष्यन्ति प्रतिरोधकसैनिकाः॥६६॥
ततः स्तब्धेषु शस्त्रेषु वीक्षणादेव नः प्रभो ।
निश्चेष्टा रिपवोऽस्माभिर्हन्तव्याः सुकरत्वतः॥६७॥
इति पूर्वं वरः प्राप्तः कैकसेयैर्दिवाकरात् ।
वरप्रदानं यत्तत्र युद्धे सस्मेरुरुद्धताः ॥ ६८ ॥
अथ सूर्यसमाविष्टनेत्रैस्तैर्विनिरीक्षिताः ।
शक्तयः स्तब्धशस्त्रौघा विफलोत्साहतां गताः ६९
कीकसातनयैस्तैस्तु सप्तभिः सत्वशालिभिः ।
विष्टम्भितास्त्रशस्त्राणां शक्तीनां नोद्यमोऽभवत्७०
उद्यमे क्रियमाणेऽपि शस्त्रस्तम्भेन भूयसा ।
अभिभूताः सनिश्वासं शक्तयो जोषमासत ॥७१॥

अथ तेऽवसरं प्राप्य नानाप्रहरणोद्यताः ।
व्यमर्दयञ्शक्तिसैन्यं दैत्याः स्वस्वामिदर्शिताः ७२
शक्तयस्तास्तत्र सैन्ये निर्व्याधारनिजायुधाः ।
अक्षोभ्यन्त शरैस्तेषां वज्रकङ्कटभेदिभिः ॥ ७३ ॥
शक्तयो दैत्यशस्त्रालिविद्धगात्रस्रुतासृजः ।
सपल्लवा रणे रेजुः कंकेलिलतिका इव ॥ ७४ ॥
हाहाकारं वितन्वानाः प्रपन्ना ललितेश्वरीम् ।
चुक्रुशुः शक्तयः सर्वास्तैः स्तम्भितनिजायुधाः ७५
अथ देव्याज्ञया दण्डनाथा प्रत्यङ्गरक्षिणी ।
तिरस्करिणिकादेवी समुत्तस्थौ रणाजिरे ॥ ७६ ॥
तमोलिप्ताह्वयं नाम विमानं सर्वतोमुखम् ।
महामाया समारुह्य शक्तीनामभयं व्यधात् ॥७७
तमालश्यामलाकारा श्यामकञ्चुकधारिणी ।
श्यामच्छाये तमोलिप्ते श्यामयुग्यतुरंगमे ॥ ७८ ॥
वसन्ती मोहनाभिख्यं धनुरादाय सस्वनम् ।
सिंहनादं विनद्यैपूनवर्षत्सर्पसन्निभान् ॥ ७९ ॥
कृष्णरूपभुजंगाभानयोमुसलसंनिभान् ।

मोहनास्त्रविनिष्ठ्यूतान्दैत्या बाणान्न सेहिरे ॥८०॥
इतस्ततो मृद्यमाना महामायाशिलीमुखैः ।
प्रकोपं परमं प्राप्ता बलाहकमुखाः खलाः ॥८१॥
अथो तिरस्करिण्यम्बा दण्डनाथानिदेशतः ।
अन्धाभिधं महाशस्त्रं मुमोच द्विपतां गणे ॥८२॥
बलाहकाद्यास्ते सप्त दिननाथवरोद्धताः ।
अन्धास्त्रेण निजं नेत्रं दधिरे छादितं यथा ॥८३॥
तिरस्करिणिकादेव्या महामोहनधन्वनः ।
उद्गतेनान्धबाणेन चक्षुस्तेषां व्यधीयत ॥ ८४ ॥
अन्धीकृताश्च ते सप्त नतु प्रैक्षन्त किंचन ।
तद्वीक्षणस्य विरहाच्छस्त्रस्तम्भः क्षयं गतः ॥ ८५ ॥
पुनः ससिंहनादं ताः प्रोत्पत्यायुधपाणयः ।
चक्रुः समरसन्नाहं दैत्यानां प्रजिघांसया ॥ ८६ ॥
तिरस्करिणिकादेवीमग्रे कृत्वा महाबलाम् ।
सदुपायप्रसंगेन भृशं रुष्टा रणं व्यधुः ॥ ८७ ॥
साधु साधु महाभागे तिरस्करिणिकाम्बिके ।
स्थाने कृतस्तिरस्कारो दृशामेषां दुरात्मनाम् ॥८८

त्वं हि दुर्जननेत्राणां तिरस्कारमहौषधिः ।
त्वया बद्धदृशानेन दैत्यचक्रेण भूयते ॥ ८९ ॥
देवकार्यमिदं देवि त्वया सम्यगनुष्ठितम् ।
अस्मादृशामजय्येषु यदेषु व्यसनं कृतम् ॥ ९० ॥
तत्त्वयैव दुराचारानेतान्सप्त महासुरान् ।
निहताँल्ललिता श्रुत्वा संतोषं परमाप्स्यति ॥ ९१ ॥
एवं त्वया विरचिते दण्डिनी प्रीतिमाप्स्यति ।
मन्त्रिण्यपि महाभागा यास्यत्येव परां मुदम् ॥९२॥
तस्मात्त्वमेतान्सप्तैव निगृहाण रणाजिरे ।
एषां सैन्यं तु सकलं नाशयाम उदायुधाः ॥९३॥
इत्युक्त्वा प्रेरिता ताभिः शक्तिभिर्युद्धकौतुकात् ।
तमोलिप्तेन यानेन बलाहकबलं ययौ ॥ ९४ ॥
अस्त्रेण च रुषा चान्धं बलाहकमहासुरम् ।
आकृष्य केशेष्वसिना चकर्तान्तर्धिदेवता ॥९५॥
तस्य वाहनगृध्रस्य लुनाना पत्त्रिणा शिरः ।
सूचीमुखस्याभिमुखं तिरस्करिणिका व्रजत् ॥९६॥
तस्य पट्टसपातेन विलूय कठिनं शिरः ।

अन्येषामपि पञ्चानां पञ्चत्वमकरोच्छरैः ॥९७॥
तैः सप्तदैत्यमुण्डैश्च ग्रथितान्योन्यकेशकैः ।
हारदाम गले कृत्वा ननर्तान्तर्धिदेवता ॥ ९८ ॥
समस्तमपि तत्सैन्यं शक्तयः क्रोधमूर्च्छिताः ।
हत्वा तद्रक्तसलिलैर्वह्वीः प्रावाहयन्नदीः ॥ ९९ ॥
तत्राश्चर्यमभूद्भूरि महामायाम्बिकाकृतम् ।
बलाहकादिसेनानीदृष्टिरोधनवैभवात् ॥ १०० ॥
हतशिष्टाः कतिपये बहुवित्राससंकुलाः ।
शरणं जग्मुरत्यार्ताः क्रन्दन्तः शून्यकेश्वरम् १०१
दण्डिनी च महामायां प्रशंसन्ती पुनः पुनः ।
प्रसादमन्थरं चक्षुस्तस्यामाधाय पिप्रिये ॥ १०२ ॥
साधुसाध्विति तत्रस्थाः शक्तयः कम्प्रमौलयः ।
तिरस्करिणिकां देवीमश्लाघन्त पदेपदे ॥ १०३ ॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने बलाहकादिसप्तसेनापतिवधो नाम
एकोनविंशोऽध्यायः ॥ १९ ॥

# विंशोऽध्यायः ॥ २० ॥

[विषङ्गादिपलायनम् ॥]

श्रीहयग्रीवः ॥

ततः श्रुत्वा वधं तेषां तपोबलवतामपि ।
निश्वसन्कृष्णसर्पेन्द्र इव भण्डमहासुरः ॥ १ ॥
एकान्ते मन्त्रयामास समाहूय सहोदरौ ।
भण्डः प्रचण्डशौण्डीर्यः काङ्क्षमाणो रणे जयम् २
युवराजो विशुक्रोऽथ विषङ्गेण यवीयसा ।
भण्डासुरं नमस्कृत्य मन्त्रस्थानमुपाविशत् ॥ ३ ॥
अत्याप्तैर्मन्त्रिभिर्युक्तः कुटिलाक्षपुरोगमैः ।
ललिताविजये मन्त्रं चकार क्वथिताशयः ॥ ४ ॥

भण्डः ॥

अहो बत कुलभ्रंशः समायातः सुरद्विषाम् ।
उपेक्षामधुना कर्तुं प्रवृत्तो भगवान्विधिः ॥ ५ ॥
मद्भृत्यनाममात्रेण विद्रवन्ति दिवौकसः ।
तादृशानामिहास्माकमागतोऽयं विपर्ययः ॥ ६ ॥
करोति बलिनं क्लीबं धनिनं धनवर्जितम् ।

दीर्घायुपमनायुष्कं दुर्दान्ता भवितव्यता ॥ ७ ॥
क्क सत्त्वमस्मद्बाहूनां केयं दुर्ललिता वधूः ।
अकाण्ड एव विधिना पात्यते निष्ठुरः पविः ॥८॥
सर्पिणीमाययोदग्रास्तया दुर्दान्तशौर्यया ।
अधिसंग्राममभूचक्रं सेनान्यो विनिपातिताः ॥ ९ ॥
वरप्रसादाद्देवस्य दिवसानामधीशितुः ।
कवलीकृतगीर्वाणाः कैकसेयाश्च पातिताः ॥१०॥
एवमुद्दामदर्पान्धा वनिता कापि मायिनी ।
यदि संप्रहरत्यस्मान्धिग्बलं नो भुजार्जितम् ॥११
इमं प्रसङ्गं वक्तुं च जिह्वा जिह्वेति मामकी ।
वनिता किमु मत्सैन्यं मर्दयिष्यति दुर्मदा ॥ १२॥
तदत्र मूलच्छेदाय तस्या यत्नो विधीयताम् ।
मया चारमुखाज्ज्ञाता तस्या वृत्तिर्महाबला ॥१३
सर्वेषामपि सैन्यानां पश्चादेवावतिष्ठते ।
अग्रतश्चलितं सैन्यं हयहस्तिरथादिकम् ॥ १४ ॥
अस्मिन्नेव ह्यवसरे पार्ष्णिग्राहो विधीयताम् ।
पार्ष्णिग्राहमिमं कर्तुं विषङ्गश्चतुरो भवेत् ॥ १५ ॥

तेन क्रोधबलोन्मत्ता वहुसंग्रामदुर्मदाः ।
दश पञ्च च सेनान्यः सह यान्तु युयुत्सया १६
पृष्ठतः परिवारास्तु न तथा सन्ति ते पुनः ।
अल्पैस्तु रक्षिता सा स्यात्तेनैवासौ सुनिग्रहा ॥१७
अतस्त्वं वहुसंनाहमविधाय बलोत्कटः ।
विपङ्ग गुप्तरूपेण पार्ष्णिग्राहं समाचर ॥ १८ ॥
अल्पीयसी त्वया सार्धं सेना गच्छतु विक्रमिन् ।
सज्जाश्च सन्तु सेनान्यो दिक्पालविजयोद्धताः१९
अक्षोहिण्यश्च सेनानां दशपञ्च चलन्तु ते ।
त्वं गुप्तवेपस्तां दुष्टां संनिपत्य दृढं जहि ॥ २० ॥
सैव निःशेषशक्तीनां मूलभूता महीयसी ।
तस्याः समूलनाशेन शक्तिवृन्दं विनश्यति ॥२१॥
कन्दच्छेदे सरोजिन्या दलजालमिवाम्भसि ।
सर्वेषामपि पश्चाद्यो रथश्चलति भास्वरः ॥ २२ ॥
दशयोजनसंपन्ननिजदेहसमुच्छ्रयः ।
महामुक्तातपत्रेण सर्वोर्ध्वं परिशोभितः ॥ २३ ॥
वहन्मुहुर्वीज्यमानं चामराणां चतुष्टयम् ।

उत्तुङ्गकेतुसंघातलिखिताम्बुदमण्डलः ॥ २४ ॥
तस्मिन्रथे समायाति सा दुष्टा हरिणेक्षणा ।
निभृतं संनिपत्य त्वं चिह्नेनानेन लक्षिताम् ॥२५॥
तां विजित्य दुराचारां केशेष्वाकृष्य मर्दय ।
पुरतश्चलिते सैन्ये सत्वशालिनि सा वधूः ॥२६॥
स्त्रीमात्ररक्षा भवतो वशमेष्यति सत्वरम् ।
भवत्सहायभूतानां सेनेन्द्राणामिहाभिधाः ॥२७॥
शृणु यैर्भवतो युद्धे साह्यं कार्यमतन्द्रितैः ।
आद्यो दमनको नाम दीर्घजिह्वो द्वितीयकः ॥२८॥
हुम्बेको हुलुमुल्लश्च कल्कसः कल्किवाहनः ।
पुल्कसः पुण्ड्रकेतुश्च चण्डबाहुश्च कुक्कुरः ॥ २९ ॥
जम्बुकाक्षो जम्भनश्च तीक्ष्णशृङ्गस्त्रिकण्टकः ।
चन्द्रगुप्तश्च पञ्चैते दश चोक्ताश्चमूवराः ॥ ३० ॥
एकैकाक्षोहिणीयुक्ताः प्रत्येकं भवता सह ।
आगमिष्यन्ति सेनान्यो दमनाद्या महाबलाः ३१
परस्य कटकं नैव यथा जानाति ते गतिम् ।
तथा गुप्तसमाचारः पार्ष्णिग्राहं समाचर ॥ ३२ ॥

अस्मिन्कार्ये सुमहति प्रौढिमानं समुद्वहन् ।
विषङ्ग त्वं हि लभसे जयसिद्धिमनुत्तमाम् ॥३३॥
इति मन्त्रितमन्त्रोऽयं दुर्मन्त्रो भण्डदानवः ।
विषङ्गं प्रेषयामास ससैन्यं सैन्यपालकैः ॥ ३४ ॥
अथ श्रीललितादेव्याः पार्ष्णिग्राहकृतोद्यमे ।
युवराजानुजे दैत्ये सूर्योऽस्तगिरिमाययौ ॥ ३५ ॥
प्रथमे युद्धदिवसे व्यतीते लोकभीषणे ।
अन्धकारः समभवत्तस्य साह्यचिकीर्षया ॥ ३६ ॥
महिषस्कन्धधूम्राभं वनक्रोडवपुर्द्युति ।
नीलकण्ठगलच्छायं निबिडं ववृधे तमः ॥ ३७ ॥
कुञ्जेषु पिण्डितमिव प्रधावदिव सन्धिषु ।
उज्जिहानमिव क्षोणीविवरेभ्यः सहस्रशः ॥ ३८ ॥
निर्गच्छदिव शैलानां भूरिकन्दरमन्दिरात् ।
क्वचिद्दीपप्रभाजाले कृतकातरचेष्टितम् ॥ ३९ ॥
दत्तावलम्बनमिव स्त्रीणां कर्णोत्पलत्विषि ।
एकीभूतमिव प्रौढदिङ्नागमदकज्जले ॥ ४० ॥
आबद्धमैत्रीकमिव स्फुरच्छाद्वलमण्डले ।

कृतप्रियाश्लेषमिव स्फुरन्तीष्वसियष्टिषु ॥ ४१ ॥
गुप्तप्रविष्टमिव च श्यामासु वनपङ्क्तिषु ।
क्रमेण बहुलीभूतं प्रससार महत्तमः ॥ ४२ ॥
त्रियामा वामनयना नीलकञ्चुकरोचिषा ।
तिमिरेणावृतं विश्वं न किंचित्प्रत्यपद्यत ॥ ४३ ॥
असुराणां राक्षसानां रात्रिरेव बलावहा ।
तेषां मायाविलासोऽयं तस्यामेव हि वर्धते ॥४४॥
अथ प्रचलितं सैन्यं विषङ्गेण महौजसा ।
धौतखड्गलताच्छाया वर्धिष्णुतिमिरत्विषः ॥४५॥
दमनाद्याश्च सेनान्यः श्यामकङ्कटधारिणः ।
श्यामोष्णीषधराः श्यामवर्णसर्वपरिच्छदाः ॥४६
एकत्वमिव संप्राप्तास्तिमिरेणातिभूयसा ।
विषङ्गमनु सञ्चेलुः कृताग्रजनमस्कृतिम् ॥ ४७ ॥
कूटेन युद्धकृत्येन विजिगीषुर्महेश्वरीम् ।
मेघडम्बरकं नाम दधे वक्षसि कङ्कटम् ॥ ४८ ॥
यथा तस्य निशायुद्धानुरूपो वेषसंग्रहः ।
तथा कृतवती सेना श्यामलं कञ्चुकादिकम् ॥४९

नच दुन्दुभिनिस्वानो न च मर्दलगर्जितम् ।
पणवानकभेरीणां नच घोपविजृम्भणम् ॥ ५० ॥
गुप्ताकाराः प्रचलितास्तिमिरेण समावृताः ।
परैरदृश्यगतयो निष्कोशीकृतरिष्टयः ॥ ५१ ॥
पश्चिमाभिमुखं यान्तीं ललितायाः पताकिनीम् ।
आवृत्योत्तरमार्गेण पूर्वभागमशिश्रयन् ॥ ५२ ॥
निश्वासमपि सस्वानमकुर्वन्तः पदेपदे ।
सावधानाः प्रचलिताः पार्ष्णिग्राहाय दानवाः ५३
भूयः पुरस्य दिग्भागं गत्वा मन्दपदक्रमाः ।
ललितासैन्यमेव स्वान्सूचयन्तः प्रपृच्छताम् ॥५४
आवृत्य निभृतं पृष्ठे कवचच्छन्नविग्रहाः ।
चक्रराजरथं तुंगं मेरुमन्दरसंनिभम् ॥ ५५ ॥
अपश्यन्नतिदीप्ताभिः शक्तिभिः परिवारितम् ।
तत्र मुक्तातपत्रस्य वर्तमानामधस्तले ॥ ५६ ॥
सहस्रादित्यसङ्काशां पश्चिमाभिमुखीं स्थिताम् ।
कामेश्वर्यादिनित्याभिः स्वसमानसमृद्धिभिः ॥५७॥
नर्मालापविनोदेन सेव्यमानां रथोत्तमे ।

तां तथाभूतवृत्तान्तां तत्ताद्दशरणोद्यताम् ॥५८॥
पुरोगतं महत्सैन्यं वीक्षमाणां सकौतुकम् ।
मत्वानवहितामेव विषङ्गः स दुराशयः ॥ ५९ ॥
पृष्ठवंशं रथेन्द्रस्य घट्टयामास सैनिकैः ।
तत्राणिमादिशक्तीनां परिवारवरूथिनीम् ॥ ६० ॥
विपाठैः पाटयामासुरदृश्यैरन्धकारगाः ।
ततश्चक्ररथेन्द्रस्य नवमे पर्वणि स्थिताः ॥ ६१ ॥
महाकलकलं चक्रुरणिमाद्याः परश्शतम् ।
पट्टसैर्द्रुघणैश्चैव भिण्डिपालैर्मुसुण्डिभिः ॥ ६२ ॥
कठोरवज्रनिर्घातनिष्ठुरैः शक्तिमण्डलम् ।
मर्दयन्तो महासत्वाः समरं बहु तेनिरे ॥ ६३ ॥
आकस्मिकरणोत्साहविपर्यस्तायुधग्रहम् ।
अकाण्डक्षुभितं चासीद्रथस्थं शक्तिमण्डलम् ॥६४॥
अदृश्यमानशस्त्राणामदृश्यनिजवर्ष्मणाम् ।
तिमिरच्छन्नरूपाणां दानवानां शिलीमुखैः ॥६५॥
इतस्ततो बहुश्लिष्टभिन्नवर्मितमर्म तत् ।
शक्तीनां मण्डलं तेन क्रन्दनं ललितां प्रति ॥६६॥

पर्वानुक्रमतस्तत्र संप्राप्तं सुमहद्भयम् ।
कर्णाकर्णिकयाकर्ण्य ललिता कोपमास्थिता ॥६७॥
एतस्मिन्नन्तरे भण्डश्चण्डदुर्मन्त्रपण्डितः ।
दशाक्षोहिणिकायुक्तं कुटिलाक्षं महौजसम् ।
ललितासैन्यनासीरे युद्धाय प्रजिघाय सः ॥६८॥
यथा पश्चात्कलकलं श्रुत्वाग्रे वर्तिनी चमूः ।
नागच्छति तथा चक्रे कुटिलाक्षो महद्रणम् ॥६९॥
एवं चोभयतो युद्धं पश्चादग्रे तदाभवत् ।
अत्यन्ततुमुलं चासीच्छक्तीनां सैनिकं महत् ॥७०
नक्तं ससत्वा दैत्येन्द्रास्तिमिरेण समावृताः ।
इतस्ततः शिथिलतां कटकं निन्युरुद्धताः ॥ ७१ ॥
विषङ्गेण दुराशेन दमनाद्यैश्चमूवरैः ।
चमूभिश्च प्रणिहिता न्यपतञ्शस्त्रकोटयः ॥ ७२ ॥
ताभिर्दैत्यास्त्रमालाभिश्चक्रराजरथो वृतः ।
वनावलीनिबिडितः शैलराज इवाबभौ ॥ ७३ ॥
आक्रान्तपर्वणाधस्ताद्विषङ्गेण दुरात्मना ।
मुक्त एकः शरो देव्यास्तालवृन्तमचूर्णयत् ॥७४॥

अथ तेनात्याहितेन संभ्रान्ते शक्तिमण्डले ।
कामेश्वरीमुखा नित्या महान्तं क्रोधमाययुः ॥७५॥
ईषद्भ्रुकुटिसंसर्गं श्रीदेव्या वदनाम्बुजे ।
अवलोक्य भृशोद्विग्नां नित्या दधुरतिक्रुधम् ॥७६॥
नित्याः कालस्वरूपिण्यः प्रत्येकं तिथिविग्रहाः ।
कोपमुद्वीक्ष्य सम्राज्ञ्या युद्धाय दधुरुद्यमम् ॥७७॥
प्रणिपत्य च तां देवीं महाराज्ञीं महोदयाम् ।
ऊचुर्वाचमकाण्डोत्थयुद्धकौतुकगद्गदम् ॥ ७८ ॥

नित्याः ॥

देविदेवि महाराज्ञि त्वयाग्रे प्रेपितां चमूम् ।
दण्डिनीमन्त्रिनाथादिमहाशक्त्यभिपालिताम् ॥७९॥
धर्षितुं कातरा दुष्टा मायाच्छद्मपरायणाः ।
पार्ष्णिग्रहणयुद्धेन बाधन्ते रथपुंगवम् ॥ ८० ॥
तस्मात्तिमिरसंछन्नमूर्तीनां त्रिदशद्विषाम् ।
शमयामो वयं दर्पं क्षणमात्रं विलोकय ॥ ८१ ॥
या वह्निवासिनी नित्या या ज्वालामालिनी परा ।
ताभ्यां प्रदीपिते युद्धे द्रष्टुं शक्याः सुरद्विषः ॥८२॥

प्रशमय्य महादर्पं पाणिग्राहप्रवर्तिनाम् ।
सहसैवागमिष्यामो रक्षितुं श्रीमदङ्गकम् ॥ ८३ ॥
आज्ञां देहि महाराज्ञि मर्दनार्थं दुरात्मनाम् ।
इत्युक्ते सति नित्याभिस्तथास्त्विति जगाद सा ८४
अथ कामेश्वरी नित्या कुण्डलीकृतकार्मुका ।
बालारुणमिव क्रोधारुणं वक्त्रं वितन्वती ॥ ८५ ॥
रेरे तिष्ठत पापिष्ठा मायामद्य भिनद्मि वः ।
अन्धकारमनुप्राप्य कूटयुद्धपरायणाः ॥ ८६ ॥
इति तान्भर्त्सयन्ती सा तूणीरोत्खातसायका ।
पर्वावरोहणं चक्रे क्रोधेन प्रस्खलद्गतिः ॥ ८७ ॥
सज्जकार्मुकहस्ताश्च भगमालापुरःसराः ।
अन्याश्च चलिता नित्याः कृतपर्वावरोहणाः ॥८८॥
ज्वालामालिनि नित्या च सा नित्या वह्निवासिनी ।
सज्जायुधे स्वतेजोभिः समदीपयतां रणम् ॥ ८९ ॥
अथ ते दुष्टदनुजाः प्रदीप्ते युद्धमण्डले ।
प्रकाशवपुषस्तत्र महान्तं कोपमाययुः ॥ ९० ॥
कामेश्वर्यादिका नीत्यास्ताः पञ्चदश सायुधाः ।

ससिंहनादास्तान्दैत्यानमृद्नन्नेकहेलया ॥ ९१ ॥
महान्कलकलस्तत्र समभूद्युद्धसीमनि ।
मन्दरक्षोभिताम्भोधिवेल्लत्कल्लोलमांसलः ॥ ९२ ॥
ताश्च नित्याः कलक्काणकङ्कणैर्युधि पाणिभिः ।
आकृष्यमाणकोदण्डास्तेनिरे युद्धमुद्धताः ॥ ९३ ॥
यामद्वितयपर्यन्तमेवं युद्धं प्रवर्तत ।
नित्यानां निशितैर्बाणैरक्षोहिण्यश्च संहृताः ॥९४॥
जघान दमनं दुष्टं कामेशी प्रथमं शरैः ।
दीर्घजिह्वं चमूनाथं भगमाला व्यदारयत् ॥ ९५॥
नित्यक्लिन्ना च भेरुण्डा हुम्बेकं हुडुमुल्लकम् ।
कल्कसं वह्निवासा च निजघान शितैः शरैः ॥९६
महावज्रेश्वरी बाणैरच्छिनत्कल्किवाहनम् ।
पुल्कसं शिवदूती च प्राहिणोद्यमसादनम् ॥९७॥
पुण्ड्रकेतुं भुजोद्दण्डं त्वरिता समदारयत् ।
कुलसुन्दरिनित्या च चण्डबाहुं च कुक्कुरम् ॥९८॥
अथ नीलपताका च विजया च जयोद्धते ।
जम्बुकाक्षं जम्भनं च व्यातन्वातां रणे बलिम् ९९

सर्वमङ्गलका नित्या तीक्ष्णशृङ्गमखण्डयन् ।
ज्वालामालिनिका नित्या जघानोग्रं त्रिकण्टकम् ।
चन्द्रगुप्तं च दुश्शीलं चित्रानित्या व्यदारयन्१००
सेनानाथेषु सर्वेषु निहतेषु दुरात्मसु ।
विषङ्गः परमक्रुद्धश्चचार पुरतो बली ॥ १०१ ॥
अथ यामावशेषायां यामिन्यां घटिकाद्वयम् ।
नित्याभिः सह संग्रामं विधाय स दुराशयः १०२
अशक्यत्वं समुद्वीक्ष्य चक्रमे प्रपलायितुम् ।
कामेश्वरीकराकृष्टचापोत्थैर्निशितैः शरैः ॥१०३॥
भिन्नमर्मा दृढतरं विषङ्गो विह्वलाशयः ।
हतावशिष्टैर्योधैश्च सार्धमेव पलायितः ॥ १०४ ॥
ताभिर्न निहतो दुष्टो यस्माद्वध्यः स दानवः ।
दण्डनाथाशरेणैव कालदण्डसमत्विषा ॥ १०५ ॥
तस्मिन्पलायिते दुष्टे विषङ्गे भण्डसोदरे ।
सा विभाता च रजनी प्रसन्नाश्चाभवन्दिशः१०६
पलायितं रणे वीरमनुसर्तुमनौचिती ।
इति ताः समरान्नित्यास्तस्मिन्काले व्यरंसिषुः १०७

दैत्यशस्त्रव्रणस्यन्दिशोणितप्लुतविग्रहाः ।
नित्याः श्रीललितादेवीं प्रणिपेतुर्जयोद्धताः ॥१०८॥
इत्थं रात्रौ महद्युद्धं तत्र जातं भयङ्करम् ।
नित्यानां विक्रमैश्चापि ललिता प्रीतिमासदत् १०९

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्य-
संवादे ललितोपाख्याने विषङ्गादिपलायनं
नाम विंशोऽध्यायः ॥ २० ॥

---

# एकविंशोऽध्यायः ॥ २१ ॥

[ वह्निप्राकाररचना ॥ ]

श्रीहयग्रीवः ॥

दशाक्षोहिणिकायुक्तः कुटिलाक्षोऽतिवीर्यवान् ।
दण्डनाथाशरैस्तीक्ष्णै रणे भग्नः पलायितः ॥ १ ॥
दशाक्षोहिणिकासैन्यं तया रात्रौ विनाशितम् ।
इमं वृत्तान्तमाकर्ण्य भण्डः संक्षोभमाययौ ॥ २ ॥
रात्रौ कपटसंग्रामं दुष्टानां निर्जरद्रुहाम् ।
मन्त्रिणी दण्डनाथा च श्रुत्वा निर्वेदमापतुः ॥ ३ ॥

अहो बत महत्कष्टं महादेव्याः समागतम् ।
उत्तानबुद्धिभिर्दूरमस्माभिश्चलितं पुरः ॥ ४ ॥
महाचक्ररथेन्द्रस्य न जातं रक्षणं बलैः ।
एतच्चावसरं प्राप्य रात्रौ दुष्टैः पराकृतम् ॥ ५ ॥
को वृत्तान्तो भवेत्तत्र स्वामिन्या किं रणः कृतः ।
अन्या वा शक्तयस्तत्र चक्रुर्युद्धं महासुरैः ॥ ६ ॥
विमृष्टव्यमिदं कार्यं प्रवृत्तिस्तत्र कीदृशी ।
महादेव्याश्च हृदये कः प्रसङ्गः प्रवर्तते ॥ ७ ॥
इति शङ्काकुलास्तत्र दण्डनाथापुरोगमाः ।
मन्त्रिणीं पुरतः कृत्वा प्रचेलुर्ललितां प्रति ॥ ८ ॥
शक्तिचक्रचमूनाथाः सर्वास्ताः पुञ्जिताः क्वचित् ।
व्यतीतायां विभावर्यां रथेन्द्रं पर्यवारयन् ॥ ९ ॥
अवरुह्य स्वस्वयानान्मन्त्रिणीदण्डनायिके ।
अधस्तात्सैन्यमावेश्य तदारुरुहतू रथम् ॥ १० ॥
क्रमेण नवपर्वाणि व्यतीत्य त्वरितक्रमैः ।
तत्तत्पर्वगतैः शक्तिचक्रैः सम्यङ्निवेदिताम् ॥ ११ ॥
अभजेतां महाराज्ञीं मन्त्रिणी दण्डनायिके ।

ते व्यजिज्ञिपतां देव्यै अष्टाङ्गस्पृष्टभूतले ॥ १२ ॥
महान्प्रमादः समभूदिति नः श्रुतमम्बिके ।
कूटयुद्धप्रकारेण दैत्यैरपकृतं खलैः ॥ १३ ॥
स दुरात्मा दुराचारः प्रकाशसमरात्रसन् ।
कुहनाव्यवहारेण जयसिद्धिं तु काङ्क्षति ॥ १४ ॥
दैवान्न स्वामिनीगात्रे दुष्टानाममरद्रुहाम् ।
शरादिकपरामर्शो न जातस्तेन जीवितम् ॥ १५ ॥
एकावलम्बनं कृत्वा महाराज्ञि भवत्पदम् ।
वयं सर्वेऽपि जीवामः साधयामः समीहितम् ॥ १६
अथ स्वामिनि कर्तव्यं श्रीमदङ्गस्य रक्षणम् ।
मायाविनश्च दैत्येन्द्रास्तत्र मन्त्रो विधीयताम् १७
अपकालेषु येनैते भण्डाद्या दानवाधमाः ।
कूटयुद्धं न कुर्वन्ति न विशन्ति चमूमिमाम् ॥ १८
तथा महेन्द्रशैलस्य कार्यं दक्षिणदेशतः ।
शिबिरं बहुविस्तारं योजनानां शतावधि ॥ १९ ॥
वह्निप्राकारवलयं रक्षणार्थं विधीयताम् ।
अस्मत्सेनानिवेशस्य द्विषां दर्पशमाय च ॥ २० ॥

शतयोजनमात्रं तु मध्यदेशः प्रकल्प्यताम् ।
वह्निप्राकारचक्रस्य द्वारं दक्षिणतो भवेत् ॥ २१ ॥
यतो दक्षिणदेशस्थं शून्यकं द्विपतां पुरम् ।
द्वारे च वहवः कल्प्याः परिवारा उदायुधाः २२
निर्गच्छतां प्रविशतां जनानामुपरोधकाः ।
अनालस्या अनिद्राश्च विधेयाः सततोद्यमाः ॥२३
एवं च सति दुष्टानां कूटयुद्धं चिकीर्षताम् ।
अवेलासु च सन्ध्यासु मध्यरात्रिषु च द्विपाम् ।
अशक्यमेव भवति प्रौढमाक्रमणं भवेत् ॥ २४ ॥
नो चेद्दुराशया दैत्या वहुमायापरिग्रहाः ।
पश्यतो नभवेत्सर्वं विलुठन्ति महद्बलम् ॥ २५ ॥
मन्त्रिण्या दण्डनाथाया इति श्रुत्वा वचस्तदा ।
शुचिदन्तरुचा मुक्ता वर्षन्ती ललिताब्रवीत् ॥२६
भवतीभ्यामयं मन्त्रश्चारुबुद्ध्या विचारितः ।
अयं कुशलधीमार्गो नीतिरेषा सनातनी ॥ २७ ॥
स्वचक्रस्य पुरो रक्षां विधाय दृढसाधनैः ।
परचक्राक्रमः कार्यो जिगीषद्भिर्महाजनैः ॥ २८ ॥

इत्युक्त्वा मन्त्रिणीदण्डनाथे सा ललितेश्वरी ।
ज्वालामालिनिकां नित्यामाहूयैवमुवाच ह ॥२९॥
वत्से त्वं वह्निरूपासि ज्वलज्ज्वालामयाकृतिः ।
त्वया विधीयतां रक्षा बलस्यास्य महीयसः ॥ ३०
शतयोजनविस्तारं परिवृत्य महीतलम् ।
त्रिंशद्योजनमुन्नम्रज्वालाप्राकारतां व्रज ॥ ३१ ॥
द्वारं योजनमात्रं तु मुक्त्वान्यत्र ज्वलत्तनुः ।
वह्निसालत्वमापन्ना संरक्ष सकलं बलम् ॥ ३२ ॥
ज्वालामालिनिकां नित्यामित्युक्त्वा ललितेश्वरी ।
महेन्द्रोत्तरभूभागं चलितुं चक्रमुद्यमम् ॥ ३३ ॥
सा च नित्या नित्यमभिज्वलज्ज्वालामयाकृतिः ।
चतुर्दशीतिथिमयी तथेति प्रणनाम ताम् ॥ ३४ ॥
तयैव पूर्वनिर्दिष्टं महेन्द्रोत्तरभूतलम् ।
कुण्डलीकृत्य जज्वाल सालरूपेण सा पुनः ॥ ३५
नभोवलयजङ्घालज्वालामालाकुलाकृतिः ।
बभासे सालरूपा सा रत्नप्राकारशोभिनी ॥ ३६॥
तं प्राकारमथावीक्ष्य शक्तयः शस्त्रपाणयः ।

सैनिकं दण्डनाथाया मन्त्रिनाथाचमूरपि ।
अन्यासामपि शक्तीनां महतीनां महद्बलम् ॥ ३७
विशङ्कटोदरं सालं प्रविवेश गतक्लमम ।
चक्रराजरथेन्द्रं तु मध्ये संस्थाप्य दण्डिनी ॥३८॥
वामपक्षे रथं स्वीयं दक्षे च श्यामलारथम् ।
पश्चाद्भागे संपदीशीं पुरस्ताच्च हयाननाम् ॥३९॥
एवं संवेश्य परितश्चक्रराजरथस्य सा ।
द्वारे निवेशयामास विंशत्यक्षौहिणीयुताम् ॥४०॥
ज्वलद्दण्डायुधोदग्रां स्तम्भिनीं नाम देवताम् ।
या देवी दण्डनाथाया विघ्नदेवीति विश्रुता ॥ ४१
एवं सुरक्षितं कृत्वा शिबिरं पोत्रिणी ततः ।
पूपण्युदितभूयिष्ठे पुनर्युद्धमुपाश्रयत् ॥ ४२ ॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्य-
संवादे ललितोपाख्याने ज्वालामालिनिका-
विरचितवह्निप्राकारवर्णनं नाम एक-
विंशोऽध्यायः ॥ २१ ॥

# द्वाविंशोऽध्यायः ॥ २२ ॥

[भण्डपुत्रवधः ॥]

ततः किलिकिलारावं कृत्वा शक्तिमहाचमूः ।
अग्निप्राकारकद्वारान्निर्जगाम महारवा ॥ १ ॥
इत्थं सुरक्षितं श्रुत्वा ललिताशिबिरोदरम् ।
भूयः स ज्वरमापन्नः प्रचण्डो भण्डदानवः ॥ २॥
मन्त्रयित्वा पुनस्तत्र कुटिलाक्षपुरोगमैः ।
विषङ्गेण विशुक्रेण सममात्मसुतैरपि ॥ ३ ॥
एकौघस्य प्रसारेण युद्धं कर्तुं महाबलः ।
चतुर्बाहुमुखान्पुत्रांश्चतुर्जलधिसंनिभान् ॥ ४ ॥
चतुरान्युद्धकृत्येषु समाहूय स दानवः ।
प्रेषयामास युद्धाय भण्डश्चण्डः क्रुधा ज्वलन्॥५॥
त्रिंशदेव हि तत्पुत्रा महाकाया महौजसः ।
तेषां नामानि वक्ष्यामि समाकर्णय कुम्भज ॥६॥
चतुर्बाहुश्चकोराक्षस्तृतीयस्तु चतुःशिराः ।
वज्रघोषश्चोर्ध्वकेशो महामायो महाहनुः ॥ ७ ॥
मघशत्रुर्मघास्कन्दी सिंहघोषः सरालकः ।

अन्धकश्च त्रिणेत्रश्च कूपकः कूपलोचनः ॥ ८ ॥
गुह्याक्षो गण्डलश्चैव चण्डवर्मा यमान्तकः ।
लङ्गनः पण्डसेनश्च पुरुजित्पूर्वमारकः ॥ ९ ॥
स्वर्गशत्रुः स्वर्गबलो दुर्गाख्यः स्वर्गकण्टकः ।
अतिमायो बृहन्माय उपमायश्च वीर्यवान् ॥ १०॥
इत्येते दुर्मदाः पुत्रा भण्डदैत्यस्य दुर्धियः ।
पितुः सदृशदोर्वीर्याः पितुः सदृशविग्रहाः ।
आगत्य भण्डचरणावभ्यवन्दन्त भक्तितः ॥११॥
तानुदीक्ष्य प्रसन्नेन लोचनेन स दानवः ।
सगौरवमिदं वाक्यं बभाषे कुलघातकः ॥ १२ ॥
भो भो मदीयास्तनया भवतां कः समो भुवि ।
भवतामेव सत्वेन जितं विश्वं मया पुरा ॥ १३॥
शक्रस्याग्नेर्यमस्यापि निर्ऋतेः पाशिनस्तथा ।
कचेषु कर्षणं कोपात्कृतं युष्माभिराहवे ॥ १४ ॥
अस्त्राण्यपि च शस्त्राणि जानीथ निखिलान्यपि ।
जाग्रत्स्वेव हि युष्मासु कुलभ्रंशोऽयमागतः॥१५॥
मायाविनी दुर्ललिता काचित्स्त्री युद्धदुर्मदा ।

१. सिन्धुनेत्रश्च इत्यपि पाठः. २. लस्सणः इत्यपि पाठः.

बह्वीभिः स्वसमानाभिः स्त्रीभिर्युक्ता हिनस्ति नः १६
तदेनां समरेऽवश्यमात्मवश्यां विधास्यथ ।
जीवग्राहं च सा ग्राह्या भवद्भिर्ज्वलदायुधैः ॥१७॥
अप्रतीपप्रतापाढ्यान्युष्मानेकां स्त्रियं प्रति ।
संप्रेषणमनौचित्यं तथाप्येष विधेः क्रमः ॥ १८ ॥
इममेकं सहध्वं च शौर्यकीर्त्योर्विपर्ययम् ।
इत्युक्त्वा भण्डदैत्येन्द्रस्तान्प्राहैषीद्रणं प्रति ॥१९॥
द्विशतं चाक्षोहिणीनां तत्सहायाय[1] प्राहिणोत् २०
द्विशत्यक्षोहिणीसेनामुखस्य तिलकायिताः ।
बद्धभ्रुकुटयः शस्त्रपाणयो निर्ययुर्गृहात् ॥ २१ ॥
निर्गमे भण्डपुत्राणां भूः प्रकम्पमलम्बत ।
उत्पाता विविधा जाता वित्रस्तं चाभवज्जगत् २२
तान्कुमारान्महासत्त्वाँल्लाजवर्षैरवाकिरन् ।
वीथीषु यानैश्चलितान्पौरवृद्धपुरन्ध्रयः ॥ २३ ॥
बन्दिनो मागधाश्चैव कुमाराणां स्तुतिं व्यधुः ।
मङ्गलारात्रिकं चक्रुर्द्वारेद्वारे पुराङ्गनाः ॥ २४ ॥
भिद्यमानेव वसुधा शुष्यमाणमिवाम्बरम् ।

---

१. तत्सहायतयाऽहिणोत् इत्यपि पाठः.

आसीत्तेषा विनिर्याणे घूर्णमान इवार्णवः ॥ २५ ॥
द्विशत्यक्षोहिणीसेनां गृहीत्वा भण्डसूनवः ।
क्रोधोद्यद्भ्रुकुटीक्रूरनिटिला निर्ययुः पुरात् ॥ २६ ॥
शक्तिसैन्यानि सर्वाणि भक्षयामः क्षणाद्रणे ।
तेषामायुधचक्राणि चूर्णयामः शितैः शरैः ॥२७॥
अग्निप्राकारवलयं शमयामश्च रंहसा ।
तां दुर्विदग्धां ललितां वन्दीकुर्मश्च सत्वरम् ॥२८
इत्यन्योन्यं प्रजल्पन्तो वीरभाषणघोषणैः ।
आसेदुरग्निप्राकारसविधं भण्डसूनवः ॥ २९ ॥
यौवनेन मदान्धेन भूयसा रुद्धदृष्टयः ।
भ्रुकुटीकुटिलाश्चक्रुः सिंहनादं महत्तरम् ॥ ३० ॥
विदीर्णमेव तेनासीद्ब्रह्माण्डं चण्डिमस्पृशा ।
उत्पातवारिदभ्रष्टघोरनिर्घातरंहसा ॥ ३१ ॥
एतस्याननुभूतस्य महाशब्दस्य डम्बरः ।
क्षोभयामास शक्तीनां श्रवांसि च मनांसि च ३२
आगत्य ते कलकलं चक्रुः सार्धं स्वसैनिकैः ।
विविधायुधसंपातमूर्च्छद्वैमानिकच्छटम् ॥ ३३ ॥

चतुर्बाहुमुखाच्छ्रुत्वा भण्डदैत्यकुमारकान् ।
आगतान्युद्धकृत्याय बाला कौतूहलं दधे ॥ ३४ ॥
कुमारी ललितादेव्यास्तस्या निकटवासिनी ।
समस्तशक्तिचक्राणां पूज्या विक्रमशालिनी ॥३५॥
ललितासदृशाकारा कुमारी कोपमादधे ।
या सदा नववर्षैव सर्वविद्यामहाखनिः ॥ ३६ ॥
बालारुणतनुश्रेणीशोणवर्णवपुर्लता ।
महाराज्ञीपादपीठे नित्यमाहितसंनिधिः ॥ ३७ ॥
तस्या बहिश्चराः प्राणा या चतुर्थं विलोचनम् ।
तानागतान्भण्डसुतान्योधयिष्यामि सत्वरम् ३८
इति संचिन्त्य बालाम्बा महाराज्ञ्यै व्यजिज्ञपत् ।
मातर्भण्डमहादैत्यसूनवो योद्धुमागताः ॥ ३९ ॥
तैः समं योद्धुमिच्छामि कुमारीत्वात्सकौतुका ।
स्फुरन्निव च मे बाहुर्युद्धकण्डूययानया ॥ ४० ॥
क्रीडा ममैषा हन्तव्या न भवत्या निवारणैः ।
अहं हि बालिका नित्यं क्रीडनेष्वनुरागिणी ॥४१
क्षणं रणक्रीडया च प्रीतिं दास्यामि चेतसः ।

इति विज्ञापिता देवी प्रत्युवाच कुमारिकाम् ॥४२
वत्से त्वमतिमृद्वङ्गी नववर्षा नवक्रमा ।
नवीनायुधशिक्षा च कुमारी त्वं ममैकिका ॥४३॥
त्वां विना क्षणमात्रं मे न निश्वासः प्रवर्तते ।
ममोच्छ्वसितमेवासि न त्वं याहि महाहवम् ॥४४॥
दण्डिनी मन्त्रिणी चैव शक्तयोऽन्यास्तु कोटिशः ।
सन्त्येव समरं कर्तुं वत्से किं त्वं प्रयास्यसि ॥४५
इति श्रीललितादेव्या निरुद्धापि कुमारिका ।
कौमारकौतुकाविष्टा पुनर्युद्धमयाचत ॥ ४६ ॥
सुदृढं निश्चयं दृष्ट्वा तस्याः सा ललिताम्बिका ।
अनुज्ञां कृतवत्येव गाढमालिङ्ग्य बाहुभिः ॥४७॥
स्वकीयकवचादेकमाच्छिद्य कवचं ददौ ।
स्वायुधेभ्यश्चायुधानि वितीर्य विससर्ज ताम् ॥४८
कर्णीरथं महाराज्ञी चापदण्डात्समुत्थितम् ।
हंसयुग्यशतैर्युक्तमारुरोह कुमारिका ॥ ४९ ॥
तस्यां रणप्रवृत्तायां पेठुः किंनरयोषितः ।
देवीभुजापदानानि सर्वपर्वस्थदेवताः ॥ ५० ॥

बद्धाञ्जलिपुटा नेमुः प्रयुक्ताशीःपरम्पराः ।
इतस्ततः प्रसर्पन्त्यो वेत्रहस्ताः पदेपदे ॥ ५१ ॥
ताभिः प्रणम्यमाना सा चक्रराजरथोत्तमात् ।
अवरुह्य तले सैन्यं वर्तमानमगाहत ॥ ५२ ॥
अथ तामायतीं दृष्ट्वा कुमारीं कोपपाटलाम् ।
मन्त्रिणी दण्डनाथा च सभये वाचमूचतुः ॥५३॥
किं भर्तृदारिके युद्धे व्यवसायः कृतस्त्वया ।
अकाण्डे किं महाराज्ञ्या प्रेपितासि रणंप्रति ॥५४
तदेतदुचितं नैव वर्तमानेऽपि सैनिके ।
त्वं मूर्तं जीवितमसि श्रीदेव्या बालिके यतः ॥५५
निवर्तस्व रणोत्साहात्प्रणामस्ते विधीयते ।
इति ताभ्यां निरुद्धापि प्राचलद्दृढनिश्चया ॥५६॥
अत्यन्तविस्मयाविष्टे मन्त्रिणीदण्डनायिके ।
सहैव तस्या रक्षार्थं चेलतुः पार्श्वयोर्द्वयोः ॥५७॥
अथाग्न्यावरणद्वारात्ताभ्यामनुगता सती ।
प्रभूतसेनायुक्ताभ्यां निर्जगाम कुमारिका ॥५८॥
शक्तिसेनाधिनाथानां सर्वासामनुगृह्णती ।

प्रणामाञ्जलिजालानि कर्णीरथकृतासना ।
भण्डस्य तनयान्दुष्टानभ्यद्रवदरिन्दमा ॥ ५९ ॥
तस्याः प्रातिस्विकं सैन्यं कुमार्या नहि वर्तते ।
सर्वं हि ललितासैन्यं तत्सैन्यं समजायत ॥ ६० ॥
ततः प्रववृधे युद्धमत्युद्धतपराक्रमम् ।
ववर्ष शरजालानि दैत्येन्द्रेषु कुमारिका ॥ ६१ ॥
भण्डासुरकुमारैस्तैर्महाराज्ञीकुमारिका ।
यद्युद्धमतनोत्तत्तु स्पृहणीयं सुरासुरैः ॥ ६२ ॥
अत्यन्तविस्मिता दैत्याः कुमारीं नववर्षिणीम् ।
कर्णीरथस्थामालोक्य किरन्तीं शरमण्डलम् ६३
क्षणे क्षणे तु बालायाः क्रियमाणं महारणम् ।
व्यजिज्ञपन्महाराज्ञ्यै भ्राम्यन्त्यः परिचारिकाः ६४
मन्त्रिणीदण्डनाथे ते विस्मयेन रणत्यजौ ।
प्रेक्षकत्वमनुप्राप्ते तूष्णीमेव बभूवतुः ॥ ६५ ॥
सर्वेषां दैत्यपुत्राणामेकरूपा कुमारिका ।
प्रत्येकभिन्ना ददृशे बिम्बमालेव भास्वतः ॥ ६६ ॥
सायकैरग्निचूडालैस्तेषां मर्माणि भिन्दती ।

आश्चर्यं दुहती व्योम्नि पश्यतां च दिवौकसाम् ६७
साधुवादैर्बहुविधैर्मन्त्रिणीदण्डनाथयोः ।
अर्च्यमाना रणं चक्रे लघुहस्ता कुमारिका ॥६८॥
द्वितीययुद्धदिवसं समस्तमपि सा रणे ।
प्रकाशयामास बलं ललितादुहिता निजम् ॥६९॥
अस्त्रप्रत्यस्त्रमोक्षेण तान्सर्वानपि भिन्दती ।
रक्तोत्पलमिव क्रोधसंरक्तं बिभ्रती मुखम् ॥७०॥
नारायणास्त्रमोक्षेण महाराज्ञीकुमारिका ।
द्विशत्यक्षोहिणीसैन्यं भस्मसादकरोत्क्षणात् ॥७१॥
अक्षोहिणीनां क्षयतः क्षणात्कोपमुपागताः ।
आकृष्टगुरुधन्वानस्तेऽपतन्नेकहेलया ॥ ७२ ॥
ततः कलकले जाते शक्तीनां च दिवौकसाम् ।
युगपत्त्रिंशतं बाणानसृजत्सा कुमारिका ॥ ७३ ॥
हस्तलाघववत्याथ मुक्तैश्चन्द्रार्धसायकैः ।
त्रिंशता त्रिंशतं भण्डपुत्राणामाहृतं शिरः ॥७४॥
इति भण्डस्य पुत्रेषु प्राप्तेषु यमसादनम् ।
अत्यन्तविस्मयाविष्टा ववर्षुः पुष्पमभ्रगाः ॥७५॥

सा च पुत्री महाराज्ञ्या विध्वस्तासुरसैनिका ।
मन्त्रिणीदण्डनाथाभ्यामालिङ्ग्यत भृशं मुदा ७६
तस्याः पराक्रमोन्मेषैर्नृत्यन्त्यो जयदायिभिः ।
शक्तयस्तुमुलं चक्रुः साधुवादैर्जगत्त्रयम् ॥ ७७ ॥
सर्वाश्च शक्तिसेनान्यो दण्डनाथापुरःसराः ।
तदाश्चर्यं महाराज्ञ्यै निवेदयितुमागताः ॥ ७८ ॥
सिंहासनस्थितां देवीं दृष्ट्वा नेमुः स्मयान्विताः ।
कुमारिकाकृतं कर्म विनिवेद्य पुनर्गताः ॥ ७९ ॥
ताभिर्निवेद्यमानानि सा देवी ललिताम्बिका ।
पुत्र्या भुजापदानानि श्रुत्वा प्रीतिं समाययौ ८०
अङ्के पुत्रीं समारोप्य स्पृशन्ती पाणिना वपुः ।
मूर्ध्न्युपाघ्राय सा देवी हृष्टा बालां व्यमुञ्चत ८१
समस्तमपि तच्चक्रं शक्तीनां तत्पराक्रमैः ।
अदृष्टपूर्वैर्दैत्येषु विस्मयस्य वशं गतम् ॥ ८२ ॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने भण्डपुत्रवधोनाम
द्वाविंशोऽध्यायः ॥ २२ ॥

# त्रयोविंशोऽध्यायः ॥ २३ ॥

[भण्डासुरप्रलापः ॥]

हयग्रीवः ॥

अथ पुत्रेषु नष्टेषु शोकानलपरिप्लुतः ।
विललाप स दैत्येन्द्रो मत्वा जातं कुलक्षयम् ॥१॥
हा पुत्रा हा गुणोदारा हा मदेकपरायणाः ।
हा मन्नेत्रसुधापूरा हा मत्कुलविवर्धनाः ॥ २ ॥
हा समस्तसुरश्रेष्ठमदभञ्जनतत्पराः ।
हा समस्तासुरस्त्रीणामन्तर्मोहनमन्मथाः ॥ ३ ॥
दिशत प्रतिवाचं मे ममाङ्के वल्गताधुना ।
किमुदन्तमिमं तातमवमुच्य दिवं गताः ॥ ४ ॥
युष्मान्विना न शोभन्ते मम राज्यानि पुत्रकाः ।
रिक्तानि मम गेहानि रिक्ता राजसभापि मे ॥ ५॥
कथमेव हि निःशेषं हता यूयं दुराशया ।
अप्रधृष्यभुजासत्वान्भवतो मत्कुलाङ्कुरान् ॥ ६ ॥
कथमेकपदे दुष्टा वनिता संगरेऽवधीत् ।
मम नष्टानि सौख्यानि मम नष्टाः कुलश्रियः ॥७

इतः परं कदा वीक्षे सहासानि मुखानि वः ।
भवन्तः सुकृतैर्लब्धा मम पूर्वजनुःकृतैः ॥ ८ ॥
नाशोऽयं भवतामद्य जातो नष्टस्ततोऽस्म्यहम् ।
हा हतोस्मि विपन्नोस्मि मन्दभाग्योस्मि पुत्रकाः ९
इति शोकात्स पर्यश्रुः प्रलपन्मुक्तकुन्तलः ।
मूर्च्छया लुप्तहृदयो निपपात नृपासनात् ॥१०॥
विशुक्रश्च विषङ्गश्च कुटिलाक्षश्च संसदि ।
भण्डमाश्वासयामासुर्दैवस्य कुटिलैः क्रमैः ॥११॥

विशुक्रः ॥

देव किं प्राकृत इव प्राप्तः शोकस्य वश्यताम् ।
लपसि त्वं प्रति सुतान्प्राप्तमृत्यून्महाहवे ॥ १२ ॥
धर्मसंपादितः पन्था वीराणामेष शाश्वतः ।
अशोच्यमाहवे मृत्युं प्रवदन्ति मनीषिणः ॥१३॥
एतदेव विनाशाय शल्यवद्बाधते मनः ।
यत्स्त्री समागत्य हठान्निहन्ति सुभटान्रणे ॥१४॥
इत्युक्ते तेन दैत्येन पुत्रशोकं विमुञ्चता ।
भण्डेन चण्डकालाग्निसदृशः क्रोध आदधे ॥१५॥

स तीव्रस्पर्शमुद्धून्वन्खड्गमुग्रयमोपमम् ।
विस्फारिताक्षियुगलो भृशं जज्वाल तेजसा ॥१६
इदानीमेव तां दुष्टां खड्गेनानेन खण्डशः ।
शकलीकृत्य समरे शर्म प्राप्स्यामि बन्धुभिः ॥१७
इति रोषस्खलद्वर्णः श्वसन्निव भुजङ्गमः ।
खड्गं विधून्वन्नुत्थाय प्रचचालातिमत्तवत् ॥१८॥
तं निरुध्य च संभ्रान्ताः सर्वे दानवपुंगवाः ।
वाचमूचुरतिक्रोधाज्ज्वलन्तो ललितां प्रति ॥ १९ ॥
न तदर्थे त्वया कार्यः स्वामिन्संरम्भ ईदृशः ।
अस्माभिः सबलैर्युक्तै रणोत्साहो विधीयते ॥२०॥
भवदाज्ञाबलं प्राप्य समस्तं भुवनं हठात् ।
विमर्दयितुमीशाः स्म किमु तां मुग्धभामिनीम्२१
किं शोषयामः सप्ताब्धीन्भक्षयामोऽथवा गिरीन् ।
अधरोत्तरमेवैतत्त्रैलोक्यं करवाम वा ॥ २२ ॥
छिनदाम सुरान्सर्वान्भिनदाम सुरालयान् ।
पिनषाम हरित्पालानाज्ञां देहि महामते ॥ २३ ॥

[विशुक्रकृतजयविघ्नयन्त्रः ॥]

इत्युदीरितमाकर्ण्य महाहंकारगर्भितम् ।
उवाच वचनं भण्डः प्रतिघारुणलोचनः ॥ २४ ॥
विशुक्र भवता गत्वा मायान्तर्हितवर्ष्मणा ।
जयविघ्नमहायन्त्रं कर्तव्यं कटके द्विषाम् ॥ २५ ॥
इति तस्य वचः श्रुत्वा विशुक्रो रोपरूपितः ।
मायातिरोहितवपुर्जगाम ललितावलम् ॥ २६ ॥
तस्मिन्प्रयातुमुद्युक्ते सूर्योऽस्तं समुपागतः ।
पर्यस्तकिरणस्तोमपाटलीकृतदिङ्मुखः ॥ २७ ॥
अनुरागवती सन्ध्या प्रयान्तं भानुमालिनम् ।
अनुवव्राज तरसा कुञ्जे रन्तुमिवोत्सुका ॥ २८ ॥
वेगात्प्रपततो भानोर्देहसङ्घात्समुत्थिताः ।
चरमाब्धेरिव पयःकणास्तारा विरेजिरे ॥ २९ ॥
अथाससाद बहलं तमः कज्जलमेचकम् ।
साह्यं विधातुमुद्युक्तमिव तस्य दुरात्मनः ॥ ३० ॥
मायारथं समारूढो गाढशार्वरसंवृतः ।
अदृश्यवपुरापेदे ललिताकटकं खलः ॥ ३१ ॥

तत्र गत्वा ज्वलज्ज्वालावह्निप्राकारमण्डलम् ।
शतयोजनविस्तारमालोकयत दुर्मतिः ॥ ३२ ॥
परितो विभ्रमन्सालमवकाशमनाप्नुवन् ।
दक्षिणद्वारमासाद्य निदध्यौ क्षणमुद्धतः ॥ ३३ ॥
तत्रापश्यन्महासत्वाः सावधाना धृतव्रताः ।
आरूढयानाः सन्नद्धवर्माणो द्वारदेशतः ॥ ३४ ॥
स्तम्भिनीप्रमुखाः शक्तीर्विंशत्यक्षोहिणीयुताः ।
सर्वदा द्वाररक्षार्थं निर्दिष्टा दण्डनाथया ॥ ३५॥
विलोक्य विस्मयाविष्टश्चिन्तयित्वा चिरं तदा ।
सालस्य बहिरेवासौ स्थित्वा यन्त्रं समातनोत् ३६
गव्यूतिमात्रकायामे तत्समानप्रविस्तरे ।
शिलापट्टे सुमहति प्रालिखद्यन्त्रमुत्तमम् ॥ ३७ ॥
अष्टदिक्ष्वष्टशूलेन संहाराक्षरमौलिना ।
अष्टभिर्दैवतैश्चापि युक्तं यन्त्रं समालिखत् ॥ ३८ ॥
अलसा कृपणा दीना निद्रा तन्द्रा प्रमीलिका ।
क्लीबा च निरहङ्कारा इत्यष्टौ देवताः स्मृताः ॥३९
देवताष्टकमेतच्च शूलाष्टकपुटोपरि ।

नियोज्य लिखितं यन्त्रं मायावी समममन्त्रयन् ४०
पूजां विधाय यन्त्रस्य बलिभिश्छागलादिभिः ।
तद्यन्त्रं वैरिकटके प्राक्षिपत्स महासुरः ॥ ४१ ॥
प्राकारस्य बहिर्भागवर्तिना तेन दुर्धिया ।
क्षिप्तमुल्लङ्घ्य वरणं पपात कटकान्तरे ॥ ४२ ॥
तद्यन्त्रस्य विकारेण कटकस्थास्तु शक्तयः ।
विमुक्तशस्त्राः संन्यासमास्थिता दीनमानसाः ४३
किं हतैरसुरैः कार्यं शस्त्राशस्त्रिक्रमैरलम् ।
जयसिद्ध्या फलं किंवा प्राणिहिंसा च पापदा ४४
अमराणां कृते कार्ये किमस्माकं भविष्यति ।
वृथा कलकलं कृत्वा न फलं युद्धकर्मणा ॥ ४५ ॥
का स्वामिनी महाराज्ञी का वा सा दण्डनायिका ।
का वा सा मन्त्रिणी श्यामा भृत्यत्वं नोऽथ कीदृशम्
इह सर्वाभिरस्माभिर्भृत्यभूताभिरेकिकाम् ।
वनितां स्वामिनीं कृत्वा किं फलं भोक्ष्यते परं ४७
परेषां मर्मभिदुरैरायुधैर्न प्रयोजनम् ।
युद्धं शाम्यतु चास्माकमङ्गे शस्त्रक्षतिप्रदम् ॥४८॥

युद्धे चेन्मरणं भावि वृथाऽस्युर्जीवितानि नः ।
युद्धमृत्यौ भवेत्स्वर्ग इति तत्र प्रमैव का ॥ ४९ ॥
उत्साहेन फलं नास्ति निद्रैवैका सुखावहा ।
आलस्यसदृशं नास्ति चित्तविश्रान्तिदायकम् ५०
एतादृशीश्च नो ज्ञात्वा सा राज्ञी किं करिष्यति ।
तस्या राज्ञित्वमपि नः समवायेन कल्पितम् ॥ ५१
एवं चोपेक्षितास्माभिः सापि नष्टबला भवेत् ।
नष्टसत्वा च सा राज्ञी कां नु शिक्षां करिष्यति ॥
एवमेव रणारम्भं विमुच्य विधुतायुधाः ।
शक्तयो निद्रया दूरं घूर्णमाना इवाभवन् ॥ ५३ ॥
सर्वत्र मान्यकार्येषु महदालस्यमागतम् ।
शिथिलं चाभवत्सर्वं शक्तीनां कटकं महत् ॥५४॥
जयविघ्नमहायन्त्रमिति कृत्वा स दानवः ।
निर्विघ्नं तत्प्रभावेन कटकं प्रममन्थिपुः ॥ ५५ ॥
द्वितीययुद्धदिवसस्यार्धरात्रे गते सति ।
निवृत्य नगरं भूयस्त्रिंशदक्षोहिणीवृतः ॥ ५६ ॥
आजगाम पुनर्दैत्यो विशुक्रः कटकं द्विषाम् ।

अश्रूयत ततस्तस्य रणनिःसाणनिस्वनः॥ ५७ ॥
तथापि ता निरुद्योगाः शक्तयः कटकेऽभवन्।
ततो महानुभावत्वाद्विकारैर्विघ्नयन्त्रजैः॥ ५८ ॥
अस्पृष्टे मन्त्रिणीदण्डनाथे चिन्तामवापतुः।
अहो बत महत्कष्टमिदमापतितं भयम्॥ ५९ ॥
कस्य वाद्य विकारेण सैनिका निर्गतोद्यमाः।
निरस्तायुधसंभारा निद्रातन्द्राविघूर्णिताः॥ ६० ॥
न मानयन्ति वाक्यानि नार्चयन्ति महेश्वरीम्।
औदासीन्यं वितन्वन्ति शक्तयो निस्पृहा इमाः॥
इति ते मन्त्रिणीदण्डनाथे चिन्तापरायणे।
चक्रस्यन्दनमारूढे महाराज्ञीं समूचतुः॥ ६२ ॥

मन्त्रिणी॥

देवि कस्य विकारोऽयं शक्तयो विगतोद्यमाः।
न शृण्वन्ति महाराज्ञि तवाज्ञां विश्वपालिताम् ६३
अन्योन्यं च विरक्तान्ताः पराच्यः सर्वकर्मसु।
निद्रातन्द्रीमुकुलिता दुर्वाक्यानि वितन्वते॥ ६४॥
का दण्डिनी मन्त्रिणी का महाराज्ञी च का पुनः।

युद्धं च कीदृशमिति क्षेपं भूरि वितन्वते ॥ ६५ ॥
अस्मिन्नेवान्तरे शत्रुरागच्छति महाबलः ।
उद्दण्डैर्भेरिनिस्वानैर्विभिन्दन्निव रोदसी ॥ ६६ ॥
अत्र यत्प्राप्तरूपं तन्महाराज्ञी प्रपद्यताम् ।
इत्युक्त्वा सह दण्डिन्या मन्त्रिणी प्रणतिं व्यधात्॥
ततः सा ललितादेवी कामेश्वरमुखं प्रति ।
दत्तदृष्टिः समहसन्नातिव्यक्तरदावलिः ॥ ६८ ॥
तस्याः स्मितप्रभापुञ्जान्कुञ्जराकृतिमान्मुखे ।
कटक्रोडगलद्दानः कश्चिद्देवो व्यजृम्भत ॥ ६९ ॥
जपापटलपाटल्यपाटच्चरवपुर्द्युतिः ।
बीजापूरं गदामिक्षुचापं शूलं सुदर्शनम् ॥ ७० ॥
अब्जपाशोत्पलं व्रीहिमञ्जरीस्वरदाङ्कुरान् ।
रत्नकुम्भं च दशभिर्हस्तैः स्वीयैः समुद्वहन् ॥७१॥
तुन्दिलश्चन्द्रचूडालो मदबृंहितनिस्वनः ।
सिद्धलक्ष्म्या समाश्लिष्टः प्रणनाम महेश्वरीम्॥७२
तया कृताशीः स महागणनाथो गजाननः ।
जयविघ्नमहायन्त्रं भेत्तुं वेगाद्विनिर्ययौ ॥ ७३ ॥

[गणेश्वरपराक्रमः ॥]

अन्तरे वह्निमालम्ब्य भ्रमन्दन्तावलाननः ।
निभृतं कुत्रचिल्लग्नं जयविघ्नं व्यलोकयन् ॥ ७४ ॥
स देवो घोरनिर्घातनिःसहैर्दन्तपातनैः ।
क्षणाच्चूर्णीकरोतिस्म जयविघ्नमहाशिलाम् ॥ ७५ ॥
तत्र स्थिताभिर्दुष्टाभिर्देवताभिः सहैव सः ।
परागशेषतां नीत्वा तदस्त्रं व्यक्षिपद्दिवि ॥ ७६ ॥
ततः किलिकिलारावं कृत्वालस्यविवर्जिताः ।
उद्यताः समरं कर्तुं शक्तयः शस्त्रपाणयः ॥ ७७ ॥
स दन्तिवदनः कण्ठगलिताकुण्ठनिस्वनः ।
ससर्ज सुबहूनात्मरूपान्दन्तावलाननान् ॥ ७८ ॥
ते कटक्रोडविगलन्मदकज्जलचञ्चलैः ।
चञ्चरीककुलैरग्रे गीयमानमहोदयाः ॥ ७९ ॥
स्फुटद्दाडिमकिञ्जल्कविक्षेपकररोचिषः ।
सप्तवाराकरानेकहेलया पातुमुद्धताः ।
आमोदप्रमुखा ऋद्धिमुख्यशक्तिनिषेविताः ॥ ८० ॥
आमोदश्च प्रमोदश्च सुमुखो दुर्मुखस्तथा ।

विघ्नश्च विघ्नकर्ता च षडेते विघ्ननायकाः ॥८१॥
ये सप्तकोटिसंख्यानां हेरम्बाणामधीश्वराः ।
ते पुरश्चलितास्तस्य महागणपते रणे ॥ ८२ ॥
अग्निप्राकारवलयाद्विनिर्गत्य गजाननः ।
क्रोधहुंकारतुमुलः प्रत्यपद्यत दानवान् ॥ ८३ ॥
त्रिंशदक्षोहिणीजुष्टं विशुक्रं शक्रशासनम् ।
अवाकिरच्छरस्तोमैरिक्षुधन्वमुखच्युतैः ॥ ८४ ॥
ततः प्रचण्डफीट्कारबधिरीकृतविष्टपः ।
पपात दैत्यसैन्येषु गजवक्त्रचमूगणः ॥ ८५ ॥
अच्छिदन्निशितैर्बाणैर्गणनाथः स दानवान् ।
गर्जितानि सुघोराणि कृत्वा हत्वा च दानवान् ८६
गणनाथेन तस्याभूद्विशुक्रस्य महौजसः ।
युद्धमुद्धतहुंकारभिन्नकार्मुकनिस्वनम् ॥ ८७ ॥
भ्रुकुटीकुटिलं वक्त्रं दष्टोष्ठमतिपाटलम् ।
विशुक्रो युधि बिभ्राणः समयुध्यत तेनह ॥ ८८ ॥
शस्त्राघट्टननिस्वानैर्हुंकारैश्च सुरद्विषाम् ।
दैत्यसप्तिखुरक्षोडकुद्दलीकुट्टनिस्वनैः ॥ ८९ ॥

फीट्कारैश्च गजेन्द्राणां भटानां क्रन्दनैरपि ।
हेषया च हयश्रेण्या रथचक्रस्वनैरपि ॥ ९० ॥
धनुषां गुणनिस्वानैश्चक्रचात्कारणैरपि ।
शरशात्कारघोषैश्च वीरभाषाकदम्बकैः ॥ ९१ ॥
अट्टहासैर्भटेन्द्राणां सिंहनादैश्च भूरिशः ।
क्षुभ्यद्दिगन्तरं तत्र ववृधे युद्धमुद्धतम ॥ ९२ ॥
त्रिंशदक्षोहिणीसेनां विशुक्रस्य दुरात्मनः ।
प्रत्येकं पातयामासुर्गणनाथा महारथाः ॥ ९३ ॥
दन्तैर्मर्म विभिन्दन्तो वेष्टयन्तश्च शुण्डया ।
प्रोथयन्तः कर्णतालैः पुष्कलावर्तकोपमैः ॥ ९४ ॥
नासाश्वासैश्च परुषैर्विक्षिपन्तः पताकिनीम् ।
उरोभिर्मर्दयन्तश्च शैलवप्रसमप्रभैः ॥ ९५ ॥
पेषन्तश्च पदाघातैः पीनैर्घ्नन्तस्तथोदरैः ।
विच्छिन्दन्तश्च शूलेन कृन्तन्तश्चक्रपातनैः ।
शङ्खस्वानेन महता पीडयन्तो वरूथिनीम् ॥९६॥
गणनाथमुखोद्भूता गजवक्त्राः सहस्रशः ।
धूलिशेषं समस्तं तत्सैन्यं चक्रुर्मदोद्धताः ॥९७॥

अथ क्रोधसमाविष्टो निजसैन्यपुरोगमम्।
प्रेपयामस देवस्य गजासुरमसौ पुरः॥ ९८॥
प्रचण्डसिंहनादेन गजदैत्येन दुर्धिया।
सप्ताक्षोहिणियुक्तेन युयुधे स गणेश्वरः॥ ९९॥
हीयमानं समालोक्य गजासुरभुजाबलम्।
वर्धमानं च तद्वीर्यं विशुक्रः प्रपलायितः॥१००॥
स एक एव वीरेन्द्रः प्रचलन्नाखुवाहनः।
सप्ताक्षोहिणिकायुक्तं गजासुरममर्दयत्॥ १०१॥
गजासुरे च निहते विशुक्रे च पलायिते।
ललितान्तिकमापेदे महागणपतिर्मृधात्॥ १०२॥
कालरात्रिश्च दैत्यानां सा रात्रिर्विरतिं गता।
ललिता चापि मुदिता बभूवास्य पराक्रमैः॥१०३
विततार महाराज्ञी प्रीयमाणा गणेशितुः।
सर्वदैवतपूजायाः पूर्वपूज्यत्वमुत्तमम्॥ १०४॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने गणनाथपराक्रमो नाम
त्रियोविंशोऽध्यायः॥ २३॥

# चतुर्विंशोऽध्यायः ॥ २४ ॥

[विशुक्रविषङ्गवधः ॥]

श्रीहयग्रीवः ॥

रणे भग्नं महासत्त्वं भण्डदैत्यः सहोदरम् ।
निशम्य कदनं प्राप्तः संग्रामो बहुचिन्तया ॥ १ ॥
उभावपि समेतौ तौ युक्तौ सर्वैश्च सैनिकैः ।
प्रेषयामास युद्धाय भण्डदैत्यः सहोदरौ ॥ २ ॥
तावुभौ परमक्रुद्धौ भण्डदैत्येन देशितौ ।
विषङ्गश्च विशुक्रश्च महोद्यममवापतुः ॥ ३ ॥
कनिष्ठसहितं तत्र युवराजं महाबलम् ।
विशुक्रमनुवव्राज सेना त्रैलोक्यकम्पिनी ॥ ४ ॥
अक्षोहिणीचतुश्शत्या सेनानामावृतश्च सः ।
युवराजः प्रववृधे प्रतापेन महीयसा ॥ ५ ॥
उलूकजित्प्रभृतयो भागिनेया दशोद्धताः ।
भण्डस्य तद्भगिन्यां तु धूमिन्यां जातयोनयः ॥६
कृतास्त्रशिक्षा भण्डेन मातुलेन महीयसा ।
विक्रमेण विवल्गन्तः सेनानाथाः प्रतस्थिरे ॥ ७ ॥

उद्दण्डचापनिर्घोषैर्भापयन्तो दिशो दश ।
द्वयोर्मातुलयोः प्रीतिं भागिनेया वितेनिरे ॥ ८ ॥
आरूढयानाः प्रत्येकं गाढाहङ्कारशालिनः ।
आकृष्टगुरुधन्वानो विशुक्रमनुवव्रजुः ॥ ९ ॥
यौवराज्यप्रथाचिह्नच्छत्रचामरशोभितः ।
आरूढवारणः प्राप विशुक्रो युद्धमेदिनीम् ॥१०॥
ततः किलकिलारावकारिण्या सेनया वृतः ।
विशुक्रः पटु दध्वान सिंहनादं भयंकरम् ॥११॥
तद्घोषात्क्षुभितस्वान्ताः शक्तयः संभ्रमोद्यताः ।
अग्निप्राकारवलयान्निर्जग्मुर्बद्धपङ्क्तयः ॥ १२ ॥
तटिन्मयमिवाकाशं कुर्वन्त्यः शस्त्ररोचिषा ।
रक्ताम्बुदावृतमिव व्योम क्रोधारुणैर्मुखैः ॥१३॥
अथ भण्डकनीयांसावागतौ युद्धदुर्मदौ ।
निशम्य युगपद्योद्धुं मन्त्रिणीदण्डनायिके ॥१४॥
किरिचक्रं गेयचक्रमारूढे रथशेखरे ।
धृतातपत्रवलये चामराभ्यां च वीजिते ॥ १५ ॥
अप्सरोभिः प्रनृत्ताभिर्गीयमानमहोदये ।

निर्जगमत् रणं कर्तुं महाभ्यां ललिताज्ञया ॥१६॥
श्रीचक्ररथराजस्य रक्षणार्थं निवेशिताम् ।
शताक्षोहिणिकासेनां वर्जयित्वातिभीषणाम् ॥१७
अन्यत्सर्वं चमूजालं निर्जगाम रणोन्मुखम् ।
पुरतः प्राचलद्दण्डनाथा रथनिषेदुषी ॥ १८ ॥
एकयैव कराङ्गुल्या घूर्णयन्ती हलायुधम् ।
मुसलं चान्यहस्तेन भ्रामयन्ती मुहुर्मुहुः ॥ १९॥
तरुणेन्दुकलाचूडास्फुरत्पोत्रिमुखाम्बुजा ।
इतस्ततः प्रचलितां सेनां त्रैलोक्यकम्पिनीम् २०
पश्यन्ती मदिरापानवासिताधरपल्लवा ।
पुरः प्रहर्त्री समरे सर्वदा विक्रमोद्धुरा ॥ २१ ॥
तस्या अनुप्रचलिता गेयचक्ररथस्थिता ।
धनुषो ध्वनिना विश्वं पूरयन्ती मदोद्धता ॥२२॥
वेणीकृतकचन्यस्तविलसच्चन्द्रपल्लवा ।
स्फुरत्तृतीयनेत्रेण सिन्दूरतिलकत्विषा ॥ २३ ॥
पाणिना पद्मरम्येण मणिकङ्कणचारुणा ।
तूणीरमुखतः कृष्टं भ्रामयन्ती शिलीमुखम् ॥२४॥

जय वर्धस्व वर्धस्वेत्यतिहर्षसमाकुलैः ।
नृत्यद्भिर्दिव्यमुनिभिर्वर्धिताशीर्वचोमृतैः ॥ २५ ॥
गेयचक्ररथेन्द्रस्य चक्रनेमिविघट्टनैः ।
दारयन्ती क्षितितलं दैत्यानां हृदयैः सह ॥२६॥
लोकातिशायिना विश्वमनोमोहनकारिणा ।
गीतिबन्धेन नारीभिर्बह्वीभिर्गीतवैभवा ॥ २७ ॥
अक्षोहिणीसहस्राणामष्टकं समरोद्धतम् ।
कर्षन्ती कल्पविश्लेपनिर्मर्यादाब्धिसन्निभम् ॥२८॥
तस्याः शक्तिचमूचक्रे काश्चित्कनकरोचिषः ।
काश्चिद्दाडिमसंकाशाः काश्चिज्जीमूतरोचिषः ॥२९
अन्याः सिन्दूररुचयः पराः पाटलपाटलाः ।
काश्चिच्च चन्द्रिकाकाराः पराः श्यामलकोमलाः ३०
अन्यास्तु हीरकप्रख्याः परा गारुत्मतोपमाः ।
विशुद्धैः पञ्चभिर्वर्णैर्मिश्रितैः शतकोटिभिः ॥३१॥
व्यञ्जयन्त्यो देहरुचिं कतिचिद्विविधायुधाः ।
असंख्याः शक्तयश्चेलुर्दण्डिन्याः सैनिके तथा ३२
यथैव सैन्यसंनाहो मन्त्रिण्याः कुम्भसंभव ।

यथाभूषणवेषादि यथा प्राभवलक्षणम् ॥ ३३ ॥
यथा भुजस्य विक्रान्तिर्यथैवाश्रितरक्षणम् ।
यथा दैत्यौघसंहारो यथा सर्वैश्च पूज्यता ।
यथा भक्तिर्महाराज्ञ्यां दण्डिन्याश्च तथाखिलं ३४
विशेषस्तु परं तस्याः सचिवेश्याः परं करे ।
महाराज्ञीवितीर्णं तदाज्ञामुद्राङ्गुलीयकम् ॥ ३५ ॥
इत्थं प्रचलिते सैन्ये मन्त्रिणीदण्डनाथयोः ।
तद्भारभङ्गुरा भूमिर्दोलालीलामलम्बत ॥ ३६ ॥
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
उद्धूतधूलिजम्बालीकृतसप्तार्णवीजलम् ॥ ३७ ॥
हयस्थैर्हयसादिन्यो रथस्था रथसंस्थितैः ।
आधोरणैर्हस्तिपकाः पद्गैः पद्गाश्च संगताः ॥३८॥
दण्डनाथा विषङ्गेण समयुध्यत संगरे ।
विशुक्रेण समं श्यामा विकृष्टमणिकार्मुका ॥३९॥
अश्वारूढा चकारोच्चैः सहोल्लूकजितारणम् ।
सम्पदीशी च जग्राह पुरुषेणं युयुत्सया ॥ ४० ॥
विषेणं नकुलीदेवी समाह्वास्त युयुत्सया ।

कुन्तिषेणेन समरं महामाया तदाऽकरोत् ॥४१॥
कुरूपकेण दैत्येन काचिद्देवी समागता ।
मलदेन समं चक्रे युद्धमुन्मत्तभैरवी ॥ ४२ ॥
लघुश्यामा चकारोच्चैः करूशेन समं रणम् ।
स्वप्नेशी मङ्गलाख्येन दैत्येन्द्रेण रणं व्यधात् ॥४३
वाग्वादिनी तु जघटे द्रुघणेन समं रणे ।
कोल्लाटेन च रुष्टेन चण्डकाल्यकरोद्रणम् ॥ ४४॥
अक्षोहिणीभिर्दैत्यानां शक्त्यक्षोहिणिकास्तथा ।
महान्तं समरं चक्रुरन्योन्यं क्रोधमूर्च्छिताः॥४५॥
प्रवर्तमाने समरे विशुक्रो दुष्टदानवः ।
वर्धमानां शक्तिचमूं हीयमानां निजां चमूम् ४६
अवलोक्य रुषाविष्टः संकृष्टगुरुकार्मुकः ।
शक्तिसैन्ये समस्तेऽपि तर्षास्त्रं प्रमुमोचह ॥ ४७॥
तेन दावानलज्वालादीप्तेन कथितं बलम् ॥ ४८॥
तृतीययुद्धदिवसे याममात्रं गते रवौ ।
विशुक्रमुक्ततर्षास्त्रव्याकुलाः शक्तयोऽभवन् ॥ ४९
क्षोभयन्निन्द्रियग्रामं तालुमूलं विशोषयन् ।

रूक्षयन्कर्णकुहरमङ्गे दौर्बल्यमावहन् ॥ ५० ॥
पातयन्पृथिवीपृष्ठे देहं विस्रंसितायुधम् ।
आविर्बभूव शक्तीनामतितीव्रस्तृषाज्वरः ॥ ५१ ॥
युद्धेष्वनुद्यमकृता सर्वोत्साहविरोधिना ।
तर्षेण तेन कथितं शक्तिसैन्यं विलोक्य सा ।
मन्त्रिणी सह पोत्रिण्या भृशं चिन्तामवाप सा॥५२
उवाच तां दण्डनाथामत्याहितविशङ्किनी ।
रथस्थितां रथगता तत्प्रतीकारकर्मणे ॥ ५३ ॥
सखि पोत्रिणि दुष्टस्य तर्षास्त्रमिदमागतम् ।
शिथिलीकुरुते सैन्यमस्माकं हा विधेः क्रमः ॥५४
विशुष्कतालुमूलानां विभ्रष्टायुधतेजसाम् ।
शक्तीनां मण्डलेनात्र समरं समुपेक्षितम् ॥ ५५ ॥
न कापि कुरुते युद्धं न धारयति चायुधम् ।
विशुष्कतालुमूलत्वाद्वक्तुमप्यालि न क्षमा ॥ ५६ ॥
ईदृशीं नो गतिं श्रुत्वा किं वक्ष्यति महेश्वरी ।
दुष्टैरपकृते दैत्यैरुपायः प्रविचिन्त्यताम् ॥ ५७ ॥
सर्वत्र व्यष्टसाहस्राक्षोहिण्यामत्र पोत्रिणि ।

एकापि शक्तिर्नैवास्ति या तर्षेण न पीडिता ॥५८
अत्रैवावसरे दृष्ट्वा मुक्तशस्त्रां पताकिनीम् ।
रन्ध्रप्रहारिणो हन्त बाणैर्निघ्नन्ति दानवाः ॥५९॥
अत्रोपायस्त्वया कार्यो मया च समरोद्यमे ॥६०
त्वदीयरथपर्वस्थो योऽस्ति शीधुमहार्णवः ।
तमादिश समस्तानां शक्तीनां तर्षमुक्तये ॥ ६१ ॥
नाल्पैः पानीयपानाद्यैरेतासां तर्षसंक्षयः ।
स एव मदिरासिन्धुः शक्त्यौघं तर्पयिष्यति ॥६२
तमादिश महात्मानं समरोत्साहकारिणम् ।
सर्वतर्षप्रशमनं महाबलविवर्धनम् ॥ ६३ ॥
इत्युक्ता दण्डनाथा सा सदुपायेन हर्षिता ।
आजुहाव सुरासिन्धुमाज्ञाचक्रेश्वरी रणे ॥ ६४ ॥
स मदालसरक्ताक्षो हेमाब्जस्रग्विभूषितः ।
प्रणम्य दण्डनाथां तां तदाज्ञापरिपालकः ॥ ६५॥
आत्मानं बहुधा कृत्वा तरुणादित्यपाटलम् ।
कचित्तापिञ्छवच्छयामं कचिच्च धवलद्युतिम्॥६६
कोटिशो मदिराधारां करिहस्तसमाकृतिम् ।

ववर्ष सिन्धुराजोऽयं वायुना बहुलीकृतः ॥ ६७ ॥
पुष्कलावर्तकाद्यैस्तु कल्पक्षयबलाहकैः ।
निषिच्यमानो मद्याब्धिः शक्तिसैन्ये पपातह॥६८
यद्गन्धाघ्राणमात्रेण मृत उत्तिष्ठति स्फुटम् ।
दुर्बलः प्रबलश्च स्यात्स ववर्ष सुराम्बुधिः ॥६९॥
परार्धसंख्यातीतास्ता मद्यधारापरम्पराः ।
प्रतीच्छन्त्यः पिपासार्तैर्मुखैः शक्तय उत्थिताः ७०
यथा सा मदिरासिन्धुवृष्टिर्दैत्येषु नो पतेत् ।
तथा सैन्यस्य परितो महाप्राकारमण्डलम् ॥७१॥
लघुहस्ततया मुक्तैः शरजालैः सहस्रशः ।
चकार विस्मयकरी कदम्बवनवासिनी ॥ ७२ ॥
कर्मणा तेन सर्वेऽपि विस्मिता मरुतोऽभवन्॥७३
अथ ताः शक्तयो भूरि पिबन्ति स्म रणान्तरे ।
विविधा मदिराधारा रणोत्साहविवर्धिनीः ॥७४॥
यस्या यस्या मनःप्रीती रुचिः स्वादो यथा यथा ।
तस्यास्तस्याः सुरासिन्धुस्ता ववर्ष तथा तथा ७५
तृतीययुद्धदिवसप्रहरद्वितयावधि ।

मद्यसन्ततधाराभिः प्रववर्ष सुराम्बुधिः ॥ ७६ ॥
गौडीः पैष्टीश्च माध्वीश्च वल्कीः कादम्बरीस्तथा ।
हैन्तालीर्लाङ्गलेयाश्च तालजातास्तथा सुराः ॥७७॥
कल्पवृक्षोद्भवा दिव्या नानाद्रव्यसमुद्भवाः ।
सुस्वादूः सौरभाढ्याश्च शुभगन्धा मदप्रदाः ७८
बकुलप्रसवामोदा ध्वनन्तो बुद्बुदोज्ज्वलाः ।
कटुकाश्च कषायाश्च मधुरास्तिक्ततास्पृशः ॥७९॥
बहुवर्णसमाश्लिष्टाश्छोदिनीः पिच्छिलास्तथा ।
ईषदम्लाश्च कट्वम्ला मधुराम्लास्तथा पराः ॥८०॥
शस्त्रक्षतिरुजाहर्त्रीरस्थिसन्धानदायिनीः ।
रणश्रमहरीः शीताः कवोष्णाश्च तथा लघु ॥८१॥
सन्तापहारिणीः किंचानुष्णाशीता जयप्रदाः ।
नानाविधाः सुधाधारा ववर्ष मदिरार्णवः ॥८२॥
अविच्छिन्नं याममात्रमेकैका तत्र योगिनी ।
ऐरावतकरप्रख्यां सुधाधारां मुदा पपौ ॥ ८३ ॥
उत्तानं वदनं कृत्वा विलोलरसनाञ्चलम् ।
शक्तयः प्रपपुः शीधु मुदा मीलितलोचनाः ॥८४॥

इत्थं बहुविधैर्मद्यधारापातैः सुराम्बुधिः ।
आगलं तर्पयित्वा ता दिव्यरूपं समास्थितः ॥८५
पुनर्गत्वा दण्डनाथां प्रणम्य स सुराम्बुधिः ।
स्निग्धगम्भीरघोषेण वाक्येनेदमुवाच ताम् ॥८६॥
देवि पश्य महाराज्ञीदण्डमण्डलनायिके ।
मया संतर्पिता मुक्ततर्पा शक्तिवरूथिनी ॥ ८७ ॥
काश्चिन्नृत्यन्ति गायन्ति कलक्वणितमेखलाः ।
नृत्यन्तीनां पुरः काश्चित्करतालं वितन्वते ॥८८॥
काश्चिद्धसन्ति व्यावल्गद्वल्गुवक्षोजमण्डलाः ।
पतन्त्यन्योन्यमङ्गेषु काश्चिदानन्दमन्थराः ॥८९॥
काश्चिद्वल्गन्ति च श्रोणीविगलन्मेखलाम्बराः ।
काश्चिद्युद्धाय संनद्धा घूर्णयन्त्यो निजायुधम् ९०
इत्थं निर्दिश्यमानास्ताः शक्तीर्मैरेयसिन्धुना ।
अवलोक्य भृशं तुष्टा दण्डिनी तमुवाच ह ॥९१॥
परितुष्टास्मि मद्याब्धे त्वया साह्यमनुष्ठितम् ।
देवकार्यमिदं किंच त्वया निर्विघ्नितं कृतम् ॥९२॥
अतो वा त्वं मत्प्रसादाद्वाजपेयादिके मखे ।

सोमपानवदत्यन्तमुपयोज्यो भविष्यसि ॥ ९३ ॥
मन्त्रेण पूतं त्वां यागे पास्यन्त्यखिलदेवताः ॥ ९४
यागेषु मन्त्रपूतेन पीतेन भंवता जनाः ।
सिद्धिमृद्धिं बलं स्वर्गमपवर्गं च बिभ्रतु ॥ ९५ ॥
महेश्वरी महादेवो बलदेवश्च भार्गवः ।
दत्तात्रेयस्तथान्ये च त्वां पास्यन्ति महाजनाः ९६
यागे समर्चितस्त्वं हि सर्वां सिद्धिं प्रदास्यसि ९७
इत्थं वरप्रदानेन तोषयित्वा सुराम्बुधिम् ।
मन्त्रिणीं त्वरयामास पुनर्युद्धाय दण्डिनी ॥ ९८ ॥
पुनः प्रववृते युद्धं शक्तीनां दानवैः सह ।
मदाट्टहासनिर्भिण्णदिगष्टकधराधरम् ॥ ९९ ॥
प्रत्यग्रमदिरामत्ताः पाटलीकृतलोचनाः ।
शक्तयो दैत्यचक्रेषु न्यपतन्नेकहेलया ॥ १०० ॥
द्वयेन द्वयमारेजे शक्तीनां समरश्रियाम् ।
मदरागेण चक्षूंषि दैत्यरक्तेन शस्त्रिकाः ॥ १०१ ॥
तथा बभूव तुमुलं युद्धं शक्तिसुरद्विषाम् ।
यथा मृत्युरपि त्रस्तः कान्दिशीकत्वमागतः १०२

सा तन्मूर्ध्नि निमग्नेन हलेनाकृष्य वैरिणम् ।
कठोरं ताडनं चक्रे मुसलेनाथ पोत्रिणी ॥११९॥
ततो मुसलघातेन त्यक्तप्राणो महासुरः ।
चूर्णितेन शताङ्गेन समं भूतलमाश्रयत् ॥ १२० ॥
इति कृत्वा महत्कर्म मन्त्रिणीदण्डनायिके ।
तत्रैव तं निशाशेषं निन्यतुः सह शक्तिभिः १२१
सा रात्रिरपि भण्डस्य व्यरंसीत्सममायुषा ।
रणश्रान्तं निजं सैन्यं निन्यतुः शिबिरं प्रति १२२

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे ललितोपाख्याने विशुक्रविपङ्गवधो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

[श्रीललिताभण्डासुरयुद्धम् ॥]

अगस्त्यः ॥

अश्वानन महाप्राज्ञ वर्णितं मन्त्रिणीबलम् ।
विपङ्गस्य वधो युद्धे वर्णितो दण्डनाथया ॥ १ ॥

श्रीदेव्याः श्रोतुमिच्छामि रणचक्रे पराक्रमम् ।
सोदरव्यापदं दृष्ट्वा भण्डः किमकरोच्छुचा ॥ २ ॥
कथं तस्य रणोत्साहः कैः समं समयुध्यत ।
सहायाः केऽभवंस्तस्य हतभ्रातृतनूभुवः ॥ ३ ॥

श्रीहयग्रीवः ॥

इदं शृणु महाप्राज्ञ सर्वपापनिकृन्तनम् ।
ललिताचरितं पुण्यमणिमादिगुणप्रदम् ॥ ४ ॥
विषुवायनकालेषु पुण्येषु समयेषु च ।
सिद्धिदं सर्वपापघ्नं कीर्तितं पञ्चपर्वसु ॥ ५ ॥
तथा हतौ रणोत्साहौ श्रुत्वा निजसहोदरौ ।
शोकेन महताविष्टो भण्डः प्रविललाप सः ॥ ६ ॥
विकीर्णकेशो धरणौ मूर्च्छितः पतितस्तदा ।
न लेभे किंचिदाश्वासं भ्रातृव्यसनकर्शितः ॥ ७ ॥
पुनः पुनश्च प्रलपन्कुटिलाक्षेण भूरिशः ।
आश्वास्यमानः शोकेन मुक्तः क्रोधमवाप सः ॥ ८ ॥
फालं वहन्नतिक्रूरं भ्रमद्भ्रुकुटिभीषणम् ।
अङ्गारपाटलं चक्षुर्निश्वसन्कृष्णसर्पवत् ॥ ९ ॥

क्षिप्रं मुहुर्मुहुः स्पृष्ट्वा धुनानः करवालिकाम् ।
क्रोधहुंकारमातन्वन्गर्जन्नुत्पातमेघवत् ॥ १० ॥
उवाच कुटिलाक्षं द्राक्समस्तपृतनापतिम् ।
ययैव दुष्टया मायाबलाद्युद्धे विनाशिताः ॥ ११ ॥

भ्रातरो ममपुत्राश्च
सेनानाथाः सहस्रशः ।
तस्याः स्त्रियोऽतिधूर्तायाः
कण्ठोत्थैः शोणितद्रवैः ॥ १२ ॥

भ्रातृपुत्रमहाशोकवह्निं निर्वापयाम्यहम् ।
गच्छ रे कुटिलाक्ष त्वं सज्जीकुरु पताकिनीम् १३
इत्युक्त्वा कठिनं वर्म वज्रपातसहं महत् ।
दधानो भुजमध्येन बध्नन्पृष्ठे महेषुधी ॥ १४ ॥
उद्दाममौर्वीनिस्वानकठोरं धन्व धारयन् ।
कालाग्निरिव संक्रुद्धो निर्जगाम निजात्पुरात् १५
तालजङ्घादिकैः सार्धं पुरद्वारनिवेशितैः ।
चतुर्भिर्धृतशस्त्रौघैर्धृतवर्मभिरुद्धतैः ॥ १६ ॥
पञ्चत्रिंशच्चमूनाथैः कुटिलाक्षपुरःसरैः ।

सर्वसेनापतीन्द्रेण कुटिलाक्षेण सक्रुधा ॥ १७ ॥
मिलित्वा तेन भण्डेन चत्वारिंशच्चमूवराः ।
दीप्तायुधा दीप्तकेशा निर्जग्मुर्दीप्तकंकटाः ॥ १८ ॥
द्विसहस्राक्षोहिणीनां पंञ्चाशीतिः शताधिका ।
तमन्वगाययावेकहेलया मथितुं द्विषः ॥ १९ ॥
भण्डासुरे विनिर्याते सर्वसैनिकसङ्कुले ।
शून्यके नगरे तत्र स्त्रीमात्रमवशेषितम् ॥ २० ॥
आभीलं नाम दैत्येन्द्रो रथवर्यं महारथः ।
सहस्रयुग्यसिंहाढ्यमारुरोह रणोद्धतः ॥ २१ ॥
तत्करे प्रविजज्वाल कालाग्निरिव दीप्तिमान् ।
यातनानामवान्खड्गश्चन्द्रहाससमाकृतिः ॥ २२ ॥
इतस्ततश्चलन्तीनां सेनानां धूलिरुद्धता ।
वोढुं तस्या भरं भूमिरक्षमेव दिवं ययौ ॥ २३ ॥
केचिद्भूमेरपर्याप्ताः प्रचेलुर्व्योमवर्त्मना ।
केषांचित्स्कन्धमारूढाः केचिच्चेलुर्महाबलाः॥२४॥
न दिक्षु नच भूचक्रे न व्योम्नि न च ते ममुः ।
दुःखदुःखेन ते चेलुरन्योन्याश्लेषपीडिताः ॥२५॥

अत्यन्तसेनासंमर्दाद्रथचक्रे विचूर्णिताः ।
केचित्पादेन नागानां मर्दिता न्यपतन्भुवि ॥२६॥
इत्थं प्रचलता तेन समं सर्वैश्च सैनिकैः ।
वज्रनिष्पेषसदृशः सिंहनादो व्यधीयत ॥ २७ ॥
तेनात्यन्तकठोरेण सिंहनादेन भूयसा ।
भण्डदैत्यमुखोत्थेन विदीर्णमभवज्जगत् ॥ १८ ॥
सागराः शोषमापन्नाश्चन्द्रार्कौ प्रपलायितौ ।
उडूनि न्यपतन्व्योम्नो भूमिर्डोलायिताभवत् २९
दिङ्नागाश्चाभवंस्त्रस्ता मूर्च्छालाश्च दिवौकसः ।
शक्तीनां कटकं चाभूदकाण्डत्रासविह्वलम् ॥३०॥
प्राणान्संधारयामासुः कथमप्यश्ववारणाः ।
शक्तयो भयविभ्रष्टान्यायुधानि पुनर्दधुः ॥ ३१ ॥
वह्निप्राकारवलयं प्रशान्तं पुनरुत्थितम् ।
दैत्येन्द्रसिंहनादेन चमूनाथधनुःस्वनैः ॥ ३२ ॥
क्रन्दनैश्चापि योधानां जगच्छाब्दमिवाभवत्॥३३
तेन नादेन महता भण्डदैत्यविनिर्गमम् ।
निश्चित्य ललितादेवी स्वयं योद्धुं प्रचक्रमे ॥ ३४॥

अशक्यमन्यशक्तीनामाकलय्य महाहवम् ।
भण्डदैत्येन दुष्टेन स्वयमुद्योगमास्थिता ॥ ३५ ॥
चक्रराजरथस्तस्याः प्रचचाल महोदयः ।
चतुर्वेदमहाचक्रः पुरुषार्थमहाहयः ॥ ३६ ॥
आनन्दध्वजसंयुक्तो नवभिः पर्वभिर्युतः ।
नवपर्वस्थदेवीभिराकृष्टगुरुधन्वभिः ॥ ३७ ॥
परार्धाधिकसंख्यातपरिवारसमृद्धिभिः ।
पर्वस्थानेषु सर्वेषु पालितः सर्वतोदिशम् ॥ ३८ ॥
दशयोजनमुन्नम्रश्चतुर्योजनविस्तृतः ॥ ३९ ॥
महाराज्ञीचक्रराजरथेन्द्रः प्रचलन्बभौ ॥ ४० ॥
तस्मिन्प्रचलिते जुष्टं श्यामया दण्डनाथया ।
गेयचक्रं चचालाग्रे किरिचक्रं च पृष्ठतः ॥ ४१ ॥
अन्यासामपि शक्तीनां वाहनानि परार्धशः ।
नृसिंहोष्ट्रनरव्यालमृगपक्षिहयात्मना ।
गजभेरुण्डशरभव्याघ्रवातमृगात्मना ॥ ४२ ॥
एतादृशास्तु तिर्यञ्चोऽप्यन्ये वाहनतां गताः ।
ऊहुरुच्चावचाः शक्तीर्भण्डासुरवधोद्यताः ॥ ४३ ॥

योजनामात्रविस्तारमपि तद्द्वारमण्डलम् ।
वह्निप्राकारचक्रस्य न पर्याप्तं चमूततेः ॥ ४४ ॥
ज्वालामालिनिका नित्या द्वारस्यात्यन्तविस्तृतिम् ।
वितताना समस्तानां शक्तीनां निर्गमैषिणी ॥४५॥
अथ सा जगतां माता महाराज्ञी महोदया ।
निर्जगामाग्निवरणद्वारात्तीव्रप्रतापिनी ॥ ४६ ॥
देवदुन्दुभयो नेदुः पतिताः पुष्पवृष्टयः ।
महामुक्तातपत्रं तु दिवि दीप्तमदृश्यत ॥ ४७ ॥
निमित्तानि प्रसन्नानि सूचकानि जयश्रियः ।
अभवँल्ललितासैन्य उत्पातास्तु द्विषां बले ॥४८॥
ततः प्रववृते युद्धं सेनयोरुभयोरपि ।
प्रसर्पद्विशिखस्तोमबद्धान्धतमसच्छटम् ॥ ४९ ॥
हन्यमानगजस्तोमस्रुतशोणितसिन्धुभिः ।
ह्रियमाणशरच्छिन्नदैत्यश्वेतातपत्रकम् ॥ ५० ॥
न दिशो न नभोभागो न भूमिर्न च किंचन ।
दृष्टं तु केवलं दुष्टं रजोमात्रं चमूत्थितम् ॥ ५१ ॥
नृत्यत्कबन्धनिवहविधूततटपादपा ।

दैत्यकेशशतस्रस्तशैवालकलिकोज्ज्वला ॥ ५२ ॥
श्वेतातपत्रवलयश्वेतपङ्कजभासुरा ।
चक्रकृत्तकरिग्रामपादकूर्मपरम्परा ॥ ५३ ॥
शक्तिध्वस्तमहादैत्यगजगण्डशिलोच्चया ।
विलूनकाण्डैः पतितैः सफेनालीव चामरैः ॥५४॥
तीक्ष्णासिवल्लरीजालनिबिडीकृततीरभूः ।
दैत्यवीरेक्षणश्रेणिशुक्तिसंपुटभासुरा ॥ ५५ ॥
दैत्यवाहनसंघातनक्रमीनशताकुला ।
प्रावहच्छोणितनदी सेनयोर्युध्यमानयोः ॥ ५६ ॥
इत्थं प्रववृते युद्धं मृत्योश्च त्रासकारकम् ॥ ५७ ॥
चतुर्थे युद्धदिवसे प्रातरारभ्य भीषणम् ।
प्रहरद्वयपर्यन्तं सेनयोरुभयोरपि ॥ ५८ ॥
तत्र श्रीललितायाश्च भण्डस्याप्यभवद्रणः ।
अस्त्रप्रत्यस्त्रसंक्षोभतुमुलीकृतदिक्तटः ॥ ५९ ॥
धनुर्ज्याजातटंकारहुंकारैरतिभीषणः ।
तूणीरवदनात्कर्षन्सन्दधानश्च धन्वनि ॥ ६० ॥
विमुञ्चन्विशिखान्पाणिः सर्वदाऽदृश्यताहवे ।

हस्तलाघववेगेन न प्राज्ञायत किंचन ॥ ६१ ॥
महाराज्ञीकराम्भोजव्यापारः शरमोक्षणे ।
सन्धाने त्वेकधा तस्या दशधा चापनिर्गमे ॥६२॥
शतधा गगने दैत्यसैन्यप्राप्तौ सहस्रधा ।
दैत्याङ्गसङ्गे संप्राप्ताः कोटिसंख्याः शिलीमुखाः६३
शरान्धकारं सृजती भिन्दन्ती रोदसी शरैः ।
मर्माभिनत्प्रचण्डस्य महाराज्ञी महेषुभिः ॥ ६४॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे ललितोपाख्याने श्रीललिताभण्डासुरयुद्धं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

[ श्रीललिताभण्डासुरदिव्यास्त्रप्रयोगः ॥ ]

ततः कोपारुणं नेत्रं वहन्भण्डः स दानवः ।
ववर्ष शरजालेन महता ललितेश्वरीम् ॥ १ ॥
अन्धतामिस्रकं नाम महास्त्रं प्रमुमोच सः ।
महातरणिबाणेन तं नुनोद महेश्वरी ॥ २ ॥

पाषण्डास्त्रं महावीरो भण्डः प्रमुमुचे रणे ।
गायत्र्यस्त्रं तस्य नुत्यै सस्मार जगदम्बिका ॥ ३ ॥
अन्धास्त्रमसृजद्भण्डः शक्तिदृष्टिविनाशकम् ।
चक्षुष्मती महास्त्रेण शमयामास तत्प्रसूः ॥ ४ ॥
शक्तिनाशाभिधं भण्डो मुमोचास्त्रं महारणे ।
विश्वावसोरथास्त्रेण तस्य दर्पमपाकरोत् ॥ ५ ॥
अन्तकास्त्रं ससर्जोच्चैः संक्रुद्धो भण्डदानवः ।
महामृत्युञ्जयास्त्रेण नाशयामास तद्बलम् ॥ ६ ॥
सर्वास्त्रस्मृतिनाशाख्यमस्त्रं भण्डो व्यमुञ्चत ।
धारणास्त्रेण चक्रेशी तद्भयं समनाशयत् ॥ ७ ॥
भयास्त्रमसृजद्भण्डो शक्तीनां भयदायकम् ।
अभयंकरमैन्द्रास्त्रं मुमुचे जगदम्बिका ॥ ८ ॥
महारोगास्त्रमसृजच्छक्तिसेनासु दानवः ।
राजयक्ष्मादयो रोगास्ततोऽभूवन्सहस्रशः ॥ ९ ॥
तन्निवारणसिद्ध्यर्थं ललिता परमेश्वरी ।
नामत्रयमहामन्त्रं महास्त्रं संमुमोचह ॥ १० ॥
अच्युतश्चाप्यनन्तश्च गोविन्दस्तच्छरोत्थिताः ।

हुङ्कारमात्रनिर्दग्धरोगास्तामनमन्मुदा ॥ ११ ॥
नत्वा च तां महेशानीं तद्भक्तव्याधिमर्दनम् ।
विधातुं त्रिषु लोकेषु नियुक्ताः स्वं पदं ययुः ॥१२
आयुर्नाशनमस्त्रं तु मुक्तवान्भण्डदानवः ।
कालसंकर्षिणीरूपमस्त्रं राज्ञी व्यमुञ्चत ॥ १३ ॥
महासुरास्त्रमुद्दामं व्यसृजद्भण्डदानवः ।
ततः सहस्रशो जाता महाकाया महासुराः ॥ १४
मधुश्च कैटभश्चैव महिषासुर एव च ।
धूम्रलोचनदैत्यश्च चण्डमुण्डादयोऽसुराः ॥ १५ ॥
चिक्षुरश्चामरश्चैव रक्तबीजासुरस्तथा ।
सुम्भश्चैव निसुम्भश्च कालकेया महासुराः ।
धूम्राभिधानाश्च परे तस्मादस्त्रात्समुत्थिताः ॥१६
ते सर्वे दानवश्रेष्ठाः कठोरैः शस्त्रमण्डलैः ।
शक्तिसेनां मर्दयन्तो नर्दन्तश्च भयङ्करम् ॥ १७ ॥
हाहेति क्रन्दमानाश्च शक्तयो दैत्यमर्दिताः ।
ललितां शरणं प्राप्ताः पाहि पाहीति सत्वरम् १८
अथ देवी भृशं क्रुद्धा रोषाट्टहसमातनोत् ॥१९॥

ततः समुत्थिता काचिद्दुर्गा नाम यशस्विनी ।
समस्तदेवतेजोभिर्निर्मिता विश्वरूपिणी ॥ २० ॥
शूलं च शूलिना दत्तं चक्रं चक्रिसमर्पितम् ।
शङ्खं वरुणदत्तं च शक्तिं दत्तां हविर्भुजा ॥२१॥
चापमक्षयतूणीरं मरुद्दत्तं महाध्वनि ।
वज्रिदत्तं च कुलिशं घण्टामैरावतार्पिताम् ॥२२॥
कालदत्तं महादण्डं पाशं पाशधरार्पितम् ।
ब्रह्मदत्तां कुण्डिकां च चषकं धनदार्पितम् ॥२३॥
मृत्युदत्तौ खड्गखेटौ हारं जलधिनार्पितम् ।
विश्वकर्मप्रदिष्टानि भूषणानि च बिभ्रती ॥ २४ ॥
अङ्गैः सहस्रकिरणश्रेणीभासुररश्मिभिः ।
आयुधानि समस्तानि दीपयन्ती महोदया ॥२५॥
अन्यदत्तैरथान्यैश्च शोभमाना परिच्छदैः ।
सिंहवाहनमारुह्य युद्धं नारायणी व्यधात् ॥२६॥
तया ते महिषप्रख्या दानवा विनिपातिताः ।
चण्डिकासप्तशत्यां तु यथा कर्म कृतं तया ॥२७॥
तथैव समरं चक्रे महिषादिमदापहम् ।

तत्कृत्वा दुष्करं कर्म ललितां प्रणनाम सा ॥२८॥
मूकास्त्रमसृजद्दुष्टः शक्तिसेनासु दानवः ।
महावाग्वादिनी नाम ससर्जास्त्रं जगत्प्रसूः ॥२९॥
विद्यारूपस्य वेदस्य तस्करानसुराधमान् ।
ससर्ज तत्र समरे दुर्मदो भण्डदानवः ॥ ३० ॥
दक्षहस्ताङ्गुष्ठनखान्महाराज्ञ्याः समुत्थितः ।
महामत्स्याकृतिः श्रीमानादिनारायणो विभुः ।
तेन ते वेदहर्तारः सोमकाद्या विनाशिताः ॥३१॥
अर्णवास्त्रं महावीरो भण्डदैत्यो रणेऽसृजत् ।
तत्रोद्दामपयःपूरे शक्तिसैन्यैरमज्जत ॥ ३२ ॥
अथ श्रीललितादक्षहस्ततर्जनिकानखात् ।
आदिकूर्मः समुत्पन्नो योजनायुतविस्तरः ॥ ३३ ॥
धृतास्तेन महाभोगकर्परेण प्रथीयसा ।
शक्तयो हर्षमापन्नाः सागरास्त्रभयं जहुः ॥ ३४ ॥
हिरण्याक्षमहास्त्रं तु विजहौ भण्डदानवः ।
तस्मात्सहस्रशो जाता हिरण्याक्षा गदायुधाः ३५
तैर्हन्यमाने शक्तीनां सैन्ये संत्रासविह्वले ।

इतस्ततः प्रचलिते शिथिले रणकर्मणि ॥ ३६ ॥
अथ श्रीललितादक्षहस्तमध्याङ्गुलीनखात् ।
महावराहः समभूच्छ्वेतः कैलाससंनिभः ॥ ३७ ॥
तेन वज्रसमानेन पोत्रेणाभिविदारिताः ।
कोटिशस्ते हिरण्याक्षा मर्द्यमानाः क्षयं गताः ३८
अथ भण्डस्त्वतिक्रोधाद्भ्रुकुटीं स ततान ह ।
तस्या भ्रुकुटितो जाता हिरण्याः कोटिसंख्यकाः ३९
ज्वलदादित्यवद्दीप्ता दीप्तप्रहरणाश्च ते ।
अमर्दयन् शक्तिसैन्यं प्रह्लादं चाप्यपीडयन् ॥४०॥
यः प्रह्लादोऽस्ति शक्तीनां परमानन्दलक्षणः ।
स एव बालको भूत्वा हिरण्यपरिपीडितः ।
त्रिपुरां शरणं प्राप्तस्तेन राज्ञी कृपामगात् ॥४१॥
अथ शक्त्यानन्दरूपं प्रह्लादं परिरक्षितुम् ।
दक्षहस्तानामिकाग्रं धुनोति स्म जगत्प्रसूः ॥४२॥
तस्माद्धुतजटाजालः प्रज्वलल्लोचनत्रयः ।
सिंहास्यः पुरुषाकारः कण्ठस्याधो जनार्दनः ४३
नखायुधः कालरुद्ररूपी घोराट्टहासवान् ।

सहस्रसंख्यदोर्दण्डो ललिताज्ञानुपालकः ॥ ४४ ॥
हिरण्यकशिपून्सर्वान्भण्डभ्रुकुटिसंभवान् ।
क्षणाद्विदारयामास नखैः कुलिशकर्कशैः ॥ ४५ ॥
बलीन्द्रास्त्रं महाघोरं सर्वदैवतनाशनम् ।
अमुञ्चल्ललितादेवीं प्रति भण्डमहासुरः ॥ ४६ ॥
तदस्त्रदर्पनाशाय वामनाः शतशोऽभवन् ।
क्षणे क्षणे वर्धमानाः पाशहस्ता महाबलाः ॥४७॥
बलीन्द्रास्त्रसमुद्भूतान्बध्नन्तः पाशमण्डलैः ।
दक्षहस्तकनिष्ठाग्राज्जाताः कामेशयोषितः ।
महाकाया महोत्साहास्तदस्त्रं समनाशयन् ॥४८॥
हैहयास्त्रं समसृजद्भण्डदैत्यो रणाजिरे ।
तस्मात्सहस्रशो जाताः सहस्रार्जुनकोटयः ॥४९॥
अथ श्रीत्रिपुरावामहस्ताङ्गुष्ठनखोत्थितः ।
प्रज्वलन्भार्गवो रामः सक्रोधः सिंहनादवान् ५०
धारयाऽमर्दयन्नेतान्कुठारस्य कठोरया ।
सहस्रार्जुनसंघातान्क्षणादेव व्यनाशयत् ॥ ५१ ॥
अथ क्रुद्धो भण्डदैत्यः क्रोधहुंकारमातनोत् ॥५२॥

तस्माद्धुंकारतो जातश्चन्द्रहासकृपाणवान्।
सहस्राक्षोहिणीरक्षःसेनया परिवारितः॥ ५३॥
दशद्वयभुजः क्रूरो रावणाख्यो दशाननः।
कनिष्ठं कुम्भकर्णं च मेघनादं च नन्दनम्।
गृहीत्वा शक्तिसैन्यं तदतिदूरममर्दयत्॥ ५४॥
अथ श्रीत्रिपुरावामहस्ततर्जनिकानखात्।
कोदण्डरामः समभूल्लक्ष्मणेन समन्वितः॥ ५५॥
जटामुकुटवान्वल्की बद्धतूणीरपृष्ठभूः।
नीलोत्पलदलश्यामो धनुर्विस्फारयन्मुहुः॥ ५६॥
नाशयामास दिव्यास्त्रैः क्षणाद्राक्षससैनिकम्।
मर्दयामास पौलस्त्यं कुम्भकर्णं च सोदरम्॥५७॥
लक्ष्मणो मेघनादं च महावीरमनाशयत्॥ ५८॥
द्विविदास्त्रं महाभीममसृजद्भण्डदानवः।
तस्मादनेकशो जाताः कपयः पिङ्गलोचनाः॥५९॥
क्रोधेनात्यन्तताम्रास्याः प्रत्येकं हनुमत्समाः।
व्यनाशयञ्शक्तिसैन्यं क्रूरक्रेंकारकारिणः॥ ६०॥
अथ श्रीत्रिपुरावामहस्तमध्याङ्गुलीनखात्।

आविर्भवद्धलधरः क्रोधमद्यारुणेक्षणः ॥ ६१ ॥
नीलाम्बरपिनद्धाङ्गः कैलासाचलनिर्मलः ।
द्विविदास्त्रसमुद्भूतान्कपीन्सर्वान्व्यनाशयत् ॥६२
राजासुरं नाम महत्ससर्जास्त्रं स दानवः ।
तस्मादस्त्रात्समुद्भूता बहवो नृपदानवाः ॥ ६३ ॥
शिशुपालो दन्तवक्त्रः साल्वः काशीपतिस्तथा ।
पौण्ड्रको वासुदेवश्च तथा हंसकडिम्भकौ ॥६४॥
शम्बरश्च प्रलम्बश्च तथा बाणासुरोऽपि च ।
कंसश्चाणूरमल्लश्च मुष्टिकोत्पलशेखरौ ॥ ६५ ॥
अरिष्टो धेनुकः केशी कालीयो यमलार्जुनौ ।
पूतना शकटश्चैव तृणावर्तादयोऽसुराः ॥ ६६ ॥
अनेकैः सह सेनाभिरुत्थिताः शस्त्रपाणयः ।
तान्विनाशयितुं सर्वान्वासुदेवः सनातनः॥ ६७॥
श्रीदेवीवामहस्ताब्जानामिकानखसंभवः ।
चतुर्व्यूहं समातेने चत्वारस्ते ततोऽभवन् ॥ ६८॥
वासुदेवो द्वितीयस्तु सङ्कर्षण इति स्मृतः ।
प्रद्युम्नश्चानिरुद्धश्च ते सर्वे प्रोद्यदायुधाः ॥ ६९ ॥

तानशेषान्दुराचारान्भूमेर्भारप्रवर्तकान् ।
नाशयामासुरुर्वीशवेषच्छन्नान्महासुरान् ॥ ७० ॥
अथ तेषु प्रणष्टेषु संक्रुद्धो भण्डदानवः ।
धर्मविप्लावकं घोरं कल्यस्त्रं सममुञ्चत ॥ ७१ ॥
ततः कल्यस्त्रतो जाता आन्ध्राः पुण्ड्राश्च मूतिबाः ।
किराताः शबरा हूणा यवनाः पापवृत्तयः ॥ ७२ ॥
वेदविप्लावका धर्मद्रोहिणः प्राणिहिंसकाः ।
वर्णाश्रमेषु सांकर्यकारिणो मलिनाङ्गकाः ।
त्रिपुराशक्तिसैन्यानि भूयो भूयो व्यमर्दयन् ७३
अथ श्रीललितावामहस्तपद्मस्य भास्वतः ।
कनिष्ठिकानखोद्भूतः कल्किर्नाम जनार्दनः ।
अश्वारूढः प्रदीप्तश्रीरट्टहासं चकार ह ॥ ७४ ॥
तस्यैव ध्वनिना सर्वे वज्रनिष्पेषबन्धुना ।
किराता मूर्च्छिता नेशुः शक्तयश्चापि हर्षिताः ७५
दशावतारनाथास्ते कृत्वेत्थं कर्म दुष्करम् ।
ललिताम्बां नमस्कृत्य बद्धाञ्जलिपुटाः स्थिताः ७६
प्रतिकल्पं धर्मरक्षां कर्तुं मत्स्यादिजन्मभिः ।

ललिताम्बानियुक्तास्ते वैकुण्ठाय प्रतस्थिरे ॥७७॥
इत्थं समस्तेष्वस्त्रेषु नाशितेषु दुराशयः ।
महामोहास्त्रमसृजच्छक्तयस्तेन मूर्च्छिताः ॥७८॥
शाम्भवास्त्रं विसृज्याम्बा महामोहास्त्रमक्षिणोत्॥७९
अस्त्रप्रत्यस्त्रधाराभिरित्थं जाते महाहवे ।
अस्तशैलं गभस्तीशो गन्तुमारभतारुणः ॥ ८० ॥

भण्डासुरवधः ।

अथ नारायणास्त्रेण सा देवी ललिताम्बिका ।
सर्वास्त्वक्षोहिणीस्तस्य भस्मसादकरोद्रणे ॥ ८१ ॥
अथ पाशुपतास्त्रेण दीप्तकालानलत्विषा ।
चत्वारिंशच्चमूनाथान्महाराज्ञी व्यमर्दयत् ॥८२॥
अथैकशेषं तं दुष्टं निहताशेषबान्धवम् ।
क्रोधेन प्रज्वलन्तं च जगद्विप्लवकारिणम् ॥ ८३ ॥
महासुरं महासत्वं भण्डं चण्डपराक्रमम् ।
महाकामेश्वरास्त्रेण सहस्रादित्यवर्चसा ।
गतासुमकरोन्माता ललितापरमेश्वरी ॥ ८४ ॥
ततस्तु प्रोद्गतज्वालैः शून्यकं नाम पट्टणम् ।

सस्त्रीकं च सबालं च सगोष्ठधनधान्यकम् ॥८५॥
निर्दग्धमासीत्सहसा स्थलमात्रमशिष्यत ।
भण्डस्य संक्षयेणासीत्त्रैलोक्यं हर्षनर्तितम् ॥ ८६ ॥
विजयश्रीयुतां देवीं दृष्ट्वा हर्षसमन्विताः ।
शक्तयो दध्वनुस्तूर्णं भेरीमङ्गलकाहलीः ॥ ८७ ॥
अवाकिरन्पुष्पवृष्टीर्देवा हर्षसमन्विता ।
देवदुन्दुभयो नेदुर्ववुर्वासन्तवायवः ॥ ८८ ॥
दिशः प्रसन्नतामापुर्नभश्च विमलं तथा ।
मङ्गलारात्रिकं चक्रुर्देवगन्धर्वयोषितः ॥ ८९ ॥
ननृतुश्चाप्सरःश्रेष्ठा उर्वशीमेनकादयः ।
प्लवनं विदधुर्हर्षाद्देवगन्धर्वकिन्नराः ॥ ९० ॥
स्मृत्वास्मृत्वा महाराज्ञ्याः पौरुषं तु चराचरम् ।
अभूत्कण्टकितं सर्वं किमेतदिति सस्मितम् ॥९१॥
विश्वावसुप्रभृतयो गन्धर्वाः सुरगायकाः ।
तुम्बुरुर्नारदश्चैव साक्षादेव सरस्वती ॥ ९२ ॥
जयमङ्गलपद्यानि पठन्ति पटुगीतिभिः ।
हर्षसंफुल्लवदनाः स्फुरत्पुलकभूषणाः ॥ ९३ ॥

मुहुर्जयजयेत्येव स्तुवाना ललितेश्वरीम् ।
हर्षेणान्धा मदोन्मत्ताः प्रनृत्यन्तः पदेपदे ॥९४॥
सप्तर्षयो वसिष्ठाद्या ऋग्यजुःसामरूपिभिः ।
अथर्वरूपैर्मन्त्रैश्च वर्धयन्तो जयश्रियम् ॥ ९५ ॥
हविषेव महावह्निशिखामत्यन्तपावनीम् ।
आशीर्वादेन महता वर्धयामासुरुत्तमाः ॥ ९६ ॥
तैः स्तूयमाना ललिता व्रीडानम्रीकृतानना ।
भण्डासुरं विनिर्जित्य गन्तुमुद्योगमादधे ॥ ९७ ॥
अथ सम्पत्करी देवी चचालाग्रे स्वसेनया ।
पाशायुधसमुत्पन्ना हयारूढा स्वसेनया ॥ ९८ ॥
लोलाभिः केतुमालाभिरुल्लिखन्ती घनाघनम् ।
व्यचलत्पुरतो देव्या बहुविक्रमशालिनी ॥ ९९ ॥
पार्श्वद्वयं समाश्रित्य महाराज्ञ्याः प्रचेलतुः ।
मन्त्रिणीदण्डनाथे ते आरुह्य रथपुंगवौ ॥ १०० ॥

इत्थं विधाय सुरकार्यमनिन्द्यरूपा
श्रीचक्रराजरथमण्डलमण्डनश्रीः ।
कामेश्वरी त्रिजगतां जननी बभासे
विद्योतमानविभवा विजयश्रियाढ्या १०१

सैन्यं समस्तमपि संगरकर्मखिन्नं
भण्डासुरप्रबलबाणकृशानुतप्तम्।
अस्तं गते सवितरि प्रथितप्रभावा
श्रीदेवता शिबिरमात्मन आनिनाय॥१०२॥

यो भण्डदानववधं ललिताम्बयेमं
कॢप्तं सकृत्पठति तस्य तपोधनेन्द्र।
नाशं प्रयान्ति कदनानि धृताष्टसिद्धे-
र्भुक्तिश्च मुक्तिरपि वर्तत एव हस्ते॥१०३॥

इमं पवित्रं ललितापराक्रमं
समस्तपापघ्नमशेषसिद्धिदम्।
पठन्ति पुण्येषु दिनेषु ये नरा
भजन्ति ते भाग्यसमृद्धिमुत्तमाम्॥१०४॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्य-
संवादे ललितोपाख्याने भण्डासुरवधो नाम
ोऽध्यायः॥ २६ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

[ ब्रह्मादिकृतललितास्तुतिः ॥ ]

अगस्त्यः ॥

अश्वानन महाप्राज्ञ श्रुतमाख्यानमुत्तमम् ।
विक्रमो ललितादेव्या विशिष्टो वर्णितस्त्वया ॥१॥
चरितैरनघैर्देव्याः संप्रीतोऽस्मि हयानन ।
श्रुता सा महती शक्तिर्मन्त्रिणीदण्डनाथयोः ॥ २ ॥
पश्चात्किमकरोत्तत्र युद्धानन्तरमम्बिका ।
चतुर्थदिनशर्वर्यां विभातायां हयानन ॥ ३ ॥

हयग्रीवः ॥

शृणु कुम्भभव प्राज्ञ यत्तया जगदम्बया ।
पश्चादाचरितं कर्म निहते भण्डदानवे ॥ ४ ॥
शक्तीनामखिलं सैन्यं दैत्ययुद्धशरार्दितम् ।
मुहुराह्लादयामास लोचनैरमृताप्लुतैः ॥ ५ ॥
ललितापरमेशान्याः कटाक्षामृतधारया ।
जहुर्युद्धपरिश्रान्तिं शक्तयः प्रीतमानसाः ॥ ६ ॥
अस्मिन्नवसरे देवा भण्डमर्दनतोषिताः ।

सर्वेऽपि सेवितुं प्राप्ता ब्रह्मविष्णुपुरोगमाः ॥ ७ ॥
ब्रह्मा विष्णुश्च रुद्रश्च शक्रो दिक्पास्तथैव च ।
आदित्या वसवो रुद्रा मरुतः साध्यदेवताः ॥८॥
सिद्धाः किंपुरुषा यक्षा निर्ऋत्याद्या निशाचराः ।
प्रह्लादाद्या महादैत्याः सर्वेऽप्यण्डनिवासिनः ।
आगत्य तुष्टुवुः प्रीत्या सिंहासनमहेश्वरीम् ॥ ९ ॥

ब्रह्माद्याः ॥

नमोनमस्ते जगदेकनाथे
नमो नमः श्रीत्रिपुराभिधाने ।
नमोनमो भण्डमहासुरघ्नि
नमोस्तु कामेश्वरवामकेशि ॥ १० ॥
चिन्तामणे चिन्तितदानदक्षे-
ऽचिन्त्ये चिदाकारतरङ्गमाले ।
चित्राम्बरे चित्रजगत्प्रसूते
चित्राख्यनित्याभिगते नमस्ते ॥ ११ ॥
मोक्षप्रदे मुग्धशशाङ्कचूडे
मुग्धस्मिते मोहविभेददक्षे ।

मुद्रेश्वरीचर्चितराज्यतन्त्रे
  मुद्राप्रिये देवि नमोनमस्ते ॥ १२ ॥
क्रूरासुरध्वंसिनि कोमलाङ्गि
  कोपेषु कालीतनुमादधाने ।
क्रोडाननापालितसैन्यचक्रे
  क्रोडीकृताशेषदये नमस्ते ॥ १३ ॥
षडङ्गदेवीपरिवारगुप्ते
  षडङ्गयुक्तश्रुतिवाक्यमृग्ये ।
षट्चक्रसंस्थे च षडूर्मिहन्त्रि
  षड्भावरूपे ललिते नमस्ते ॥ १४ ॥
कामेश्वरीमुख्यसमस्तनित्या
  कान्तासनान्ते कमलायताक्षि ।
कामप्रदे कामिनि कामशम्भोः
  काम्ये कलानामधिपे नमस्ते ॥ १५ ॥
दिव्यौघसिद्धौघनरौघरूपे
  दिव्ये दिनाधीशसहस्रकान्ते ।
देदीप्यमाने दयया सनाथे
  देवादिदेवप्रमदे नमस्ते ॥ १६ ॥

सदाणिमाद्यष्टकसेवनीये
सदाशिवात्मोज्ज्वलमञ्चवासे ।
सौम्ये सदेकायनपादपूज्ये
सवित्रि लोकस्य नमोनमस्ते ॥ १७ ॥
ब्राह्मीमुखैर्मातृगणैर्निषेव्ये
ब्रह्मप्रिये ब्राह्मणि बन्धहन्त्रि ।
ब्रह्मामृतस्रोतसि राजहंसि
ब्रह्मेश्वरि श्रीललिते नमस्ते ॥ १८ ॥
संक्षोभिणीमुख्यसमस्तमुद्रा-
संसेविते संसरणप्रहन्त्रि ।
संसारलीलाकरि सारसाक्षि
सदा नमस्ते ललितेऽधिनाथे ॥ १९ ॥
नित्याकलाषोडशकेन कामा-
कर्षिण्यधिश्रीप्रथमेन सेव्ये ।
नित्ये निरातङ्कदयाप्रपञ्चे
नीलालकश्रेणि नमोनमस्ते ॥ २० ॥
अनङ्गपुष्पादिभिरुन्मदाभि-
रनङ्गदेवीभिरजस्रसेव्ये ।

अभव्यहृत्र्यक्षरराशिरूपे
हृतारिवर्गे ललिते नमस्ते ॥ २१ ॥
संक्षोभिणी मुख्यचतुर्दशार्चि-
र्मालावृतोदारमहाप्रदीपम् ।
आत्मानमाबिभ्रति विभ्रमाढ्ये
शुभ्राशये शुद्धपदे नतिस्ते ॥ २२ ॥
ससर्वसिद्ध्यादिकशक्तिवृन्दे
सर्वज्ञविज्ञातपदारविन्दे ।
सर्वाधिके सर्वगते समस्त-
सिद्धिप्रदे श्रीललिते नमस्ते ॥ २३ ॥
सर्वज्ञतायुक्प्रथमाभिरन्य-
देवीभिरप्याश्रितचक्रभूमे ।
सर्वामराकाङ्क्षितपूरयित्रि
सर्वस्य लोकस्य सवित्रि पाहि ॥ २४ ॥
वन्द्ये वशिन्यादिकवाग्विभूति-
वर्धिष्णुचक्रद्युतिवाहवाहे ।
बलाहकश्यामकचे वचोब्धे
वरप्रदे सुन्दरि पाहि विश्वम् ॥ २५ ॥

बाणादिकैरायुधसार्वभौमै-
भण्डासुरानीकवनान्तदावैः ।
प्रत्यग्रतेजोज्ज्वलिताम्बुराशे
प्रपाल्यमानेऽपरितो नमस्ते ॥ २६ ॥
कामेशि वज्रेशि भगेशिरूपे
कल्ये कले कालविलोपदक्षे ।
कथावशेषीकृतदैत्यसैन्ये
कामेशकान्ते कमले नमस्ते ॥ २७ ॥
बिन्दुस्थिते बिन्दुकलैकरूपे
ब्रह्मात्मिके बृंहितचित्प्रकाशे ।
बृहत्कुचाभोगविलोलहारे
बृहत्प्रभावे वरदे नमस्ते ॥ २८ ॥
कामेश्वरोत्सङ्गसदानिवासे
कालात्मिके कन्दलितानुकम्पे ।
कल्पावसानोत्थितकालिरूपे
कामप्रदे कल्पलते नमस्ते ॥ २९ ॥
सर्वारुणे सान्द्रसुधासुशीते
सारङ्गशावाक्षि सरोजवक्त्रे ।

सारस्य सारस्य सदैकभूमे
समस्तविश्वेश्वरि संनतिस्ते ॥ ३० ॥
तव प्रभावेन चिदाग्निजायाः
श्रीशंभुनाथप्रकटीकृतायाः ।
भण्डासुराद्याः समरे प्रचण्डा
हता जगत्कण्टकतां प्रयाताः ॥ ३१ ॥
नव्यानि सर्वाणि वपूंषि देवि
त्वत्सान्द्रकारुण्यसुधाप्लुतानि ।
त्वया समस्तं भुवनं सहर्षं
संजीवितं सुन्दरि सभ्यलभ्ये ॥ ३२ ॥
श्रीशंभुनाथस्य महाशयस्य
द्वितीयतेजःप्रसरात्मको यः ।
स्थाण्वाश्रमे क्लृप्ततपा विरक्तः
सतीवियोगेन निरस्तभोगः ॥ ३३ ॥
तेनाद्रिवंशे धृतजन्मलाभां
कन्यामुमां योजयितुं प्रवृत्ताः ।
वयं स्मरं प्रेरितवन्त एव
तस्यान्तिकं घोरतपःस्थितस्य ॥ ३४ ॥

तेनाथ वैराग्यतपोविघात-
क्रुद्धेन लालाटकृशानुदग्धः ।
भस्मावशेषो मदनस्ततोऽभू-
त्ततो हि भण्डासुर एष जातः ॥ ३५
ततो वधस्तस्य दुराशयस्य
कृतो भवत्या रणदुर्मदस्य ।
अथास्मदर्थे स्वतनुत्यजस्त्वं
कामस्य संजीवनमाशु कुर्याः ॥ ३६ ॥
इयं रतिर्भर्तृवियोगखिन्ना
वैधव्यमत्यन्तमभव्यमाप्ता ।
पुनस्त्वदुत्पादितकामसङ्गा-
द्भविष्यति श्रीललिते सनाथा ॥ ३७ ॥
त्वयाथ सृष्टेन मनोभवेन
संमोहितः पूर्ववदिन्दुमौलिः ।
चिरं कृतात्यन्तमहासपर्यां
तां पार्वतीं द्राक्परिणेष्यतीशः ॥ ३८ ॥
तयोश्च सङ्गाद्भविता कुमारः
समस्तगीर्वाणचमूविनेता ।

तेनैव वीरेण रणे निरस्यः
स तारको नाम सुरारिराजः ॥ ३९ ॥
यो भण्डदैत्यस्य दुराशयस्य
मित्रं स लोकत्रयधूमकेतुः ।
श्रीकण्ठपुत्रेण रणे हतश्चे-
त्प्राणप्रतिष्ठैव सदा भवेन्नः ॥ ४० ॥
तस्मात्त्वमम्ब त्रिपुरे जनाना-
मानन्दकं मन्मथवीरवर्यम् ।
उत्पाद्य रत्या विधवात्वदुःख-
मपाकुरु व्याकुलकुन्तलायाः ॥ ४१ ॥
एषा त्वनाथा भवतीं प्रपन्ना
भर्तुः प्रणाशेन कृशाङ्गयष्टिः ।
नमस्करोति त्रिपुराधिनाथे
त्वमत्र[1] कारुण्यकलां निधेहि ॥ ४२ ॥

श्रीहयग्रीवः ॥

इत्थं स्तुत्वा महेशानीं ब्रह्माद्या विबुधोत्तमाः ।
तां रतिं दर्शयामासुर्मलिनां शोकखेदिनीम् ॥४३॥

१ तदत्रेति पाठान्तरम् ।

सा पर्यश्रुमुखी घूर्णकुन्तला धूलिधूसरा ।
ननाम जगदम्बायै वैधव्यात्त्यक्तभूषणा ॥ ४४ ॥
अथ तद्दर्शनोत्पन्नकारुण्या परमेश्वरी ।
कान्तं कटाक्षयामास कामेश्वरमनिन्दिता ॥४५॥
ततः कटाक्षादुत्पन्नः स्मयमानमुखाम्बुजः ।
पूर्वदेहाधिकरुचिर्मन्मथो मदमेदुरः ॥ ४६ ॥
द्विभुजः सर्वभूषाढ्यः पुष्पेषुः पुण्ड्रकार्मुकः ।
आनन्दयन्कटाक्षेण पूर्वजन्मप्रियां रतिम् ॥ ४७ ॥
अथ सा रतिदेवी च महत्यानन्दसागरे ।
मज्जन्ती निजभर्तारमवलोक्य मुदं गता ॥४८॥
स च कन्दर्पवीरोऽपि नमस्कृत्य महेश्वरीम् ।
व्यज्ञापयदिदं वाक्यं भक्तिनिर्भरमानसः ॥४९॥
यद्दग्धमीशनेत्रेण वपुर्मे ललिताम्बिके ।
तत्त्वदीयकटाक्षस्य प्रसादात्पुनरागतम् ॥ ५० ॥
तव पुत्रोऽस्मि दासोऽस्मि क्वापि कृत्ये नियुङ्क्ष्व माम् ।
इत्युक्त्वा परमेशानी तमाह मकरध्वजम् ॥ ५१॥

श्रीदेवी ॥

गच्छ वत्स मनोजन्मन्नभयं तव विद्यते ।

मत्प्रसादाज्जगत्सर्वं मोहयाव्याहताशुगः ॥ ५२ ॥
त्वद्बाणपातनाज्जातधैर्यविप्लव ईश्वरः ।
पर्वतस्य सुतां गौरीं परिणेष्यति सत्वरम् ॥ ५३॥
सहस्रकोटयः कामा मत्प्रसादात्त्वदुद्भवाः ।
सर्वेषां देहमाविश्य दास्यन्ति रतिमुत्तमाम् ॥ ५४
मत्प्रसादेन वैराग्यात्संक्रुद्धोऽपि स ईश्वरः ।
देहदाहं विधातुं ते न समर्थो भविष्यति ॥ ५५ ॥
प्रत्युतासौ कातरात्मा त्वद्बाणहृतमानसः ।
स्वभार्याविरहाशङ्की देहस्यार्धं प्रदास्यति ॥ ५६ ॥
अद्यप्रभृति कन्दर्प मत्प्रसादान्महीयसः ।
अदृश्यमूर्तिः सर्वेषां प्राणिनां भव मोहकः ॥५७॥
त्वन्निन्दां ये करिष्यन्ति त्वयि वा विमुखाशयाः ।
अवश्यं क्लीबतैव स्यात्तेषां जन्मनि जन्मनि ॥५८॥
ये पापिष्ठा दुरात्मानो मद्भक्तद्रोहिणश्च ये ।
तानगम्यासु नारीषु पातयित्वा विनाशय ॥५९॥
येषां मदीयपूजासु मद्भक्तेष्वादृतं मनः ।
तेषां कामसुखं सर्वं संपादय समीप्सितम् ॥६०॥

इति श्रीललितादेव्या कृताज्ञावचनस्मरः ।
तथेति शिरसा बिभ्रदञ्जलिं निर्ययौ स्मरः ॥६१॥
तस्यानङ्गस्य सर्वेभ्यो रोमकूपेभ्य उत्थिताः ।
बहवः शोभनाकारा मदना विश्वमोहनाः ॥ ६२॥
तैर्विमोह्य समस्तं च जगच्चक्रं मनोभवः ।
पुनः स्थाण्वाश्रमं प्राप चन्द्रमौलेर्जिगीषया ॥६३॥
वसन्तेन च मित्रेण सेनान्या शीतरोचिषा ।
रागेण पीठमर्देन मन्दानिलरथेन च ॥ ६४ ॥
पुंस्कोकिलगलस्वानकाहलीभिश्च संयुतः ।
शृङ्गारवीर्यसंपन्नो रत्यालिङ्गितविग्रहः ॥ ६५ ॥
जैत्रं शरासनं धून्वन्प्रवीराणां पुरोगमः ।
तपोनिष्ठं चन्द्रमौलिं ताडयामास सायकैः ॥ ६६
अथ कन्दर्पबाणौघैस्ताडितश्चन्द्रशेखरः ।
दूरीचकार वैराग्यं तपस्तत्याज दुष्करम् ॥ ६७ ॥
नियमानखिलांस्त्यक्त्वा ध्वस्तधैर्यः शिवः कृतः ।
तामेव पार्वतीं ध्यात्वा भूयोभूयः स्मरातुरः ॥६८
निश्श्वास वहन् शर्वः पाण्डरं गण्डमण्डलम् ।

बाष्पायमाणो विरहसंतप्तो धैर्यविप्लवान् ।। ६९ ।।
भूयोभूयो गिरिसुतां पूर्वदृष्टामनुस्मरन् ।
अनङ्गबाणदहनैस्तप्यमानस्य शूलिनः ।। ७० ।।
न चन्द्ररेखा नो गङ्गा देहतापच्छिदेऽभवत् ।
नन्दिभृङ्गिमहाकालप्रमुखैर्गणमण्डलैः ।। ७१ ।।
आहृते पुष्पशयने विलुलोठ मुहुर्मुहुः ।
नन्दिनो हस्तमालम्ब्य पुष्पतल्पान्तरात्पुनः ।।७२
पुष्पतल्पान्तरं गत्वा व्यवेष्टत मुहुर्मुहुः ।
न पुष्पशयने नेन्दुखण्डनिर्गलितामृते ।। ७३ ।।
न हिमानीपयसि वा निर्वृतस्तद्वपुर्ज्वरः ।
स तनोरतनुज्वालां शमयिष्यन्मुहुर्मुहुः ।। ७४ ।।
शिलीभूतान्हिमपयःपट्टानध्यवसञ्छिवः ।
भूयः शैलसुतारूपं चित्रपट्टे नखैर्लिखन् ।। ७५ ।।
तदालोकनतो दूरमनङ्गार्तिमवर्धयत् ।
तामालिख्य ह्रिया नम्रामीक्षमाणां कटाक्षतः ७६
तं चित्रपटमङ्गेषु रोमहर्षिषु चाक्षिपत् ।
चित्रासङ्गेन महता महत्या रतिसंपदा ।। ७७ ।।

भूयसा स्मरतापेन विव्यथे विषमेक्षणः ।
तामेव सर्वतः पश्यंस्तस्यामेव मनोदिशन् ॥७८॥
तयैव संल्लपन् सार्धमुन्मादेनोपपन्नया ।
तन्मयीभूतहृदयस्तच्चिन्तस्तत्परायणः ॥ ७९ ॥
तत्कथासुधया नीतसमस्तरजनीदिनः ।
तच्छीलवर्णनव्यग्रस्तद्रूपालोकनोत्सुकः ॥ ८० ॥
तच्चारुभोगसङ्कल्पमालाकरणमालिकः ।
तन्मयत्वमनुप्राप्तस्तापातितरां शिवः ॥ ८१ ॥
इमां मनोभवरुजमचिकित्स्यां स धूर्जटिः ।
अवलोक्य विवाहाय भृशमुद्यमवानभूत् ॥८२॥
इत्थं विमोह्य तं देवं कन्दर्पो ललिताज्ञया ।
अथ तां पर्वतसुतामाशुगैरभ्यताडयत् ॥ ८३ ॥
प्रभूतविरहज्वालामलिनैः श्वसितानिलैः ।
शुष्यमाणाधरदला भृशं पाण्डुकपोलभूः ॥८४॥
नाहारे शयने नैव न स्वापे धृतिमिच्छति ।
सखीसहस्ररचितैर्नित्यं शीतोपचारकैः ॥ ८५ ॥
पुनःपुनस्तप्यमाना पुनरेव च विह्वला ।

न जगाम रुजा शान्तिं मन्मथाग्नेर्महीयसः ॥८६॥
न निद्रां पार्वती भेजे विरहेणोपतापिता ।
स्वतनोस्तानवेनासौ पितुः खेदमवर्धयत् ॥ ८७ ॥
अप्रतीकारपरुषं विरहं दुहितुः शिवे ।
अवलोक्य स शैलेन्द्रो महद्दुःखमवाप्तवान् ॥८८॥
भद्रे त्वं तपसा देवं तोषयित्वा महेश्वरम् ।
भर्तारं तं समृच्छेति पित्रा संप्रेरिता तदा ॥८९॥
हिमवच्छैलशिखरे गौरीशिखरनामनि ।
चकार पतिलाभाय पार्वती दुष्करं तपः ॥ ९० ॥
शिशिरेषु जलावासा ग्रीष्मे पञ्चाग्निमध्यगा ।
अर्के निविष्टदृष्टिश्च सुघोरं तप आस्थिता ॥ ९१ ॥
तेनैव तपसा तुष्टः सान्निध्यं दत्तवाञ्शिवः ।
अङ्गीचकार तां भार्यां वैवाहिकविधानतः ॥९२॥
अथ प्रालेयशैलेन्द्रदत्तां तां नलिनेक्षणाम् ।
सप्तर्षिद्वारतः पूर्वं प्रार्थितामुदवोढ सः ॥ ९३ ॥
तया च रममाणोऽसौ बहुकालं महेश्वरः ।
ओषधिप्रस्थनगरे श्वशुरस्य गृहे वसन् ॥ ९४ ॥

पुनः कैलासमागत्य समस्तैः प्रमथैः सह ।
पार्वतीमानिनायाद्रिनाथस्य प्रियमावहन् ॥ ९५॥
रममाणस्तया सार्धं कैलासे मन्दरे तथा ।
विन्ध्याद्रौ हेमशैले च मलये पारियात्रके ॥९६॥
नानाविधेषु स्थानेषु रतिं प्राप महेश्वरः ।
अथ तस्यां ससर्जोग्रं वीर्यं सा सोढुमक्षमा ॥९७॥
भुव्यत्यजत्सापि वह्नौ कृत्तिकासु स चाक्षिपत् ।
ताश्च गङ्गाजलेऽमुञ्चन्सा च स्वशरकानने ॥९८॥
अत्रोद्भूतो महावीरो महासेनः षडाननः ।
गङ्गया चान्तिकं नीतो धूर्जटेर्वृद्धिमागमत् ॥९९॥
स वर्धमानो दिवसेदिवसे तीव्रविक्रमः ।
शिक्षितो निजतातेन सर्वविद्या अवाप्तवान् ॥१००
अथ तातकृतानुज्ञः सुरसैन्यपतिर्भवन् ।
तारकं मारयामास समस्तैः सह दानवैः ॥१०१॥
पुनस्तारकदैत्येन्द्रवधसंतोषशालिना ।
शक्रेण दत्तां स गुहो देवसेनामुपागमत् ॥ १०२॥
सा शक्रतनया देवसेनानाम्नी यशस्विनी ।

आसाद्य रमणं स्कन्दमानन्दं भृशमादधौ ॥१०३॥
इत्थं संमोहिताशेषविश्वचक्रो मनोभवः ।
देवकार्यं सुसंपाद्य जगाम श्रीपुरं पुनः ॥ १०४॥
यत्र श्रीनगरे पुण्ये ललिता परमेश्वरी ।
वर्तते जगतामृद्ध्यै तत्र तां सेवितुं ययौ ॥१०५॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्य-
संवादे ललितोपाख्याने मदनपुनर्भवो नाम
सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ श्रीनगरनिर्माणम् ॥

अगस्त्यः ॥

किमिदं श्रीपुरं नाम केन रूपेण वर्तते ।
केन वा निर्मितं पूर्वं तत्सर्वं विनिवेदय ॥ १ ॥
कियत्प्रमाणं किंवर्णं कथयस्व मम प्रभो ।
त्वमेव सर्वसंदेहपङ्कशोषणभास्करः ॥ २ ॥

श्रीहयग्रीवः ॥

यदा चक्ररथं प्राप्य पूर्वोक्तैर्लक्षणैर्युतम् ।

महायागानलोत्पन्ना ललिता परमेश्वरी ॥ ३ ॥
व्यजेष्ट भण्डनामानमसुरं लोककण्टकम् ।
तदा देवा महेन्द्राद्याः संतोषं बहु भेजिरे ॥ ४ ॥
अथ कामशिवस्यापि ललितायाश्च सुन्दरम् ।
नित्योपभोगसेवार्थं मन्दिरं कर्तुमुत्सुकाः ॥ ५ ॥
कुमारा ललितादेव्या ब्रह्मविष्णुमहेश्वराः ।
वर्धकिं विश्वकर्माणं सुराणां शिल्पकोविदम् ॥६॥
असुराणां शिल्पिनं च मयं मायाविचक्षणम् ।
आहूय कृतसत्कारा ऊचिरे ललिताज्ञया ॥ ७ ॥

कारणपुरुषाः ॥

भो विश्वकर्मन् शिल्पज्ञ भो भो मय महोदय ।
भवन्तौ सर्वशास्त्रज्ञौ घटनामार्गकोविदौ ॥ ८ ॥
संकल्पमात्रेण महाशिल्पकल्पविशारदौ ।
युवाभ्यां ललितादेव्या नित्यज्ञानमहोदधेः ॥ ९ ॥
षोडशक्षेत्रमध्येषु तत्क्षेत्रसमसंख्यया ।
कर्तव्याः श्रीनगर्यो हि नानारत्नैरलंकृताः ॥१०॥
यत्र षोडशधा भिन्ना ललिता परमेश्वरी ।

विश्वत्राणाय सततं निवासं रचयिष्यति ॥ ११ ॥
अस्माकं वा प्रियमिदं मरुतामपि च प्रियम् ।
सर्वलोकप्रियमिदं तस्मान्नैव विलम्ब्यताम् ॥१२॥
इति कारणदेवानां वचनं तन्निशम्य तौ ।
विश्वकर्ममयौ नत्वा व्यभाषेतां तथास्त्विति ॥१३
पुनर्नत्वा पृष्टवन्तावेतान्कारणपूरुषान् ।
केषु क्षेत्रेषु कर्तव्याः श्रीनगर्यो महोदयाः ॥१४॥
ब्रह्माद्याः परिपृष्टास्ते प्रोचुस्तौ शिल्पिनौ पुनः ।
क्षेत्राणां प्रविभागं तु कल्पयन्तौ यथोचितम् ॥१५

कारणपुरुषाः ॥

प्रथमं मेरुपृष्ठे च निषधे च महीधरे ।
हेमकूटे हेमगिरौ पञ्चमे गन्धमादने ॥ १६ ॥
नीलमेषे च शृङ्गाख्ये महेन्द्रे च महागिरौ ।
क्षेत्राणि वा नवैतानि भौमानि विदितान्यथ ॥१७
औदकानि तु सप्तैव प्रोक्तान्यखिलसिन्धुषु ॥
लवणाब्धीक्षुसाराब्धिसुराब्धिघृतसागराः ॥१८॥
दधिसिन्धुः क्षीरसिन्धुर्जलसिन्धुश्च सप्तमः ।

पूर्वोक्ता नव शैलेन्द्राः पश्चात्सप्त च सिन्धवः १९
आहृत्य षोडश क्षेत्राण्यम्बाश्रीपुरक्लृप्तये ।
एषु दिव्यानि वेश्मानि ललिताया महौजसः २०
सृजेतां दिव्यघटनापण्डितौ शिल्पिनौ युवाम् ।
एषु क्षेत्रेषु क्लृप्तानां श्रीदेवीश्रीमहापुराम् ॥ २१ ॥
नामानि नित्यानाम्नैव प्रथितानि न संशयः ।
सा हि नित्यास्वरूपेण कालव्याप्तिकरी परा ॥ २२
सर्वं कलयते देवी कलनाकलया जगत् ॥ २३ ॥
नित्यायाश्च महाराज्ञीनित्यायाश्च न तद्भिदा ।
अतस्तदीयनाम्ना तु स्वनाम्नां प्रथनं पुराम् ॥२४॥
कामेश्वरीपुरी चैव भगमालापुरी तथा ।
नित्यक्लिन्नापुरीत्यादिनामानि प्रथितान्यलम् ॥२५॥
ततो नामादिवर्णस्य योग्ये पुण्यतरे दिने ।
महाशिल्पप्रकारेण पुरी रचयतां शुभाः ॥ २६ ॥
इति कारणकृत्येन्द्रैर्ब्रह्मविष्णुमहेश्वरैः ।
प्रोक्तौ तौ श्रीपुरीस्तेषु तेषु क्षेत्रेषु चक्रतुः ॥ २७॥
अथ श्रीपुरविस्तारं पुराधिष्ठानदेवताः ।

कथयाम्यवधार्यैव लोपामुद्रापते शृणु ॥ २८ ॥
यो मेरुरखिलाधारस्तुङ्गः साहस्रयोजनः ।
चतुर्दशजगच्चक्रसंप्रोतनिजविग्रहः ॥ २९ ॥
तस्य शृङ्गाणि चत्वारि शक्रनैर्ऋतवायुषु ।
मध्यस्थले च जातानि प्रोच्छ्रायस्तेषु कथ्यते ३०
पूर्वोक्तशृङ्गत्रितयं शतयोजनमुन्नतम् ।
शतयोजनविस्तारं तेषु लोकास्त्रयो मताः ॥ ३१ ॥
ब्रह्मलोको विष्णुलोकः शिवलोकस्तथैव च ।
एतेषां गृहविन्यासान्वक्ष्याम्यवसरान्तरे ॥ ३२ ॥
मध्यस्थितस्य शृङ्गस्य विस्तारं चोच्छ्रयं शृणु ।
चतुश्शतं योजनानामुच्छ्रितं विस्तृतं तथा ॥३३॥
तत्रैव शृङ्गे महति शिल्पिभ्यां श्रीपुरं कृतम् ।
चतुःशतं योजनानां विस्तृतं कुम्भसम्भव ॥ ३४॥
तत्रायं प्रविभागस्ते प्रविविच्य प्रदश्यते ।
प्राकारः प्रथमः प्रोक्तः कालायसविनिर्मितः॥३५
षट्शताधिकसाहस्रयोजनायतवेष्टितः ॥ ३६ ॥
चतुर्दिक्षु द्वारयुतश्चतुर्योजनमुच्छ्रितः ।

सालमूलपरीणाहो योजनायतमब्धिप ॥ ३७ ॥
सालाग्रस्य तु गव्यूतेरर्धं वातापितापन ।
सालद्वारस्य चौन्नत्यमेकयोजनमाश्रितम् ॥ ३८ ॥
द्वारेद्वारे कवाटे द्वे गव्यूत्यर्धप्रविस्तरे ।
एकयोजनमुन्नम्रे कालायसविनिर्मिते ॥ ३९ ॥
उभयोरर्गलद्वन्द्वमर्धक्रोशसमायतम् ।
एवं चतुर्षु द्वारेषु सदृशं परीकीर्तितम् ॥ ४० ॥
गोपुरस्य तु संस्थानं कथये कुम्भसंभव ।
पूर्वोक्तस्य तु सालस्य मूले योजनसंमिते ।
पार्श्वद्वये योजने द्वे द्वे समादाय निर्मितम् ॥४१
विस्तारमपि तावन्तं संप्राप्तं द्वारगर्भितम् ॥ ४२॥
पार्श्वद्वयद्वियोजन्या मध्ये सालस्य योजनम् ।
मेलयित्वा पञ्चसंख्यायोजनं विस्तृतं मतम् ॥४३
द्वारपार्श्वद्वयेनैव क्रोशे द्वाःक्रोशयुग्मतः ।
मेलयित्वा पञ्चसंख्यायोजनादूरमायतम् ॥ ४४ ॥
एवं प्रकारतस्तत्र गोपुरं रचितं मुने ।
तस्माद्गोपुरमूलस्य वेष्टो विंशतियोजनः ॥ ४५ ॥

उपर्युपरि वेष्टस्य ह्रास एव प्रकीर्त्यते ।
गोपुरस्योन्नतिः प्रोक्ता पञ्चविंशतियोजना ॥४६॥
योजने योजने द्वारं सकवाटं मनोहरम् ।
भूमिकाश्चापि तावन्त्यो यथोर्ध्वह्रासंयुताः ॥४७
गोपुराग्रस्य विस्तारो योजनामात्रमाश्रितः ।
आयामोऽपि च तावान्वै तत्र त्रिमकुटं स्मृतम्४८
मकुटस्य तु विस्तारः क्रोशमात्रो घटोद्भव ।
क्रोशद्वयसमुन्नम्रो ह्रासो गोपुरवन्मुने ॥ ४९ ॥
मकुटस्यान्तरक्षोणी क्रोशार्धेन च संमिता ।
मकुटाः पश्चिमप्राच्या दक्षिणद्वारगोपुरे ॥ ५० ॥
दक्षोत्तरास्तु मकुटाः पश्चिमद्वारगोपुरे ।
दक्षिणद्वारवत्प्रोक्ता उत्तरद्वाःकिरीटिकाः ॥५१॥
पश्चिमद्वारवत्पूर्वद्वारे मकुटकल्पनम् ।
कालायसस्य सालस्यान्तरे मारुतयोजने ॥ ५२ ॥
अन्तरे कांस्यसालः स्यात्पूर्ववद्गोपुरान्वितः ।
सालमूलप्रमाणं च पूर्ववत्परिकीर्तितम् ॥ ५३ ॥
कांस्यसालोऽपि पूर्वादिदिक्षु द्वारसमन्वितः ।

द्वारेद्वारे गोपुराणि पूर्वलक्षणभाञ्जि च ॥ ५४ ॥
कालायसस्य सालस्य योऽन्तर्देशः समन्ततः ।
नानावृक्षमहोद्यानं तत्प्रोक्तं कुम्भसंभव ।
उद्भिज्जालं यावदस्ति तत्सर्वं तत्र वर्तते ॥ ५५ ॥
परस्सहस्रास्तरवः सदापुष्पास्सदाफलाः ।
सदाप्रसवशोभाढ्याः सदासौरभ्यसंकुलाः ॥५६॥
चूताः कङ्केलयो लोध्रा वकुलाः कर्णिकारकाः ।
शिंशपाश्च शिरीषाश्च देवदारुनमेरवः ॥ ५७ ॥
पुन्नागा भद्रनागाश्च मुचिलिन्दाश्च कर्पराः ।
एलालवङ्गास्तक्कोलास्तथा कर्पूरशाखिनः ॥५८॥
पीलवः काकतुण्डाश्च नलकाश्चासनास्तथा ।
काञ्चनाराश्च लिकुचाः पारसा हिञ्जुलास्तथा ५९
पाटलाश्च फलिन्यश्च जघन्या जघनेफलाः ।
गणिकाश्च कुरुण्डाश्च बन्धुजीवाश्च दाडिमाः ६०
अश्वकर्णा हस्तिकर्णाश्चाम्पेयाः कनकद्रुमाः ।
यूथिकास्तालपर्ण्यश्च लाङ्गल्यश्च सदाफलाः ॥६१
तालास्तमाला हिन्तालाः खर्जूराः शरबर्बराः ।

इक्षवः क्षीरिणश्चैव श्लेष्मातकविभीतकाः ॥६२॥
हरीतक्यस्त्ववाक्पुष्प्यो घोण्टाल्यः स्वर्णपुष्पिकाः।
भल्लातकाश्च खदिराः शाकोटाश्चन्दनद्रुमाः ॥ ६३
कालागरुद्रुमाः कालस्कन्धाश्चिञ्चा धवास्तथा।
उदुम्बरास्तथाश्वत्थाः शमीवृक्षा ध्रुवद्रुमाः ॥६४॥
रुचकाः कुटजाश्चैवेत्येवमाद्याः सहस्रशः।
नानाऋतुसमाविष्टा दिव्याः शृङ्गारहेतवः॥ ६५॥
नानावृक्षमहोद्याने वर्तन्ते वरशाखिनः।
कांस्यसालस्यान्तराले सप्तयोजनदूरतः ॥ ६६ ॥
चतुरश्रस्ताम्रसालः सिन्धुयोजनमुन्नतः।
अनयोरन्तरक्षोणी प्रोक्ता कल्पकवाटिका ॥ ६७॥
कर्पूरमज्जभिश्चारुरत्नबीजसमन्वितैः।
काञ्चनत्वक्सुरुचिरैः फलैस्तैः फलितद्रुमाः ॥६८
चीनाम्बराणि दिव्यानि प्रवालान्यपि शाखिषु।
अमृतं स्यान्मधुरसः पुष्पाणि च विभूषणम् ॥६९
ईदृशा बहवस्तत्र कल्पवृक्षाः प्रकीर्तिताः ॥ ७० ॥
एषा कक्ष्या द्वितीया स्यात्कल्पवाटीति नामतः।

ताम्रसालस्यान्तराले सीससालः प्रकीर्तितः ॥७१
अनयोरुभयोस्तिर्यग्देशः स्यात्सप्तयोजनः ।
तत्र सन्तानवाटी स्यात्कल्पवाटीसमाकृतिः ॥७२
सीससालस्यान्तराले सप्तयोजनदूरतः ।
आरकूटमयः सालः पूर्वसालसमाकृतिः ॥ ७३ ॥
तयोर्मध्यमही प्रोक्ता हरिचन्दनवाटिका ।
कल्पवाटीसमाकारा फलपुष्पसमाकुला ॥ ७४ ॥
एषु सर्वेषु सालेषु पूर्ववद्द्वारकल्पनम् ।
पूर्ववद्गोपुराणां च मकुटानां च कल्पनम् ॥ ७५ ॥
गोपुरद्वारकॢप्तिश्च द्वारेद्वारे समा मता ।
आरकूटस्यान्तराले सप्तयोजनदूरतः ॥ ७६ ॥
पञ्चलोहमयः सालः पूर्वसालसमाकृतिः ।
तयोर्मध्यमही प्रोक्ता मन्दारद्रुमवाटिका ॥ ७७ ॥
पञ्चलोहस्यान्तराले सप्तयोजनदूरतः ।
रौप्यसालस्तु संप्रोक्तः पूर्वोक्तैर्लक्षणैर्वृतः ॥ ७८ ॥
तयोर्मध्यमही प्रोक्ता पारिजातद्रुवाटिका ।
दिव्यामोदसुसंपूर्णा फलपुष्पभरोज्ज्वला ॥ ७९ ॥

रूप्यसालस्यान्तराले सप्तयोजनदूरतः ।
हेमसालः प्रकथितः पूर्ववद्द्वारशोभितः ॥ ८० ॥
तयोर्मध्यमही प्रोक्ता कदम्बतरुवाटिका ॥ ८१ ॥
तत्र दिव्या नीपवृक्षा योजनद्वयमुन्नताः ।
सदैव मदिरास्यन्दमेदुरप्रसवोज्ज्वलाः ॥ ८२ ॥
एभ्यः कादम्बरी नाम योगिनी भोगदायिनी ।
विशिष्टा मदिरोत्पन्ना मन्त्रिण्याः सततं प्रिया ८३
ते नीपवृक्षाः सुच्छाया बकुलाः पल्लवाकुलाः ।
आमोदलोलभृङ्गालिझङ्कारैः पूरितोदराः ॥ ८४ ॥
तत्रैव मन्त्रिनाथाया मन्दिरं सुमनोहरम् ॥ ८५ ॥
कदम्बवनवाट्यास्तु विदिक्षु ज्वलनादितः ।
चत्वारिमन्दिराण्युच्चैः कल्पितान्यादिशिल्पिना ८६
एकैकस्य तु गेहस्य विस्तारः पञ्चयोजनम् ।
पञ्चयोजनविस्तारः सप्तावरणतास्थितिः ॥ ८७ ॥
एवमन्यद्विदिक्षु स्यात्सर्वत्र प्रियकद्रुमाः ।
निवासनगरी सेयं श्यामायाः परिकीर्तिता ॥ ८८
सेवार्थनगरी त्वन्या महापद्माटवीस्थले ।

यद्यत्रैव गृहं तस्या बहुयोजनदूरतः ॥ ८९ ॥
श्रीदेव्या नित्यसेवा तु मन्त्रिण्या न घटिष्यते ।
अतश्चिन्तामणिगृहोपान्ते तु भवनं कृतम् ॥९०॥
तस्याः श्रीमन्त्रिनाथायाः सुरत्वष्ट्रा मयेन च ।
श्रीपुरे मुद्रिणीदेव्या मन्दिरस्य गुणान्बहून् ।
वर्णयिष्यति को नाम यदि जिह्वासहस्रवान् ॥९१
कादम्बरीसुधाताम्रनयनाः कलवीणया ।
गायन्त्यस्तत्र खेलन्ति मान्या मातङ्गकन्यकाः९२

अगस्त्यः ।

मतङ्गो नाम कः प्रोक्तस्तस्य कन्याः कथं च ताः ।
सेवन्ते मन्त्रिनाथां तां सदा मधुमदालसाः॥९३॥

श्रीहयग्रीवः ॥

मातङ्गो नाम तपसामेकराशिस्तपोधनः ॥ ९४॥
महाप्रभावसंपन्नो जगत्सर्जनलम्पटः ।
तपश्शक्त्या तीव्रया च सर्वत्राज्ञाप्रवर्तकः ॥९५॥
तस्य पुत्रस्तु मातङ्गो मुद्रिणीं मन्त्रनायिकाम् ।
घोरैस्तपोभिरत्यर्थं पूजयामास धीरधीः ॥ ९६ ॥

मतङ्गमुनिपुत्रेण सुचिरं समुपासिता ।
मन्त्रिणी कृतसान्निध्या वृणीष्व वरमित्यशात् ॥९७
सोऽपि सर्वमुनिश्रेष्ठो मातङ्गस्तपसां निधिः ।
उवाच तां पुरो दत्तसान्निध्यां श्यामलाम्बिकां ९८

मातङ्गमुनिः ॥

देवि त्वत्स्मृतिमात्रेण मम सर्वाश्च सिद्धयः ।
जाता एवाणिमाद्यास्ताः सर्वा अन्या विभूतयः ॥
प्रापणीयं न मे किंचिदस्त्यम्ब भुवनत्रये ।
सर्वतः प्राप्तकामस्य भवत्याश्चरणस्मृतेः ॥ १०० ॥
तथापि तव सान्निध्यमिदं नो निष्फलं भवेत् ।
एकं वरं प्रार्थयेहं तं वरं पूरयाम्बिके ॥ १०१ ॥
पूर्वं हिमवता सार्धं सौहार्दपरिहासवान् ।
क्रीडामतनवं वाक्यैस्तत्र तेन प्रगल्भितम् ॥१०२॥
अहं गौरीगुरुरिति श्लाघामात्मनि तेनिवान् ।
तद्भाग्यं मम नैवाभूद्यतस्तत्राधिको गुणः ॥१०३
उभयोर्गुणसाम्ये तु मित्रयोरधिके गुणे ।
एकस्य कारणाज्जाते तत्रान्यस्य स्पृहा भवेत् १०४

गौरीगुरुत्वश्लाघार्थं प्राप्तकामोऽप्यहं तपः ।
कृतवान्मन्त्रिणीनाथे तत्त्वं मत्तनया भव ।
यतो मन्नामविख्याता भविष्यसि न संशयः१०५
इत्युक्तं वचनं श्रुत्वा मातङ्गस्य महामुनेः ।
तथास्त्विति तिरोधत्त स च प्रीतोऽभवन्मुनिः ॥
मातङ्गस्य महर्षेस्तु पत्न्याः स्वप्ने सदामदा ।
तापिच्छमञ्जरीमेकां ददौ कर्णावतंसतः ॥१०७॥
तत्स्वप्नस्य प्रभावेन मातङ्गस्य सधर्मिणी ।
नाम्ना सिद्धिमती गर्भे लघुश्यामामधारयत् १०८
तत एव समुत्पन्ना मातङ्गी तेन कीर्तिता ।
लघुश्यामेति सा प्रोक्ता श्यामेयं मूलकन्दभूः॥
पितुः सृष्टिमहाविद्यामधीत्य कलशोद्भव ।
तत्प्रभावाल्लघुश्यामा ससर्ज स्वसमा बह्वीः ।
मातङ्गकन्यका हृद्याः कोटीनामपि कोटिशः११०
लघुश्यामा महाश्यामा मातङ्गीवृन्दसंयुता ।
अङ्गशक्तित्वमापन्ना सेवते प्रियकप्रियाम् ॥ १११
इति मातङ्गकन्यानामुत्पत्तिः कुम्भसंभव ।

कथिताः सप्तकक्ष्याश्च साला लोहादिनिर्मिताः ॥

अगस्त्यः ॥

लोहादिसप्तसालानां रक्षका ये वसन्ति वै ।
तन्नाम कीर्तय प्राज्ञ येन वै संशयच्छिदा ॥११३

हयग्रीवः ॥

नानावृक्षमहोद्याने वर्तते कुम्भसंभव ।
महाकालः सर्वलोकभक्षकः श्यामविग्रहः ॥११४
श्यामकञ्चुकधारी च मदारुणविलोचनः ।
ब्रह्माण्डचषके पूर्णं पिबन्विश्वरसासवम् ॥११५॥
महाकाली घनश्यामामनङ्गार्द्रामपाङ्गयन् ।
सिंहासने समासीना कल्याणे कलनात्मके ११६
ललिताध्यानसंपन्नो ललितापूजनोत्सुकः ।
वितन्वँल्ललिताभक्तेष्वायुषो दीर्घदीर्घताम् ।
कालमृत्युप्रमुख्यैश्च किङ्करैरभिसेवितः ॥ ११७ ॥
महाकालीमहाकालौ ललिताज्ञाप्रवर्तकौ ।
विश्वं कलयतः कृत्स्नं प्रथमोद्यानवासिनौ ॥११८
कालचक्रं महत्तत्र तस्यैवासनतां गतम् ।

चतुरावरणोपेतं मध्येबिन्दुमनोहरम् ॥ ११९ ॥
त्रिकोणं पञ्चकोणं च षोडशच्छदपङ्कजम् ।
अष्टारपङ्कजं चैव महाकालस्तु मध्यगः ॥ १२० ॥
त्रिकोणे तु महाकल्पा महासन्ध्या महानिशा ।
एतास्तिस्रो महादेव्यो महाकालस्य शक्तयः १२१
पञ्चकोणे कृता त्रेता द्वापरा च कलिस्तथा ।
मन्वन्तरा च विज्ञेया महाकालस्य शक्तयः १२२
तत्रैव पञ्चकोणाग्रे प्रत्यूषा च पितृप्रसूः ।
प्राह्णापराह्णा मध्याह्ना पञ्च कालस्य शक्तयः १२३
अथ षोडशपत्राब्जे स्थिताः शक्तीर्मुने शृणु १२४
दिना निशा तमिस्रा च ज्योत्स्नी चैव तु पक्षिणी ।
प्रदोषा च निशीथा च प्रहरा पूर्णिमापि च १२५
राका चानुमती चैव तथैवामावसी पुनः ।
सिनीवाली कुहूर्भद्रा उपरागा च षोडशी ॥१२६
एताः षोडश पत्रस्थाः शक्तयः षोडश स्मृताः ।
कला काष्ठा निमेषा च क्षणा चैव लवा त्रुटिः ॥
मुहूर्ता कुतपा होरा शुक्लपक्षा तथैव च ।

कृष्णपक्षायना चैव विषुवा च त्रयोदशी ॥१२८॥
संवत्सरा च परिवत्सरेदावत्सरापि च ।
एताः षोडशपत्राग्रवासिन्यः शक्तयः स्मृताः १२९
इद्वत्सरा ततश्चेन्दुवत्सरा वत्सरापि च ।
तिथिर्वारा च नक्षत्रा योगा च करणापि च ।
एताश्च शक्तयो नागपत्राम्भोरुहसंस्थिताः ॥१३०
कलिः कल्या च कलना काली चेति चतुष्टयम् ।
द्वारपालकतां प्राप्तं कालचक्रस्य भास्वतः ॥ १३१
एता महाकालदेव्यो मदप्रहसिताननाः ॥१३२॥
मदिरापूर्णचषकं पिशितं चारुणप्रभम् ।
दधानाः श्यामलाकाराः सर्वाः कालस्य योषितः॥
ललितापूजनध्यानजपस्तोत्रपरायणाः ।
निषेवन्ते महाकालं कालचक्रासनस्थितम् ॥ १३४
अथ कल्पकवाट्यास्तु रक्षकः कुम्भसंभव ।
वसन्तर्तुर्महातेजा ललिताप्रियकारकः ॥ १३५ ॥
पुष्पसिंहासनासीनः पुष्पमाध्वीमदारुणः ।
पुष्पायुधः पुष्पभूषः पुष्पच्छत्रेण भूषितः ॥१३६

मधुश्रीर्माधवश्रीश्च द्वे देव्यौ तस्य दीव्यतः ।
प्रसूनमदिरामत्ते प्रसूनशरलालसे ॥ १३७ ॥
सन्तानवाटिकापालो ग्रीष्मर्तुस्तीव्रलोचनः ।
ललिताकिंकरो नित्यं तस्या आज्ञाप्रवर्तकः १३८
शुक्रश्रीश्च शुचिश्रीश्च तस्य भार्ये उभे स्मृते ।
हरिचन्दनवाटीषु मुने वर्षर्तुना स्थिता ॥ १३९ ॥
स वर्षर्तुर्महातेजा विद्युत्पिङ्गललोचनः ।
वज्राट्टहासमुखरो मत्तजीमूतवाहनः ॥ १४० ॥
जीमूतकवचच्छन्नो मणिकार्मुकधारकः ।
ललितापूजनध्यानजपस्तोत्रपरायणः ॥ १४१ ॥
वर्तते विन्ध्यमथनत्रैलोक्याह्लादकारकः ।
नभश्रीश्च नभस्यश्रीः सरसा सस्यमालिनी ॥१४२
अम्बा दुला नितत्नीचाभ्रयन्ती मेघयन्तिका ।
वर्षयन्ती चुपुणिका वारिधारा च शक्तयः ॥१४३
वर्षर्तोर्द्वादश प्रोक्ता मदारुणविलोचनाः ।
ताभिः समं स वर्षर्तुः शक्तिभिः परमेश्वरीम् १४४
सदैव पूजयन्नास्ते निजोत्थैः पुष्पमण्डलैः ।

ललिताभक्तदेशांस्तु भूषयन् सस्य संपदा ॥ १४५
तद्वैरिणां तु वसुधामनावृष्ट्या निपीडयन् ।
वर्तते सततं देवीकिंकरो जलदागमः ॥ १४६ ॥
मन्दारवाटिकायां तु सदा शरदृतुर्वसन् ।
तां कक्ष्यां रक्षति श्रीमाँलोकचित्तप्रसादनः १४७
इषश्रीश्च तथोर्जश्रीस्तस्यर्तोः प्राणनायिके ।
ताभ्यां सह ऋतुः श्रीमान्निजोत्थैः पुष्पमण्डलैः ॥
अभ्यर्चयति सम्राज्ञीं श्रीकामेश्वरयोषितम् ।
हेमन्तर्तुर्महातेजा हिमशीतलविग्रहः ॥ १४९ ॥
सदा प्रसन्नवदनो ललिताप्रियकिंकरः ।
निजोत्थैः पुष्पसम्भारैरर्चयन् परमेश्वरीम् १५०
पारिजातस्य वाटीं तु रक्षतील्वलमर्दन ।
सहश्रीश्च सहस्यश्रीस्तस्य द्वे योषितौ शुभे॥१५१॥
कदम्बवनवाट्यास्तु रक्षकः शिशिराकृतिः ।
शिशिरर्तुर्मुनिश्रेष्ठ वर्तते कुम्भसंभवः ॥ १५२ ॥
सा कक्ष्या तेन सर्वत्र शिशिरीकृतभूतला ।
तद्वासिनी ततः श्यामा देवता शीतलाकृतिः१५३

तपश्रीश्च तपस्यश्रीस्तस्य द्वे योषिदुत्तमे ।
ताभ्यां सहार्चयत्यम्बां ललितां विश्वपावनीम् ॥

अगस्त्यः ॥

गन्धर्ववदनश्रीमन्नानावृक्षादिसप्तके ।
प्रथमोद्यानपालस्तु महाकालो मया श्रुतः ॥१५५
चतुरावरणं चक्रं त्वया तस्य प्रकीर्तितम् ।
षण्णामृतूनां सर्वेषां कल्पकाद्यासु वाटिषु ।
पालकत्वं श्रुतं त्वत्तश्चक्रदेव्यस्तु न श्रुताः १५६
अत एव वसन्तादिचक्रावरणदेवताः ।
क्रमेण ब्रूहि भगवन्सर्वज्ञोऽसि यतो महान् १५७

हयग्रीवः ॥

आकर्णय मुनिश्रेष्ठ तत्तच्चक्रस्थदेवताः ॥ १५८ ॥
कालचक्रं पुरा प्रोक्तं वासन्तं चक्रमुच्यते ।
त्रिकोणपञ्चकोणौ च नागच्छदसरोरुहम् ॥१५९
षोडशारं सरोजं च दशारद्वितयं पुनः ।
चतुरस्रं च विज्ञेयं सप्तावरणसंयुतम् ॥ १६० ॥
तन्मध्ये बिन्दुचक्रस्थो वसन्तर्तुर्महाद्युतिः ।

तदङ्गद्वयसंलग्ने मधुश्रीमाधवश्रियौ ॥ १६१ ॥
उभाभ्यां निजहस्ताभ्यामुभयोः स्तनमेककम् ।
निपीडयन्नन्यहस्तयुगलेन ससौरभम् ॥ १६२ ॥
स्वपुष्पमदिरापूर्णचषकं पिशितं महत् ।
एवमेव च सर्वर्तुध्यानं विन्ध्यविमर्दन ॥ १६३ ॥
वर्षर्तोस्तु पुनर्ध्याने शक्तिद्वितयमादिमम् ।
अङ्कस्थितं तु विज्ञेयं शक्तयोऽन्याः समीपगाः ॥
अथ वासन्तचक्रस्थदेवीः शृणु वदाम्यहम् ।
मधुशुक्लप्रथमिका मधुशुक्लद्वितीयका ॥ १६५ ॥
मधुशुक्लतृतीया च मधुशुक्लचतुर्थिका ।
मधुशुक्ला पञ्चमी च मधुशुक्ला च षष्ठिका १६६
मधुशुक्ला सप्तमी च मधुशुक्लाष्टमी पुनः ।
नवमी मधुशुक्ला च दशमी मधुशुक्लतः ॥ १६७ ॥
मधुशुक्लैकादशी तु द्वादशी मधुशुक्लतः ।
मधुशुक्लत्रयोदश्या मधुशुक्लचतुर्दशी ॥ १६८ ॥
मधुशुक्ला पूर्णिमा च प्रथमा मधुकृष्णतः ।
मधुकृष्णद्वितीया च मधुकृष्णतृतीयका ॥१६९॥

मधुकृष्णचतुर्थी च मधुकृष्णा तु पञ्चमी।
षष्ठी तु मधुकृष्णा स्यात्सप्तमी मधुकृष्णतः १७०
मधुकृष्णाष्टमी च स्यान्नवमी मधुकृष्णतः।
दशमी मधुकृष्णा तु विन्ध्यदर्पनिषूदन ॥१७१॥
मधुकृष्णैकादशी तु द्वादशी मधुकृष्णतः।
मधुकृष्णत्रयोदश्या मधुकृष्णचतुर्दशी।
मध्वमा चेति विज्ञेयास्त्रिंशदेतास्तु शक्तयः १७२
एवमेव प्रकारेण माधवाख्योपरि स्थिताः।
शुक्लप्रतिपदाद्यास्तु शक्तयस्त्रिंशदन्यकाः ॥१७३॥
मिलित्वा षष्टिसंख्यास्तु ख्याता वासन्तशक्तयः।
स्वैस्वैर्मन्त्रैस्तत्र चक्रे पूजनीया विधानतः ॥१७४॥
वसन्तचक्रराजस्य सप्तावरणभूमयः।
षष्टिः स्याद्देवताषष्टिस्तासु भूमिषु. संस्थिताः।
प्रविभज्यार्चनीयास्स्युस्तत्तन्मन्त्रेण साधकैः १७५
यथा वासन्तचक्रेषु तथैवान्येषु चर्तुषु।
देवतास्तु परं भिन्नाः शुक्रशुच्यादिभेदतः १७६
शुक्रशुक्लप्रथमिका शुक्रशुक्लद्वितीयका।

एवमेव प्रकारेण शुक्लकृष्णादि कीर्तयेत् ॥ १७७॥
एवमेव प्रकारेण शुचिशुक्लादि भेदतः ।
शक्तयः षष्टिसंख्याता ग्रीष्मचक्रे महोदयाः १७८
एवं वर्षर्त्वादिचक्रे भेदान्नभनभस्यजान् ।
षष्टिः षष्टिस्तु शक्तीनां चक्रे चक्रे प्रतिष्ठिता १७९
ग्रन्थविस्तरभीत्या तु तत्संख्यानाद्विरम्यते ।
आर्तव्यः शक्तयस्त्वेता ललिताभक्तसौख्यदाः ॥
ललितापूजनध्यानजपस्तोत्रपरायणाः ।
कल्पादिवाटिकाचक्रे सञ्चरन्त्यो मदालसाः १८१
स्वस्वपुष्पोत्थमधुभिस्तर्पयन्त्यो महेश्वरीम् ।
मिलित्वा चैव संख्याताः षष्ट्युत्तरशतत्रयम् १८२
एवं सप्तसु सालेषु पालकाश्चक्रदेवताः ।
नामकीर्तनपूर्वं तु प्रोक्तास्तुभ्यं प्रपृच्छते ॥१८३॥
अन्येषामपि सालानामुपादानस्वरूपकम् ।
विस्तारं तत्र शक्तीश्च कथयाम्यवधारय ॥१८४॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्य-संवादे ललितोपाख्याने अष्टाविंशोऽध्यायः ॥ २८ ॥

# एकोनत्रिंशोऽध्यायः ॥ २९ ॥

॥ रत्नसालक्ष्लक्षणादि ॥

हयग्रीवः ॥

कथितं लोहसालानां लक्षणं शिल्पिभिः कृतम् ।
अथ रत्नमयाः सालाः प्रकीर्त्यन्तेऽवधारय ॥ १॥
सुवर्णमयसालस्य पुष्परागमयस्य च ।
सप्तयोजनमात्रं स्यान्मध्येऽन्तरमुदाहृतम् ॥ २ ॥
तत्र सिद्धाः सिद्धनार्यः खेलन्ति मदलालसाः ।
रसै रसायनैश्चैव खड्गैः पादाञ्जनैरपि ॥ ३ ॥
ललितायां भक्तियुक्तांस्तर्पयन्त्यो महाजनान् ।
वसन्ति विविधांस्तत्र पिबन्त्यो मदिरारसान् ४
पुष्परागादिसालानां पूर्ववद्द्वारक्लृप्तयः ।
पुष्परागादिसालेषु कवाटार्गलगोपुरम् ॥ ५ ॥
पुष्परागादिजं ज्ञेयमुद्यदादित्यभास्वरम् ।
हेमप्राकारचक्रस्य पुष्परागमयस्य च ॥ ६ ॥
अन्तरे या स्थली सापि पुष्परागमयी स्मृता ।
वक्ष्यमाणमहासालकक्ष्यासु निखिलास्वपि ॥७॥

तद्वर्णाः पक्षिणस्तत्र तद्वर्णानि सरांसि च ।
तद्वर्णसलिला नद्यस्तद्वर्णाश्च मणिद्रुमाः ॥ ८ ॥
सिद्धजातिषु ये देवीमुपास्य विविधैः क्रमैः ।
त्यक्तवन्तो वपुः पूर्वं ते सिद्धास्तत्र साङ्गनाः ॥९॥
ललितामन्त्रजप्तारो ललिताक्रमतत्पराः ।
ते सर्वे ललितादेव्या नामकीर्तनकारिणः ॥ १० ॥
पुष्परागमहासालान्तरे मारुतयोजने ।
पद्मरागमयः सालश्चतुरस्रः समन्ततः ॥ ११ ॥
स्थली च पद्मरागाढ्या गोपुराद्यं च तन्मयम् ।
तत्र चारणलोकस्था पूर्वदेहविनाशतः ॥ १२ ॥
सिद्धिं प्राप्ता महाराज्ञीचरणाम्भोजसेवकाः ।
चारणानां स्त्रियश्चापि चार्वङ्ग्यो मदलालसाः १३
गायन्त्यो ललितादेव्या गीतिबन्धं मुहुर्मुहुः ।
तत्रैव कल्पवृक्षाणामधस्ताद्वेदिकास्थिताः ॥ १४ ॥
भर्तृभिः सह चारिण्यः पिबन्ति मधुरं मधु ।
पद्मरागमहासालान्तरे मारुतयोजने ॥ १५ ॥
गोमेधिकस्य सालस्तु पूर्वसालसमाकृतिः ।

तदन्तरे योगिनीनां भैरवाणां च कोटयः ॥ १६॥
कालसंकर्षणीमेनां सेवन्ते तत्र मूर्तयः ।
गोमेधिकमहासालान्तरे मारुतयोजने ।
अतितुङ्गो हीरसालस्तयोर्मध्यं च हीरभूः ॥ १७॥
तत्र देवीं समभ्यर्च्य पूर्वजन्मनि कुम्भज ।
वसन्त्यप्सरसां वृन्दैः साकं गन्धर्वपुंगवाः ।
महाराज्ञीगुणगणान्गायन्त्यो वल्लकीस्वनैः ॥ १८॥
कामभोगैकरसिकाः कामसंनिभविग्रहाः ।
सुकुमारप्रकृतयः श्रीदेवीभक्तिशालिनः ॥ १९ ॥
उर्वशी मेनका चैव रम्भा चालम्बुसा तथा ।
मञ्जुघोषा सुकेशी च पूर्वचित्तिर्घृताचिका ॥२०॥
कृतस्थला च विश्वाची पुञ्जकस्थलया सह ।
तिलोत्तमेति देवानां वेश्या एतादृशोऽपराः २१॥
गन्धर्वैः सह नव्यानि कल्पवृक्षमधूनि च ।
पिबन्त्यो ललितादेवीं ध्यायन्त्यश्च मुहुर्मुहुः॥२२॥
स्वसौभाग्यविवृद्ध्यर्थं गणयन्त्यश्च तन्मनुम् ।
चतुर्दशसु चोत्पन्नाः स्थानेष्वप्सरसोऽखिलाः २३

तत्रैव देवीमर्चन्त्यो वसन्ति मुदिताशया: ॥२४॥

अगस्त्यः ॥

चतुर्दशापि जन्मानि तासामप्सरसां विभो ।
कीर्तय त्वं महाप्राज्ञ सर्वविद्याकलानिधे ॥ २५ ॥

हयग्रीवः ॥

ब्रह्मणो हृदयं कामो मृत्युरुर्वी च मारुतः ।
तपनस्य कराश्चन्द्रकरा वेदाश्च पावकः ॥ २६ ॥
सौदामिनी च पीयूषं दक्षकन्ये जलं तथा ।
जन्मनः कारणान्येतान्यामनन्ति मनीषिणः २७
गीर्वाणपण्यनारीणां स्फुरत्सौभाग्यसंपदाम् ।
एताः समस्ता गन्धर्वैः साकमर्चन्ति चक्रिणीम् ॥
किन्नराः सह नारीभिस्तथा किम्पुरुषा मुने ।
स्त्रीभिः सह मदोन्मत्ता हीरकस्थलमाश्रिता २९
महाराज्ञीमन्त्रजपैर्विधूताशेषकल्मषाः ।
नृत्यन्त्यश्चैव गायन्त्यो वर्तन्ते कुम्भसंभव ॥३०॥
तत्रैव हीरकक्षोण्यां वज्रा नाम नदी मुने ।
वज्राकारैर्निबिडितैर्भासमाना तटद्रुमैः ॥ ३१ ॥

वज्ररत्नैः सिकतिला वज्रद्रवमयोदका ।
सदा वहति सा सिन्धुः परितस्तत्र पावनी ३२
ललितापरमेशान्या भक्ता ये मानवोत्तमाः ।
ते तस्या उदकं पीत्वा वज्ररूपकलेवराः ॥
दीर्घायुषश्च नीरोगा भवन्ति कलशोद्भव ॥ ३३॥
भण्डासुरेण गलिते मुक्ते वज्रे शतक्रतुः ।
तस्यास्तीरे तपस्तेपे वज्रेशीं प्रति भक्तिमान् ३४
तज्जलादुदिता देवी वज्रं दत्वा बलद्विषे ।
पुनरन्तर्दधे सोऽपि कृतार्थः स्वर्गमेयिवान् ॥३५॥
अथ वज्राख्यसालस्यान्तरे मारुतयोजने ।
वैडूर्यसाल उत्तुङ्गः पूर्ववद्गोपुरान्वितः ॥ ३६ ॥
स्थली च तत्र वैडूर्यनिर्मिता भास्वराकृतिः ॥३७॥
पातालवासिनो येये श्रीदेव्यर्चनसाधकाः ।
ते सिद्धमूर्तयस्तत्र वसन्ति मदमेदुराः ॥ ३८ ॥
शेषकार्कोटकमहापद्मवासुकिशङ्खकाः ।
तक्षकः शङ्खचूडश्च महादन्तो महाफणः ।
इत्येवमादयस्तत्र नागा नागस्त्रियोऽपि च ॥३९॥

वलीन्द्रप्रमुखाणां च दैत्यानां धर्मवर्तिनाम् ।
गणस्तत्र सदा नागैः सार्धं वसति साङ्गनः ४०
ललितामन्त्रजप्तारो ललिताशास्त्रदीक्षिताः ।
ललितापूजका नित्यं वसन्त्यसुरभोगिनः ॥ ४१ ॥
तत्र वैडूर्यकक्ष्यायां नद्यः शिशिरपाथसः ।
सरांसि मत्तहंसानि सारसालङ्कृतानि च ।
भवनानि च दिव्यानि वैडूर्यमणिवन्ति च ॥४२॥
तेषु क्रीडन्ति ते नागा असुराश्च सहाङ्गनाः ।
वैडूर्याख्यमहासालान्तरे मारुतयोजने ॥ ४३ ॥
इन्द्रनीलमयः सालश्चक्रवाक इवापरः ।
तन्मध्यकक्ष्याभूमिश्च नीलरत्नमयी मुने ॥ ४४ ॥
तत्र नद्यश्च मधुराः सरांसि मधुराणि च ।
नानाविधानि वस्तूनि भोग्यानि सरसान्यपि ४५
ये भूलोकगता मर्त्या ललितामन्त्रसाधकाः ।
ते देहान्ते शक्रनीलकक्ष्यां प्राप्य वसन्ति हि ४६
तत्र दिव्यानि वस्तूनि भुञ्जाना वनितासखाः ।
पिबन्तो मधुरं मद्यं नृत्यन्तो भक्तिनिर्भराः ४७

सरस्तटेषु सिन्धूनां कूलेषु कलशोद्भव ।
लतागृहेषु रम्येषु मण्डपेषु महर्धिषु ॥ ४८ ॥
सदा जपन्तः श्रीदेवीं वदन्तश्चापि तद्गुणान् ।
निवसन्ति महाभागा नारीभिः परिवेष्टिताः ४९
कर्मक्षये पुनर्यान्ति भूलोके मानुषीं तनुम् ।
पूर्ववासनया युक्ताः पुनरर्चन्ति चक्रिणीम् ५०
पुनर्यान्ति श्रीनगरे शक्रनीलमहास्थलीम् ।
तत्स्थलस्यैव संपर्काद्रागद्वेषसमुद्भवैः ।
नीलैर्भावैः सदा युक्ता वर्तन्ते मनुजा मुने ॥५१॥
ये पुनर्ज्ञानिनो मर्त्या निर्द्वन्द्वा नियतेन्द्रियाः ।
ते मुने चिन्मया भूत्वा प्रविशन्ति महेश्वरीम् ५२
इन्द्रनीलाख्यसालस्यान्तरे मारुतयोजने ।
मुक्तारत्नमयः सालः पूर्ववद्गोपुरान्वितः ॥ ५३ ॥
अत्यन्तभासुरस्वच्छस्तयोर्मध्यस्थली मुने ।
सर्वापि मुक्ताखचिता शिशिरातिमनोहरा ॥५४॥
ताम्रपर्णी महापर्णी सदामुक्ता सदोदका ।
एवमाद्या महानद्यो वहन्त्यत्र महास्थले ॥ ५५ ॥

तासां तीरेषु सर्वेऽपि देवलोकनिवासिनः ।
वसन्ति पूर्वजनुषि श्रीदेवीमन्त्रसाधकाः ॥ ५६ ॥
पूर्वाद्यष्टसु भागेषु लोकाः शक्रादिगोचराः ।
मुक्तासालस्य परितः संयुज्य द्वारदेशकान् ॥५७॥
मुक्तासालस्य नीलस्य द्वारयोर्मध्यदेशतः ।
पूर्वभागे शक्रलोकस्तत्कोणे वह्निलोकभूः ॥ ५८ ॥
याम्यभागे यमपुरं तत्र दण्डधरः प्रभुः ॥
सदा श्रीदेवतामन्त्रजापी तीव्रस्वभाववान् ॥५९॥
आज्ञाधरो यमभटैश्चित्रगुप्तपुरोगमैः ।
सार्धं निपीडयत्येव श्रीदेवीसमयद्रुहः ॥ ६० ॥
गुरुशप्तान्दुराचाराँल्ललिताद्वेषकारिणः ।
कूटभक्तिकरान्मूर्खांस्तब्धानत्यन्तदर्पितान् ॥६१॥
मन्त्रचोरान्कुमन्त्रांश्च कुविद्याधर्ममाश्रितान् ।
नास्तिकान्पापशीलांश्च वृथैव प्राणिहिंसकान् ६२
स्त्रीद्विष्टाँल्लोकविद्विष्टानन्यानपि च पापिनः ।
कालसूत्रे रौरवे च कुम्भीपाके च कुम्भज ॥६३॥
असिपत्रवने घोरे कृमिभक्षे प्रतापने ।

ज्वालाभक्षे सूचिवेधे तथैवाङ्गारतापने ॥ ६४ ॥
एवमादिषु कष्टेषु नरकेषु घटोद्भव ।
पातयत्याज्ञया तस्याः श्रीदेव्याः सुमहौजसः ६५
तस्यैव पश्चिमे भागे निर्ऋतिः खड्गधारकः ।
राक्षसं लोकमाश्रित्य वर्तते ललितार्चकः ॥ ६६ ॥
तस्य चोत्तरभागे तु द्वारयोरन्तरस्थले ।
वारुणं लोकमाश्रित्य वरुणो वर्तते सदा ॥ ६७ ॥
वारुण्यास्वादनोन्मत्तः शुभ्राङ्गो झषवाहनः ।
सदा श्रीदेवतामन्त्रजापी श्रीक्रमसाधकः ॥ ६८ ॥
श्रीदेवतादर्शनस्य द्वेषिणः पाशबन्धनैः ।
बध्वानयन्नधोमार्गं भक्तानां बन्धमोचकः ॥६९॥
तस्य चोत्तरकोणे तु वायुलोको महाद्युतिः ।
तत्र वायुशरीराश्च सदानन्दमहोदयाः ॥ ७० ॥
सिद्धा दिव्यर्षयश्चैव पवनाभ्यासिनोऽपरे ।
गोरक्षप्रमुखाश्चान्ये योगिनो योगतत्पराः ॥७१॥
एतैः सह महासत्वस्तत्र श्रीमारुतेश्वरः ।
ध्वजहस्तो मृगवरे वाहने महति स्थितः ॥ ७२ ॥

ललिताजपनिध्यानक्रमपूजनतत्परः ।
सप्तधा भिन्नमूर्तिश्च वर्तते कुम्भसंभव ॥ ७३ ॥
इडा च पिङ्गला चैव सुषुम्ना तस्य शक्तयः ।
तिस्रो मारुतनाथस्य सदा मधुमदालसाः ॥७४॥
आनन्दपूरिताङ्गीभिरन्याभिः शक्तिभिर्वृतः ।
स मारुतेश्वरः श्रीमान्सदा जपति चक्रिणीम् ७५
येन सत्वेन कल्पान्ते त्रैलोक्यं सचराचरम् ।
परागमयतां नीत्वा विनाशयति तत्क्षणात् ॥७६॥
तस्य सत्वस्य वृद्ध्यर्थं तामेव ललितेश्वरीम् ।
पूजयन्भावयन्नास्ते सर्वाभरणभूषिताम् ॥ ७७ ॥
तल्लोकपूर्वभागस्थे यक्षलोके महाद्युतिः ।
यक्षेन्द्रो वसति श्रीमांस्तद्वारद्वन्द्वमध्यगः ॥७८॥
निधिभिश्च नवाकारैर्ऋद्धिवृद्ध्यादिशक्तिभिः ।
सहितो ललिताभक्तान्पूरयन्धनसंपदा ॥ ७९ ॥
यक्षीभिश्च मनोज्ञाभिरनुकूलप्रवृत्तिभिः ।
विविधैर्मधुभेदैश्च संपूजयति चक्रिणीम् ॥ ८० ॥
माणिभद्रः पूर्णभद्रो मणिमान्मणिकन्धरः ।

इत्येवमादयो यक्षसेनान्यस्तत्र सन्ति वै ॥ ८१ ॥
तल्लोकपूर्वभागे तु रुद्रलोको महोदयः ।
अनर्घरत्नखचितस्तत्र रुद्रोऽधिदेवता ॥ ८२ ॥
सदैव मन्युना दीप्तः सदा बद्धमहेषुधिः ।
अधिज्यं च धनुर्बिभ्रज्ज्वलत्पिङ्गललोचनः ॥८३॥
जटामुकुटशोभाढ्यः सर्वाभरणभूषितः ।
स्वसमानैर्महासत्वैर्लोकनिर्दाहदक्षिणैः ॥ ८४ ॥
अधिज्यकार्मुकैर्दक्षैः षोडशावरणस्थितैः ।
आवृतः सततं वक्त्रे जपन्श्रीदेवतामनुम् ॥ ८५ ॥
श्रीदेवीध्यानसंपन्नः श्रीदेवीपूजनोत्सुकः ।
अनेककोटिरुद्राणीगणमण्डितपार्श्वभूः ॥ ८६ ॥
ताश्च सर्वाः प्रदीप्ताङ्ग्यो नवयौवनगर्विताः ।
ललिताध्याननिरताः सदासवमदालसाः ॥ ८७ ॥
ताभिश्च साकं स श्रीमान्महारुद्रस्त्रिशूलभृत् ।
हिरण्यबाहुप्रमुखैरन्यै रुद्रैर्निषेवितः ॥ ८८ ॥
ललितादर्शनभ्रष्टानुद्धतान्गुरुधिक्कृतान् ।
शूलकोट्या विनिर्भिद्य नेत्रोत्थैः कटुपावकैः ।

दहंस्तेषां पशून्भृत्यान्प्रजाश्चैव विनाशयन् ॥८९॥
आज्ञाधरो महावीरो ललिताज्ञाप्रवर्तकः ।
रुद्रलोकेऽतिरुचिरे वर्तते कुम्भसंभव ॥ ९० ॥
महारुद्रस्य तस्यर्षे परिवाराः प्रमाथिनः ।
ये रुद्रास्तानसंख्यातान्को वा वक्तुं पटुर्भवेत्॥९१
ये रुद्रा अधिभूम्यां च सहस्राणां सहस्रशः ।
येऽन्तरिक्षे च वर्तन्ते सहस्राणां सहस्रशः ॥९२॥
दिवि येऽपि च वर्तन्ते सहस्राणां सहस्रशः ।
येषामन्नमिषुश्चैव येषां वातास्तथेषवः ॥ ९३ ॥
येषां च वर्षमिषवः प्रदीप्ताः पिङ्गलेक्षणाः ।
अर्णवे चान्तरिक्षे च वर्तमाना महौजसः ॥९४॥
जटावन्तो धनुष्मन्तो नीलग्रीवा विलोहिताः ।
ये भूतानामधिभुवो विशिखासः कपर्दिनः ९५
ये त्वन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।
ये पथां रक्षका रुद्रा ये च तीर्थनिवासिनः ९६
सहस्रसंख्या ये चान्ये सृकावन्तो निषङ्गिणः ।
ललिताज्ञाप्रणेतारो दिशो रुद्रा वितस्थिरे ॥ ९७ ॥

ते सर्वे सुमहात्मानः क्षणाद्विश्वत्रयीदहाः।
श्रीदेवीध्याननिष्णातान्श्रीदेवीमन्त्रजापिनः ॥९८॥
श्रीदेवतायां भक्तांश्च पालयन्ति कृपालवः।
पोडशावरणं चक्रं मुक्ताप्राकारमण्डले ॥ ९९ ॥
आश्रित्य रुद्रास्ते सर्वे महारुद्रं महोदयम्।
हिरण्यबाहुप्रमुखा ज्वलन्मन्युमुपासते ॥ १०० ॥
इति ते रत्नसालस्थाः कक्ष्यास्तत्र स्थिता अपि।
संक्षेपतो मया प्रोक्ता मुक्ताख्यावरणावधि १०१

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे श्रीललितोपाख्याने एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## त्रिंशोऽध्यायः ॥ ३० ॥

### ॥ श्रीरुद्रालयरुद्रविशेपनामानि ॥

अगस्त्यः ॥

षोडशावरणं चक्रं किं तद्रुद्राधिदैवतम्।
तत्र स्थिताश्च रुद्राः के केन नाम्ना प्रकीर्तिताः १
केष्वावरणबिम्बेषु किंनामानो वसन्ति ते।

यौगिकं रौढिकं नाम तेषां ब्रूहि कृपानिधे ॥ २ ॥

हयग्रीवः ॥

तत्र रुद्रालयः प्रोक्तो मुक्ताजालकनिर्मितः ।
पञ्चयोजनविस्तारस्तत्संख्यायामशोभितः ॥ ३ ॥
षोडशावरणैर्युक्तो मध्ये पीठमनोहरः ।
मध्यपीठे महारुद्रो ज्वलन्मन्युस्त्रिलोचनः ॥ ४ ॥
सज्जकार्मुकहस्तश्च सर्वदा वर्तते मुने ।
त्रिकोणे कथिता रुद्रास्त्रय एव घटोद्भव ॥ ५ ॥
हिरण्यबाहुः सेनानीर्दिशां पतिरथापरः ।
वृक्षाश्च हरिकेशाश्च तथा पशुपतिः परः ॥ ६ ॥
सस्पिञ्जरस्त्विषीमांश्च पथीनां पतिरेव च ।
एते षट्कोणगाः किंच बभ्रुशास्त्वष्टकोणके ॥ ७ ॥
विव्याध्यन्नपतिश्चैव हरिकेशोपवीतिनौ ।
पुष्टानां पतिरप्यन्यो भवो हेतिस्तथैव च ॥ ८ ॥
दशपत्रे त्वावरणे प्रथमो जगतां पतिः ।
रुद्राततताविनौ क्षेत्रपतिः सूतस्तथापरः ॥ ९ ॥
अहन्त्योऽन्यो वनपती रोहितः स्थपतिस्तथा ।

वृक्षाणां पतिरप्यन्य एते सज्जशरासनाः ॥ १० ॥
मन्त्री च वाणिजश्चैव तथा कक्षपतिः परः ।
भुवन्तिस्तु चतुर्थः स्यात्पञ्चमो वारिवस्कृतः ११
ओषधीनां पतिश्चैव षष्ठः कलशसंभव ।
उच्चैर्घोषाक्रन्दयन्तौ पत्तीनां च पतिस्तथा ॥१२॥
कृत्स्नवीतश्च धावंश्च सत्वानां पतिरेव च ।
एते द्वादशपत्रस्थाः पञ्चमावरणस्थिताः ॥ १३ ॥
सहमानश्च निव्याधिराव्याधिनिपतिस्तथा ।
ककुभश्च निषङ्गी च स्तेनानां च पतिस्तथा॥१४॥
निषङ्गी स्यादिषुधिमांस्तस्कराणां पतिस्तथा ।
वञ्चंश्च परिवञ्चंश्च स्तायूनां च पतिस्तथा ॥१५॥
निचेरुश्चेति विज्ञेयाः षष्ठावरणदेवताः ।
आद्यः परिचरोऽरण्यपतिः किंच सृकावृधः १६
जिघांसन्तो मुष्णतां च पतयः कुम्भसंभव ।
असिमन्तश्च सुप्राज्ञ तथा नक्तंचरा मुने ॥ १७ ॥
प्रकृन्तानां पतिश्चैव उष्णीषी च गिरिश्चरः ।
कुलुञ्चानां पतिश्चैवेषुमन्तः कलशोद्भव ॥ १८ ॥

धन्वाविनश्चातन्वाना: प्रतिपूर्वदधानका: ।
आयच्छन्त: षोडशैते षोडशारनिवासिन: ॥१९॥
विसृजन्तस्तथास्यन्तो विध्यन्तश्चापि सिन्धुप ।
आसीनाश्च शयानाश्च स्वपन्तो जाग्रतस्तथा २०
तिष्ठन्तश्चैव धावन्त: सभाश्चैव सभाधिपा: ।
अश्वाश्चैवाश्वपतय आव्याधिन्यस्तथैव च ॥ २१ ॥
विविध्यन्तश्चोगणाश्च तृंहन्त्यो विन्ध्यमर्दन ।
गृत्साश्चाष्टादशविधा देवता अष्टमावृतौ ॥ २२ ॥
अथ गृत्सपतिश्चैव व्राता व्रातपतिस्तथा ।
गणाश्च गणपाश्चैव विरूपा विश्वरूपका: ॥ २३ ॥
महान्त: क्षुल्लकाश्चैव रथिनश्चारथा: परे ।
रथाश्च रथपत्याख्या: सेना: सेनानयस्तथा॥२४॥
क्षत्तार: सङ्गृहीतारस्तक्षाणो रथकारका: ।
कुलालाश्चेति रुद्रास्ते नवमावृतिदेवता: ॥ २५ ॥
रुद्रास्त्वेते विश्वरूपा विंशत्पत्रेष्ववस्थिता: ।
कर्माराश्चैव पुञ्जिष्टा निषादाश्चेषुकृद्गणा: ॥ २६ ॥
धन्वकारा मृगयव: श्वनय: श्वान एव च ।

अथ श्वपतयश्चैव भवो रुद्रो घटोद्भव ॥ २७ ॥
शर्वः पशुपतिर्नीलग्रीवश्च शितिकण्ठकः ।
कपर्दी व्युप्तकेशश्च सहस्राक्षस्तथा परः ॥ २८ ॥
शतधन्वा च गिरिशः शिपिविष्टश्च कुम्भज ।
मीढुष्टम इति प्रोक्ता रुद्रा दशमसालगाः ॥ २९ ॥
अथैकादशचक्रस्था इषुमद्ध्रस्ववामनाः ।
बृहच्च वर्षीयांश्चैव वृद्धः संवृध्वना सह ॥ ३० ॥
अग्र्यः प्रथम आशुश्चाजिरोऽन्यः शीघ्र्यशीभ्यकौ ।
ऊर्म्यावस्वन्यरुद्रौ च स्रोतस्यो द्वीप्य एव च ३१
ज्येष्ठश्चैव कनिष्ठश्च पूर्वजापरजौ तथा ।
मध्यमश्चापगल्भश्च जघन्यश्च घटोद्भव ॥ ३२ ॥
चतुर्विंशतिसंख्याता एते रुद्रा महाबलाः ।
बुध्न्यश्चैव तु सोभ्यश्च प्रतिसर्यकयाम्यकौ ॥३३॥
क्षेम्योर्वर्यौ च खल्यश्च ततः श्लोक्यावसान्यकौ ।
वन्यकक्ष्यश्रवाश्चैव ततोऽन्यस्तु प्रतिश्रवः ॥३४॥
आशुषेणस्त्वाशुरथः शूरश्च तपसां निधे ।
अवभिन्दंश्च वर्मी च वरूथी बिल्मिना सह ३५

कवची श्रुतश्च श्रुतसेनो दुन्दुभ्य एवच ।
आहनन्यश्च धृष्णुश्चेत्येते षड्विंशति स्मृताः ३६
द्वादशावरणस्थाश्च महाकाया महाबलाः ।
प्रमृशश्चैव दूतश्च प्रहितश्च निषङ्गिकः ॥ ३७ ॥
अन्यस्त्विषुधिमानन्यस्तीक्ष्णेषुश्च तथायुधी ।
स्वायुधश्च सुधन्वा च स्रुत्यः पथ्यश्च कुम्भज ३८
काट्यो नीप्यस्तथा सूद्यः सरस्यो विन्ध्यमर्दन ।
तथा चान्यो नाद्यनामा वैशन्तः कूप्य एव च ३९
अवट्यवर्ष्यौ वर्ष्याश्च मेघ्यो विद्युत्य एव च ।
ईध्र्यातप्यौ तथा वात्यो रेष्मियश्च तथा परः ४०
वास्तव्यो वास्तुपश्चैव सोमश्चेति महाबलाः ।
त्रयोदशावरणगा बहिस्त्रिंशद्दलेष्वमी ॥ ४१ ॥
संस्थिताः सर्वगा रुद्राः शृण्वन्यामावृतिं मुने ।
रुद्रताम्रारुणाः शङ्गस्तथा पशुपतिर्मुने ॥ ४२ ॥
उग्रो भीमस्तथैवाग्रेवधदूरेवधावपि ।
हन्ता चैव हनीयांश्च वृक्षाश्च हरिकेशकाः ॥४३॥
तारश्शंभुर्मयोभूश्च शङ्करश्च मयस्करः ।

शिवश्शिवतरश्चैव तीर्थ्यः कूल्यस्तथैव च ॥४४॥
पार्यो वार्यः प्रतरणोत्तरणौ च घटोद्भव ।
आतार्यालाद्यनामानौ शष्प्यफेन्यौ तथा परौ ४५
एते त्रिंशन्महारुद्रा दीप्तकोपा उदायुधाः ।
चतुर्दशावरणगा महारुद्रमुपासते ॥ ४६ ॥
सिकत्यश्च प्रवाह्यश्च इरिण्यश्च प्रपथ्यकः ।
किंशिलः क्षयणश्चैव कपर्दी च पुलस्तिकः ॥४७॥
गोष्ठ्यो गृह्यस्तल्प्यगेह्यौ काट्यः स्याद्गह्वरेष्टकः ।
ह्रदय्यश्च निवेष्प्यश्च पांसव्यश्च रजस्यकः ४८
शुष्क्यो हरित्यो लोप्यश्चोलप्योर्व्यौ सूर्म्य एव च ।
पर्ण्यश्च पर्णशद्यश्च तथाऽपगुरमाणकः ॥ ४९ ॥
अभिघ्नन्नाख्खिदंश्चैव प्रख्खिदन्किरिकास्तथा ।
देवानां हृदयाश्चैव द्वात्रिंशद्रुद्रदेवताः ॥ ५० ॥
वर्तन्ते सायुधाः प्राज्ञ नित्यं पञ्चदशावृतौ ।
द्वात्रिंशत्सु दलेष्वेते जगद्वन्द्या महामुने ॥ ५१ ॥
षोडशे त्वावरणके पूर्वादिद्वारवर्तिनः ।
विक्षीणका विचिन्वत्कास्तथा निर्हतनामकाः ५२

आमीवत्काश्च दीप्ताख्या महारुद्रमुपासते ।
इति षोडशसालेषु स्थितै रुद्रैः सहस्रशः ॥ ५३ ॥
सेवितस्तु महारुद्रो ललिताज्ञाप्रवर्तकः ।
वर्तते जगतामूर्ध्वे मुक्तासालेशकोणके ॥ ५४ ॥
शतरुद्रीयसंख्याता एते रुद्रा महाबलाः ।
ललिताभक्तिसंपन्नान्पालयन्ति दिवानिशम् ५५
अभक्ताँल्ललितादेव्यां प्रत्यूहैर्योजयन्त्यमी ।
इत्थं शक्रादिदिक्पाला मुक्तासालं समाश्रिताः ५६
ललितापरमेशान्याः सेवामेव वितन्वते ।
अथ मुक्ताख्यसालस्यान्तरे मारुतयोजने ॥ ५७ ॥
सालो मरकताभिख्यश्चतुर्योजनमुच्छ्रितः ।
पूर्ववद्गोपुरादीनां संस्थानैश्च सुशोभितः ॥ ५८ ॥
यत्र श्रीदण्डनाथाया दहनादिविदिग्गताः ।
चत्वारो निलयाः प्रोक्ता मन्त्रिणीगृहविस्तृताः ५९
किरिचक्ररथेन्द्रस्य याः पर्वाणि समाश्रिताः ।
भण्डासुरमहायुद्धे ता देव्यस्तत्र जाग्रति ॥ ६० ॥
सर्वा स्थली मरकतश्रेणिभिः खचिता शुभा ।

हेमतालवनाढ्या च सर्ववस्तुसमाकुला ॥ ६१ ॥
तत्र देव्यः समस्ताश्च दण्डनाथासमश्रियः ।
हेलोद्घूर्णहला घूर्णमुसलाः सञ्चरन्त्यपि ॥ ६२ ॥
संख्यातीतास्तालवृक्षा नवस्वर्णविचित्रिताः ।
योजनायतकाण्डाश्च दलैर्युक्ता विशङ्कटैः ॥ ६३ ॥
हेमत्वचोऽतिसुस्निग्धाः सुच्छायाः फलभङ्गुराः ।
आमूलाग्रं लम्बमानास्तालाहालाघटाकुलाः॥६४॥
वर्तन्ते दण्डनाथायाः प्रीत्यर्थं शिल्पिभिः कृताः ।
तत्र तालसुरापूरं पीत्वापीत्वा मदाकुलाः ॥ ६५ ॥
जृम्भिन्याद्याश्चक्रदेव्यो हेतुकाद्याश्च भैरवाः ।
सप्तनिग्रहदेव्यश्च नृत्यन्ति मदविह्वलाः ॥ ६६ ॥
चतुर्विदिक्षु दण्डिन्या यत्र यत्र महद्गृहम् ।
तत्र पूर्वादिदिग्भागे देवीसदृशवर्चसः ॥ ६७ ॥
उन्मत्तभैरवी चैव स्वप्नेशी च तिरस्कृतिः ।
तथा किरिपदादेवी सेवन्ते दण्डनायिकाम् ६८
एषा कक्ष्या मरकतप्रकृतिः सर्वतोदिशम् ।
निवासो दण्डनाथायाः केवलं चाभिमानिकः ६९

तस्यास्तु सेवावासोऽन्यो महापद्माटवीस्थले ।
तत्कक्ष्यातिदवीयस्त्वात्सेवार्थं तत्र तद्गृहम् ॥७०॥
अथो मरकताकारसालान्तः सप्तयोजने ।
प्राकारो विद्रुमाकारः प्रातरर्यमपाटलः ॥ ७१ ॥
तत्र स्थली च सकला विद्रुमेणैव निर्मिता ।
तत्र विद्रुमसङ्काशो ब्रह्मा नलिनविष्टरः ॥ ७२ ॥
ब्रह्मलोकात्समागत्य सार्धं सर्वैर्मुनीश्वरैः ।
सदा श्रीललितादेव्याः सेवनार्थमतन्द्रितः ॥७३॥
मरीच्याद्यैः प्रजासृग्भिर्वर्तते साकमब्धिप ।
चतुर्दशापि विद्यास्ता उपविद्याः सहस्रशः ॥७४॥
चतुष्षष्टिकलाश्चैव शरीरिण्यो महत्तराः ।
प्राकारे विद्रुमाकारे ब्रह्मलोकं समाश्रिताः ।
वर्तन्ते जगतामृध्यै ललितादेवताज्ञया ॥ ७५ ॥
अथ विद्रुमसालस्यान्तरे मारुतयोजने ।
माणिक्यमण्डपं नाम कक्ष्यान्तरमुदीरितम् ॥७६॥
नानारत्नकृतः सालः पूर्ववद्गोपुरान्वितः ।
माणिक्यमण्डपस्थाने परितः सर्वतोदिशम् ॥७७॥

वर्तते विष्णुलोकस्तु ललितापूजनोत्सुकः ।
तत्र वैष्णवलोके तु विष्णुः साक्षात्सनातनः ७८
चतुर्धा दशधा चैव तथा द्वादशधा पुनः ।
विभिन्नमूर्तिः सततं वर्तते माधवः सदा ॥ ७९ ॥
भण्डासुरमहायुद्धे ये श्रीदेवीनखोत्थिताः ।
दशावतारनाथास्तु तेऽपि माणिक्यमण्टपे ॥८०॥
पूर्वकक्ष्यान्तरेभ्यस्तु तत्कक्ष्यायां विशिष्टता ।
उपर्याच्छादनामात्रं माणिक्यदृषदां गणैः ॥८१॥
तत्र कक्ष्यान्तरे देवः शङ्खचक्रगदाधरः ।
भिन्नो द्वादशमूर्त्या च पूर्वाद्याशासु रक्षति ॥८२॥
जाम्बूनदप्रभश्चक्री पूर्वस्यां दिशि केशवः ।
पश्चान्नारायणः शङ्खी नीलजीमूतसंनिभः ८३
इन्दीवरदलश्यामस्तथोर्ध्वं माधवोऽवति ।
गोविन्दो दक्षिणे पार्श्वे धन्वी चन्द्रप्रभो महान् ८४
उत्तरे हलभृद्विष्णुः पद्मकिञ्जल्कसंनिभः ।
आग्नेय्यामरविन्दाक्षो मुसली मधुसूदनः ॥ ८५ ॥
त्रिविक्रमः खड्गपाणिर्नैर्ऋत्यां ज्वलनप्रभः ।

वायव्यां वामनो वज्री तरुणादित्यदीप्तिमान् ८६
ईशान्यां पुण्डरीकाक्षः श्रीधरः पट्टसायुधः ।
विद्युत्प्रभो हृषीकेशो ह्यवाच्यां दिशि मुद्गरी ८७
पद्मनाभः शार्ङ्गपाणिः सहस्रार्कसमप्रभः ।
माणिक्यमण्टपस्थानमनुलोमेन वेष्टते ॥ ८८ ॥
सर्वायुधः सर्वशक्तिः सर्वज्ञः सर्वतोमुखः ।
इन्द्रगोपकसङ्काशः पाशहस्तोऽपराजितः ॥ ८९ ॥
दामोदरस्तु सर्वात्मा ललिताभक्तिनिर्भरः ।
माणिक्यमण्टपस्थानं प्रतिलोमेन वेष्टते ॥ ९० ॥
इति द्वादशभिर्देवैर्भगवानम्बुजेक्षणः ।
माणिक्यमण्टपगते विष्णुलोके विराजते ॥ ९१ ॥
अथ नानारत्नसालान्तरे मारुतयोजने ।
सहस्रस्तम्भकं नाम मण्टपं सुमनोहरम् ॥ ९२ ॥
नानारत्नैस्तु खचितं नानाकल्पैरलंकृतम् ।
नानारत्नकृतः सालस्तुङ्गस्तत्राभिवर्तते ॥ ९३ ॥
एका पङ्क्तिः सहस्रेण स्तम्भस्तिर्यक्प्रवर्तते ।
तादृश्यः पङ्क्तयो बह्वयस्तम्भानां तु चतुर्दिशम् ९४

उपर्याच्छादनं चापि पूर्ववद्रत्नदारुभिः ।
शिवलोकस्तत्र महाञ्जागर्ति स्फुरितद्युतिः ॥९५॥
शैवागमा मूर्तिमन्तस्तत्राष्टाविंशतिं स्मृताः ।
नन्दिभृङ्गिमहाकालप्रमुखास्तत्र चोत्तमाः ॥९६॥
षट्त्रिंशत्तत्र देवाश्च गजवक्त्राः सहस्रशः ।
शिवलोकोत्तमे तस्मिन्सहस्रस्तम्भमण्टपे ॥ ९७ ॥
ईशानः सर्वविद्यानां राजते चन्द्रशेखरः ।
ललिताज्ञापालकश्च ललिताज्ञाप्रवर्तकः ॥ ९८ ॥
ललितामन्त्रजापी च नित्यमानन्दमानसः ।
शैव्या दृष्ट्या स्वभक्तानां ललितामन्त्रसिद्धये ९९
अन्तर्बहिस्तमःपुञ्जनिर्भेदनपटीयसीम् ।
महाप्रकाशरूपां तां मेधाशक्तिं प्रकाशयन् १००
सर्वज्ञः सर्वकर्ता च सहस्रस्तम्भमण्टपे ।
वर्तमानो महादेवः श्रीदेवीमेव सेवते ॥ १०१ ॥
इत्थं कारणकृत्येन्द्राः श्रीदेवीभक्तिनिर्भराः ।
तत्तत्सालान्समाश्रित्य वर्तन्ते कुम्भसंभव॥१०२॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
श्रीललितोपाख्याने त्रिंशोऽध्यायः ॥ ३० ॥

# एकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ महापद्माटवीवर्णनम् ॥

श्रीहयग्रीवः ॥

अथ वापीत्रयादीनां कक्ष्याभेदान्प्रचक्ष्महे ।
येषां श्रवणमात्रेण जायते श्रीर्महोदया ॥ १ ॥
सहस्रस्तम्भसालस्यान्तरे मारुतयोजने ।
मनो नाम महासालः सर्वरत्नविचित्रितः ॥ २ ॥
पूर्ववद्गोपुरद्वारकवाटार्गलसंयुतः ।
तन्मध्यकक्ष्याभागस्तु सर्वोऽप्यमृतवापिका ॥ ३ ॥
यत्पीत्वा योगिनः सिद्धा वज्रकाया महाबलाः ।
भवन्ति पुरुषाः प्राज्ञ तदेव हि रसायनम् ॥ ४ ॥
तस्याममृतवाप्यां तु वर्तते तोयतां गतम् ।
तद्गन्धाघ्राणमात्रेण सिद्धिकान्तापतिर्भवेत् ॥ ५ ॥
अस्पृशन्नपि विन्ध्यारे पुरुषः क्षीणकल्मषः ।
उभयोः सालयोर्मध्ये सुधावापीतटद्वयम् ॥ ६ ॥
अर्धक्रोशसमायाममन्यत्सर्वं च वापिका ।
चतुर्योजनदूरं तु तलं तस्या जलान्तरे ॥ ७ ॥

सोपानावलयस्तस्यां नानारत्नविचित्रिताः ।
स्वर्णवर्णा रत्नवर्णास्तस्या हंसाश्च सारसाः ॥ ८॥
आस्फाल्यते तटद्वन्द्वं तरङ्गैरतिचञ्चलैः ।
पक्षिणस्तज्जलं पीत्वा रसायनमयं नवम् ॥
अजरामरतां प्राप्तास्तत्र विन्ध्यनिषूदन ॥ ९ ॥
सदाकूजितलक्ष्येण तत्र कारण्डवद्विजाः ।
जपन्ति ललितादेव्या मन्त्रमेव महत्तरम् ॥१०॥
परितो वापिकाचक्रपरिवेषेण भूयसा ।
न तत्र गन्तुं भागोऽस्ति नौकावहनमन्तरा ११
आज्ञया केवलं तत्र मन्त्रिणीदण्डनाथयोः ।
तारानाम महाशक्तिर्वर्तते तरणीश्वरी ॥ १२ ॥
बाह्यस्तत्रोत्पलश्यामास्तारायाः परिचारिकाः ।
रक्तनौकासहस्रेण खेलन्ति सरसीजले ॥ १३ ॥
अपरं पारमायान्ति पुनर्यान्ति परं तटम् ।
वीणावेणुमृदङ्गादि वादयन्त्यो मुहुर्मुहुः ॥ १४ ॥
कोटिशस्तत्र ताराया नाविक्यो नवयौवनाः ।
मुहुर्गायन्ति नृत्यन्ति वाहयन्ति मुहुस्तरीः १५

अरित्रपाणयः काश्चित्काश्चिच्छृङ्गाम्बुपाणयः ।
पिबन्त्यस्तत्सुधातोयं सञ्चरन्त्यस्तरीशतैः ॥ १६ ॥
तासां नौकावाहिकानां शक्तीनां श्यामलत्विषा ।
प्रधानभूता ताराम्बा जलापच्छमनक्षमा ॥१७॥
आज्ञां विना तयोस्तारा मन्त्रिणीदण्डनाथयोः ।
त्रिणेत्रस्यापि नो दत्ते वापिकाम्भसि सन्तरम् १८
गायन्तीनां चलन्तीनां नौकाभिर्मणिचारुभिः ।
महाराज्ञीमहौदार्यं पठन्तीनां पदे पदे ॥
पिबन्तीनां मधु स्फीतं माणिक्यचषकोदरैः॥१९॥
प्रतिनौकं मणिगृहे भवन्तीनां मनोहरे ।
तारातरणिशक्तीनां समवायोऽतिसुन्दरः ॥ २० ॥
काश्चिन्नौकाः सुवर्णाढ्याः काश्चिद्रत्नकृता मुने ।
मकराकारमापन्नाः काश्चिन्नौका मृगाननाः २१
काश्चित्सिंहानना नावः काश्चिद्दन्तावलाननाः २२
इत्थं विचित्ररूपाभिर्नौकाभिः परिवेष्टिताः ।
ताराम्बा महतीं नौकामधिरूढा विराजते ॥ २३
आत्मानुरूपरूपेण ललितामन्त्रजापिना ।

सार्धं प्रियतमेनैव रत्नासनमुपेयुषी ॥ २४ ॥
अनुलोमविलोमेन संचारं वापिकाजले ।
तन्वाना सततं तारा कक्ष्यामेनां हि रक्षति ॥२५
मनस्सालस्यान्तराले सप्तयोजनदूरतः ।
बुद्धिसाल इति ख्यातश्चतुर्योजनमुच्छ्रितः ॥२६॥
तन्मध्यकक्ष्याभागस्तु सर्वोऽप्यानन्दवापिका २७
तत्र दिव्यं महामद्यं बकुलामोदमेदुरम् ।
प्रतप्तकनकच्छायं तज्जलत्वेन वर्तते ॥ २८ ॥
आनन्दवापिकागाधः पूर्ववत्परिकीर्तितः ।
सोपानादिक्रमश्चैव पक्षिणस्तत्र पूर्ववत् ॥ २९ ॥
तत्रत्यं सलिलं मद्यं पायंपायं तटस्थिताः ।
विहरन्ति मदोन्मत्ताः शक्तयो मदपाटलाः ॥ ३०
साक्षाच्च वारुणी देवी तत्र नौकाधिनायिका ।
यां सुधामालिनीमाहुर्यामाहुरमृतेश्वरीम् ॥ ३१ ॥
सा तत्र मणिनौकास्था शक्तिसेनासमावृता ।
ईषदालोकमात्रेण त्रैलोक्यमददायिनी ॥ ३२ ॥
तरुणादित्यसङ्काशा मदरक्तकपोलभूः ।

पारिजातप्रसूनस्रक्परिवीतकचोच्चया ॥ ३३ ॥
वहन्ती मदिरापूर्णं चषकं लोलदुत्पलम् ।
पक्वं पिशितखण्डं च मणिपात्रे तथान्यके ॥३४॥
नायकेनानुकूलेन साकं श्रीमन्त्रजापिना ।
वारुणी तरणिश्रेणीनायिका तत्र राजते ॥ ३५ ॥
साप्याज्ञयैव सर्वेषां मन्त्रिणीदण्डनाथयोः ।
ददाति वापीतरणं त्रिणेत्रस्यापि नान्यथा ॥३६॥
अथ बुद्धिमहासालान्तरे मारुतयोजने ।
अहङ्कारमहासालः पूर्ववद्गोपुरान्वितः ॥ ३७ ॥
तयोस्तु सालयोर्मध्यकक्ष्याभूरखिला मुने ।
विमर्शवापिका नाम सौषुम्नामृतरूपिणी ॥ ३८ ॥
यन्महायोगिनामन्तर्मनो मारुतपूरिते ।
सुषुम्नादण्डविवरे जागर्ति परमामृतम् ॥ ३९ ॥
तदेव तस्याः सलिलं वापिकायास्तपोधन ।
पूर्ववत्तटसोपाना पक्षिनौकाभिधा स्मृता ॥४०॥
तत्र नौकेश्वरी देवी कुरुकुल्येति विश्रुता ।
तमालश्यामलाकारा श्यामकञ्चुकधारिणी॥४१॥

नौकेश्वरीभिरन्याभिः स्वसमानाभिरावृता।
रक्तारित्रकरा नित्यमुल्लसन्मदमांसला॥
प्रियंकरेण संयुक्ता प्रियेण श्रीक्रमोत्सुका॥ ४२॥
परितो भ्राम्यति मुने मणिनौकाधिरोहिणी।
वापिकापयसोऽगाधः पूर्ववत्परिकीर्तितः॥ ४३॥
अथाहङ्कारसालस्यान्तरे मारुतयोजने।
सूर्यबिम्बमयः सालश्चतुर्योजनमुच्छ्रितः॥ ४४॥
सूर्यस्य यादृशं तेजस्तादृक्तत्र प्रभोदयः॥ ४५॥
तन्मध्यकक्ष्यावसुधा खचिता कुरुविन्दकैः।
तत्र बालातपोद्गारः सर्वदा वर्तते मुने॥ ४६॥
तस्य स्पर्शनमात्रेण सुरसिद्धनरासुराः।
सूर्यवच्च प्रकाशन्ते तेजोरूपत्वमागताः॥ ४७॥
तत्र बालातपोद्गारे ललितापरमेश्वरीम्।
प्रति तीव्रं तपस्तप्त्वा सूर्योऽलभत तां द्युतिम् ४८
ग्रहराशिगणाः सर्वे नक्षत्राण्यपि तारकाः।
तत्रैव हि तपस्तप्त्वा लोकभास्वरतां गताः॥४९॥
मार्ताण्डभैरवस्तत्र भिन्नो द्वादशधा मुने।

शक्तिभिस्तैजसीभिश्च कोटिसंख्याभिरन्वितः ५०
महाप्रकाशरूपश्च मदारुणविलोचनः ।
कङ्केलितरुषण्डेषु नित्यं क्रीडारसोत्सुकः ॥ ५१ ॥
वर्तते विन्ध्यदर्पारे पारे यस्तमसि स्थितः ।
महाप्रकाशनाम्नास्ति तस्य शक्तिर्महीयसी ॥५२॥
चक्षुष्मत्यपरा शक्तिश्छायादेव्यपरा स्मृता ।
इत्थं तिसृभिरेताभिः शक्तिभिः परिवारितः ५३
ललिताया महेशान्याः सदा विद्यां हृदा जपन् ।
तद्भक्तानामिन्द्रियाणि भास्वराणि प्रकाशयन् ५४
बहिरन्तस्तमोजालं समूलमवमर्दयन् ।
तत्र बालातपोद्गारे भाति मार्ताण्डभैरवः ॥५५॥
सूर्यबिम्बमहासालान्तरे मारुतयोजने ।
चन्द्रबिम्बमहासालश्चतुर्योजनमुच्छ्रितः ॥ ५६ ॥
पूर्ववद्गोपुरद्वारकवाटार्गलसंयुतः ।
तन्मध्यभूः समस्तापि चन्द्रिकोद्गार उच्यते॥५७॥
तत्रैव चन्द्रिकोद्गारे तपस्तप्त्वा सुदारुणम् ।
अत्रिनेत्रसमुत्पन्नश्चन्द्रमाः कान्तिमाययौ ॥५८॥

तत्र श्रीसोमनाथाख्यो वर्तते निर्मलाकृतिः ।
देवस्त्रैलोक्यतिमिरध्वंसी संसारवर्तकः ॥ ५९ ॥
पिबंश्चषकसंपूर्णं निर्मलं चन्द्रिकामृतम् ।
सप्तविंशतिनक्षत्रशक्तिभिः परिवारितः ॥
सदा पूर्णनिजाकारो निष्कलङ्कनिजाकृतिः ॥६०॥
तत्रैव चन्द्रिकोद्गारे वर्तते भगवाञ्छशी ।
ललिताया जपैर्ध्यानैःस्तोत्रैः पूजाशतैरपि ॥ ६१ ॥
अश्विन्यादियुतस्तत्र कालं क्षिपति चन्द्रमाः ६२
अन्याश्च शक्तयस्तारानामधेयाः सहस्रशः ।
सन्ति तस्यैव निकटे सा कक्ष्या तत्प्रपूरिता ६३
अथ चन्द्राख्यसालस्यान्तरे मारुतयोजने ।
शृङ्गारनामा सालोऽस्ति चतुर्योजनमुच्छ्रितः ६४
शृङ्गाररागरूपैस्तु कौस्तुभैरेव निर्मितः ।
महाशृङ्गारपरिघा तन्मध्यवसुधाखिला ॥ ६५ ॥
परिघावलये तत्र शृङ्गाररसपूरिते ।
शृङ्गारशक्तयः सन्ति नानाभूषणभासुराः ॥६६॥
तत्र नौकासहस्रेण संचरन्त्यो मदोद्धताः ।

उपासते सदामत्तं नौकास्थं कुसुमायुधम् ॥ ६७ ॥
स तु संमोहयत्येव विश्वसंमोहकारिभिः ।
विशिखैरखिलाँल्लोकाँल्ललिताज्ञावशंवदः ॥ ६८ ॥
तत्प्रभावेन संमूढा महापद्माटवीस्थलम् ।
न गन्तुं पारयन्त्येव सुरसिद्धनरासुराः ॥ ६९ ॥
ब्रह्मविष्णुमहेशास्तु शुद्धचित्ताः स्वभावतः ।
तस्याज्ञया परं यान्ति महापद्माटवीस्थलम्॥७०॥
विनीताः शुद्धवेषाश्च ललिताभक्तिनिर्भराः ।
सावधानेन मनसा यान्ति पद्माटवीस्थलम् ७१
संसारिणश्च रागान्धा बहुसंकल्पकल्पनाः ।
मोहाकुलाश्च पुरुषा विकल्पक्षोभधूसराः ॥७२॥
प्रभूतरागगहनां प्रौढव्यामोहदायिनीम् ।
महाशृङ्गारपरिखां तरितुं न विचक्षणाः ॥ ७३ ॥
यस्मादजय्यसौन्दर्यस्त्रैलोक्यजनमोहनः ।
महाशृङ्गारपरिघाधिकारी वर्तते स्मरः ॥ ७४ ॥
तस्य सत्वमतिक्रम्य महतामपि मोहनम् ।
महापद्माटवीं गन्तुं न कोऽपि भवति क्षमः ७५

अथ शृङ्गारसालस्यान्तरे मारुतयोजने।
चिन्तामणिगृहं नाम चक्रराजमहालयः ॥ ७६ ॥
तन्मध्यभूः समस्तापि परितो रत्नभूषिता।
महापद्माटवी नाम सर्वसौभाग्यदायिनी ॥७७॥
शृङ्गराख्यमहासालपर्यन्तं गोपुरं मुने।
चतुर्दिक्ष्वप्येवमेव गोपुराणां व्यवस्थितिः ॥ ७८॥
सर्वदिक्ष्वत उक्तानि गोपुराणि शतं मुने।
सालास्तु विंशतिः प्रोक्ता पञ्चसंख्याधिकाः शुभाः
सर्वेषामपि सालानां मूलं योजनसंमितम्।
पद्माटवीस्थलं वक्ष्ये सावधानो मुने शृणु ॥८०॥
समस्तरत्नखचिते तत्र षड्योजनान्तरे।
परितः स्थलपद्मानि महाकाण्डानि सन्ति वै ८१
काण्डास्तु योजनायामा मृदुभिः कण्टकैर्वृताः।
पत्राणि तालदशकमात्रायामानि सन्ति वै॥८२॥
केसराश्च सरोजानां पञ्चतालसमायताः।
किष्कूशतसमुन्नम्राः कर्णिकाः परिकीर्तिताः ८३
अत्यन्तकोमलान्यत्र सदा विकसितानि च।

नवसौरभ्यहृद्यानि विशङ्कटदलानि च ॥ ८४ ॥
बहुशः सन्ति पद्मानि कोटीनामपि कोटिशः ।
महापद्माटवीकक्ष्यापूर्वभागे घटोद्भव ॥ ८५ ॥
क्रोशोन्नतो वह्निरूपो वर्तुलाकारसंस्थितः ।
अर्धयोजनविस्तारः कलाभिर्दशभिर्युतः ॥ ८६ ॥
अर्घ्यपात्रमहाधारो वर्तते कुम्भसंभव ।
तस्याधारस्य परितः शक्तयो दीप्तविग्रहाः ॥८७॥
धूम्रार्चिःप्रमुखा भान्ति कला दश विभावसोः ।
दीप्ततारुण्यलक्ष्मीका नानालङ्कारभूषिताः ॥८८॥
आधाररूपं श्रीमन्तं भगवन्तं हविर्भुजम् ।
परिष्वज्यैव परितो वर्तन्ते मन्मथालसाः ॥८९॥
धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विष्फुलिङ्गिका
सुश्रीः सुरूपा कपिला हव्यकव्यवहे अपि ॥
एता दश कलाः प्रोक्ता वह्नेराधाररूपिणः ॥९०॥
तत्राधारे स्थितो देवः पात्ररूपं समाश्रितः ।
सूर्यस्त्रिलोकीतिमिरप्रध्वंसी प्रथितोदयः ॥ ९१ ॥
सूर्यात्मकं तु तत्पात्रं सार्धयोजनमुन्नतम् ।

योजनामात्रविस्तारं महाज्योतिःप्रकाशितम् ॥९२
तत्पात्रे परितः सक्तवपुषः पुत्रिका इव।
वर्तन्ते द्वादशकला रवेर्भास्वररोचिषः ॥ ९३ ॥
तपिनी तापिनी धूम्रा मरीचिर्मालिनी रुचिः।
सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा ॥
तस्मिन्पात्रे महानन्दकारणं परमामृतम्।
सर्वौषधरसाढ्यं च हृद्यसौरभ्यसंयुतम् ॥ ९५ ॥
नीलोत्पलैश्च कह्लारैरम्लानैरतिसौरभैः।
वास्यमानं सदा हृद्यं शीतलं लघु निर्मलम् ९६
चलद्वीचिशतोदारं ललिताभ्यर्चनोचितम्।
सदा शब्दायमानं च भासते सिद्धिकारणम् ॥
तदर्घ्यममृतं प्रोक्तं निशाकरकलामयम् ॥ ९८ ॥
तस्मिंस्तनीयसीं नौकां मणिक्लृप्तां समास्थिताः।
निशाकरकला हृद्याः क्रीडन्ति नवयौवनाः ९८
अमृता मानदा पूषा पुष्टिस्तुष्टी रतिर्धृतिः।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा
पूर्णा पूर्णामृता चेति कलाः पीयूषरोचिषः।

नवयौवनसंपूर्णाः सदा प्रहसिताननाः ॥ १०० ॥
सृष्टिर्बुद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिः स्थिरा ।
स्थितिः सिद्धिरिति प्रोक्ताः क्रीडन्ति ब्रह्मणः कलाः
जरा च पालिनी शान्तिरीश्वरी रतिकामिके ।
वरदाह्लादिनी प्रीतिर्दीर्घा चेति हरेः कलाः ॥१०२
तीक्ष्णा रौद्री भया निद्रा तन्द्री क्षुत्क्रोधिनी क्रिया ।
उत्कारी मृत्युरप्येता रौद्रास्तत्र स्थिताः कलाः ॥
ईश्वरस्य कलाः पीता श्वेता चैवारुणा सिता ।
चतस्र एव प्रोक्तास्तु सदाशिवकला अथ १०४
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
शुद्धिका दीपिका चैव रेचिका चैव मोचिका १०५
परा सूक्ष्म्या च विन्ध्यारे तथा सूक्ष्म्यामृता कला ।
ज्ञानामृताप्यायिनी च व्यापिनी व्योमरूपिका ॥
एताः षोडश संप्रोक्तास्तत्र क्रीडन्ति शक्तयः ।
क्षुद्रां नौकां समारूढास्ततश्चेतश्च चञ्चलाः १०७
शक्तिरूपेण खेलन्ति तत्र विद्याः सहस्रशः ।
अर्घ्यसंशोधनार्थाय कल्पिताः परमेष्ठिना १०८

तदर्घ्यममृतं पीत्वा सदा माद्यन्ति शक्तयः ।
महापद्माटवीवासा महाचक्रस्थिता अपि॥१०९॥
मुहुर्मुहुः पीयमानमुपर्युपरि वर्धते ।
मुहुर्मुहुर्नवनवं मुहुश्चाबद्धसौरभम् ॥ ११० ॥
रत्नकुम्भसहस्रैश्च सुवर्णघटकोटिभिः ।
आपूर्यापूर्य सततं तदर्घ्यममृतं महत् ॥ १११ ॥
चिन्तामणिगृहस्थानां परिचारिकशक्तयः ।
अणिमादिकशक्तीनामर्पयन्ति मदोद्धताः ॥११२॥
महापद्माटवीकक्ष्यापूर्वभागेऽर्घ्यकल्पनम् ।
इत्थं समीरितं पश्चात्तत्रान्यदपि कथ्यते ॥११३॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
श्रीललितोपाख्याने एकत्रिंशोऽध्यायः ॥ ३१ ॥

# द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ चिन्तामणिगृहान्तरवर्णनम् ॥

हयग्रीवः ॥

चिन्तामणिगृहस्याग्निदिग्भागे कुण्डमानलम् ।

योजनामात्रविस्तारं योजनासमखातकम् ॥ १ ॥
तत्र ज्वलति चिद्वह्निः सुधाधाराशतार्चितः ।
परमैश्वर्यजनकः पावनो ललिताज्ञया ॥ २ ॥
अनिन्धनो महाज्वालः सुधया तर्पिताकृतिः ।
कंकेलिपल्लवच्छायस्तत्र ज्वलति चिच्छिखी ॥३॥
तत्र होत्री महादेवी होता कामेश्वरः परः ।
उभौ तौ नित्यहोतारौ रक्षतः सकलं जगत् ॥४॥
अनुत्तरपराधीना ललितासंप्रवर्तिका ।
ललिताचोदितः कामशङ्करोऽपि प्रवर्तकः ॥ ५ ॥
चिन्तामणिगृहेन्द्रस्य रक्षोभागाम्बुजाटवौ ।
चक्रराजरथश्रेष्ठस्तिष्ठत्युन्नतविग्रहः ॥ ६ ॥
नवभिः पर्वभिर्युक्तः सर्वरत्नमयाकृतिः ।
चतुर्योजनविस्तारो दशयोजनमुन्नतः ॥ ७ ॥
यथोत्तरं ह्रासयुक्तः स्थूलत्वक्कूपरोज्ज्वलः ।
चतुर्वेदमहाचक्रः पुरुषार्थमहाहयः ॥ ८ ॥
अलङ्कृतो ध्वजश्रेण्या चामरैरभिमण्डितः ।
भण्डासुरमहायुद्धे कृतसाहसिकक्रियः ॥ ९ ॥

पूर्वोक्तलक्षणैर्युक्तो मुक्ताच्छत्रेण शोभितः ।
वर्तते रथमूर्धन्यः श्रीदेव्यासनपावितः ॥ १० ॥
चिन्तामणिगृहेन्द्रस्य वायुभागाम्बुजाटवौ ।
गेयचक्ररथेन्द्रस्तु मन्त्रिण्याः प्रतितिष्ठति ॥ ११ ॥
चिन्तामणिगृहेन्द्रस्य रुद्रभागाम्बुजाटवौ ।
वल्लभो दण्डनाथायाः किरिचक्रमहारथः ॥ १२ ॥
एतद्रथत्रयं सर्वक्षेत्रश्रीपुरपङ्क्तिषु ।
समानमेव विज्ञेयमन्तस्था देवता यथा ॥ १३ ॥
आमलं कुण्डमाग्नेये यत्तिष्ठति सदाज्वलत् ।
तत्पश्चिमे तु गायत्री तत्पश्चाद्भयंकरः ॥ १४ ॥
घृणिः सूर्यश्च तत्पश्चादोंकारस्य च मन्दिरम् ।
देवी तुरीयगायत्री चक्षुष्मत्यपि तापस ॥ १५ ॥
अथ गन्धर्वराजश्च पथि षड्रुद्र एव च ।
ताराम्बिका भगवती तत्पश्चाद्भागतः स्थिता १६
चिन्तामणिगृहेन्द्रस्य रक्षोभागं समाश्रितः ।
नामत्रयमहामन्त्रवाच्योऽस्ति भगवान् हरिः १७
महागणपतिस्तस्योत्तरे कृतनिकेतनः ।

पञ्चाक्षरीमन्त्रवाच्यस्तस्य चाप्युत्तरे शिवः १८
अथ मृत्युञ्जयेशश्च वाच्यस्त्र्यक्षरमन्त्रतः ।
धारणाख्या सरस्वत्यप्यस्य चोत्तरवासिनी ॥ १९
अकारादिक्षकारान्तवर्णमूर्तेस्तु मन्दिरम् ।
मातृकाया उत्तरतस्तस्या विन्ध्यनिषूदन ॥ २० ॥
तदुत्तरे संपदीशी कालसंकर्षिणी तथा ।
श्रीमहाशम्भुनाथश्च ललितोत्पत्तिकारणम् ॥२१॥
श्रीपराम्बा च विशदज्योत्स्ना निर्मलविग्रहा ।
उत्तरोत्तरमेतास्तु देवताः कृतमन्दिराः ॥ २२ ॥
बाला चैवान्नपूर्णा च हयारूढा तथैव च ।
श्रीपादुका च तत्रस्था उत्तरोत्तरमन्दिराः ॥२३॥
चिन्तामणिगृहेन्द्रस्य पश्चिमद्वारभागतः ।
उत्तरोत्तरवासिन्यो देवता अपरा मुने ॥ २४ ॥
लघुश्यामा च वाग्वादिन्यथ श्रीनकुलाम्बिका ।
श्यामा परा चतस्रस्ता वायव्यान्तं समाश्रिताः ॥
चिन्तामणिगृहेन्द्रस्य वायव्यवसुधादितः ।
महापद्माटवौ त्वन्या देवताः कृतमन्दिराः २६

उन्मत्तभैरवी चैव स्वप्नवाराहिका परा।
तिरस्करिणिकाम्बा च तथान्या पञ्चमी परा॥
यथापूर्वं कृतगृहा एता देव्यो महोदयाः॥ २७॥
श्रीपूर्तिश्च महादेवी श्रीमहापादुकापि च।
यथापूर्वं कृतगृहे एते द्वे देवतोत्तमे॥ २८॥
शङ्करेण षडाम्नायसागरे प्रतिपादिताः।
या विद्यास्ताः समस्ताश्च महापद्माटवीस्थले २९
इत्थं श्रीरश्मिमालाया मणिक्लृप्ता महागृहाः।
उच्चध्वजाः ससालाश्च सोद्यानाश्च तपोधन॥
चिन्तामणिगृहेन्द्रस्य पूर्वद्वारस्य सिन्धुप॥ ३०॥
दक्षिणे पार्श्वभागे तु मन्त्रिनाथागृहं महत्।
वामभागे दण्डनाथाभवनं रत्ननिर्मितम्॥ ३१॥
ब्रह्मविष्णुमहेशानामर्घ्यस्थानस्य पूर्वतः।
भवनं दीपिताशेषदिक्चक्रं रत्नरश्मिभिः॥ ३२॥
समस्ता देवता एता ललिताभक्तिनिर्भराः।
ललितामन्त्रजप्याश्च श्रीदेवीं समुपासते॥ ३३॥
पूर्वोक्तमर्घ्यस्थानं च पूर्वोक्तं चार्घ्यकल्पनम्।

याम्यद्वारप्रभृतिषु सर्वेष्वपि समं स्मृतम् ॥३४॥
अथ चिन्तामणिगृहं वक्ष्ये शृणु महामुने ।
श्रीपट्टणस्य मध्यस्थं योजनद्वयविस्तृतम् ॥ ३५ ॥
तस्य चिन्तामणिमयी भित्तिः क्रोशसुविस्तृता ।
चिन्तामणिशिलाभिश्च छादिनीभिस्तथोपरि ॥३६
संवृता कूटरूपेण तत्र स्थूपिसमुन्नता ।
गृहभित्तिस्तथोन्नम्रा चतुर्योजनदूरतः ॥ ३७ ॥
विंशतिर्योजनं तस्य चोन्नम्रा स्थूपिरुच्यते ।
यथोर्ध्वह्रासंयुक्तस्थौल्या त्रिमकुटोज्ज्वला ३८
स्थितानीच्छाक्रियाज्ञानरूपाणि मकुटान्यृषे ।
सदा देदीप्यमानानि चिन्तामणिमयानि च ३९
चिन्तामणिगृहे सर्वं चिन्तामणिमयं स्मृतम् ।
तस्य द्वाराणि चत्वारिक्रोशार्धायामभाञ्जि च ४०
क्रोशार्धार्धं च विस्तारो द्वाराणां कथितो मुने ।
द्वारेषु सर्वेष्वपि च चिन्तामणिगृहान्तरे ॥ ४१ ॥
पिण्डिता ललितादेव्या देहलौहित्यसिन्धवः ।
तरुणार्कसहस्राभाश्चन्द्रवच्छीतला अपि ॥ ४२ ॥

मुहुः प्रवाहरूपेण प्रसरन्ति महामुने ।
पूर्वाम्नायमयं चैव पूर्वद्वारं प्रकीर्तितम् ॥ ४३ ॥
दक्षिणद्वारदेशस्तु दक्षिणाम्नायलक्षणः ।
पश्चिमद्वारदेशस्तु पश्चिमाम्नायलक्षणः ॥ ४४ ॥
उत्तरद्वारदेशः स्यादुत्तराम्नायलक्षणः ।
गृहराजस्यान्तराले भित्तौ खचितदण्डकाः ॥ ४५
रत्नप्रदीपा भास्वन्तः कोट्यर्कसदृशत्विपः ।
परितस्तत्र वर्तन्ते भासयन्तो गृहान्तरम् ॥ ४६ ॥
चिन्तामणिगृहस्यास्य मध्यस्थाने महीयसि ।
अत्युच्चे वेदिकाभागे बिन्दुचक्रं महत्तरम् ॥४७॥
चिन्तारत्नगृहोत्तुङ्गभित्तेर्बिन्दोश्च मध्यभूः ।
भित्तिक्रोशं परित्यज्य क्रोशत्रयमुदाहृतम् ॥ ४८ ॥
तत्र क्रोशत्रये स्थानमणिमाद्यात्मरोचिषाम् ।
क्रोशत्रयं समस्तं तद्धस्तसंख्याप्रकारतः ॥ ४९ ॥
चतुर्विंशतिसाहस्रहस्तैः संमितमुच्यते ।
बिन्दुपीठेशपर्यन्तं चतुर्दशविभेदतः ॥ ५० ॥
अन्तरे भेदिते जाते हस्तसंख्या मयोच्यते ।

पद्माटवीस्थलाच्चिन्तामणिवेश्मान्तरं मुने ॥ ५१ ॥
हस्तविंशतिमुन्नम्रं तत्र स्युरणिमादयः ।
अणिमान्तरविस्तारश्चतुर्नल्वसमन्वितः ॥ ५२ ॥
किष्कूचतुःशतीनल्वः किष्कुर्हस्त इतीर्यते ।
तत्रान्तरेऽणिमाद्यास्तु पूर्वादिकृतमन्दिराः ॥५३॥
अणिमा महिमा चैव गरिमा लघिमा तथा ।
ईशित्वं च वशित्वं च प्राकाम्यं भुक्तिरेव च ५४
इच्छा प्राप्तिः सर्वकामेत्येताः सिद्धय उत्तमाः ।
रससिद्धिर्मोक्षसिद्धिर्बलसिद्धिस्तथैव च ॥ ५५ ॥
खड्गसिद्धिः पादुकायाः सिद्धिरञ्जनसिद्धिका ।
वाक्सिद्धिर्लोहसिद्धिश्च देहसिद्धिरनन्तरम् ॥ ५६
एतादृश्यः सिद्धयस्तु बह्वयोऽन्या योगिसंमताः ।
अत्रान्तरे तु परितः सेवन्ते परमेश्वरीम् ॥ ५७ ॥
कोटिशस्सिद्धयस्तस्मिन्नणिमाद्यन्तरे शुभे ।
नवलावण्यसम्पूर्णाः स्मयमानमुखाम्बुजाः ५८
ज्वलच्चिन्तामणिकराः सदा षोडशवार्षिकाः ।
अत्युदारप्रकृतयः खेलन्ति मदविह्वलाः ॥ ५९ ॥

तस्याणिमाद्यन्तरस्योपरिष्टात्सुमनोहरम् ।
हस्तविंशतिमुन्नम्रं चतुर्नल्वप्रविस्तरम् ॥ ६० ॥
चतुर्दिक्षु च सोपानपङ्क्तिभिः सुमनोहरम् ।
ब्राह्मयाद्यन्तरधिष्ण्यं स्यात्तत्र देवीः स्थिताः शृणु ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही चैव माहेन्द्री चामुण्डा त्वथ सप्तमी ६२
महालक्ष्मीरष्टमी तु तत्रैताः कृतमन्दिराः ।
नानाविधायुधाढ्याश्च नानाशक्तिपरिच्छदाः ६३
पूर्वादिदिशमारभ्य प्रादक्षिण्यकृतालयाः ।
अथ ब्राह्मयाद्यन्तरस्योपरिष्टात्कुम्भसंभव ॥ ६४ ॥
हस्तविंशतिमुन्नम्रं चतुर्नल्वप्रविस्तरम् ।
मुद्रान्तरमिति ज्ञेयं तत्र मुद्राः कृतालयाः ॥६५॥
संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ।
खेचरीबीजयोन्याख्यास्त्रिखण्डा दशमी पुनः ६६
पूर्वादिदिशमारभ्य मुद्रा एताः प्रतिष्ठिताः ।
अत्यन्तसुन्दराकारा नवयौवनविह्वलाः ॥ ६७ ॥
कान्तिभिः कमनीयाभिः पूरयन्त्यो गृहान्तरम् ।

सेवन्ते मुनिशार्दूल ललितापरमेश्वरीम् ॥ ६८ ॥
अन्तरत्रयमेतत्तु चक्रं त्रैलोक्यमोहनम् ।
एतस्मिञ्छक्तयो यास्तु ता उक्ता प्रकटाभिधाः ६९
एतासां समधिष्ठात्री त्रिपुराचक्रनायिका ।
तच्चक्रपालनकरी मुद्रा संक्षोभणात्मिका ॥ ७० ॥
अथ मुद्रान्तरस्योर्ध्वं प्रोक्तं नित्याकलान्तरम् ।
हस्तविंशतिमुन्नम्रं चतुर्नल्वप्रविस्तरम् ॥ ७१ ॥
पूर्ववच्चैव सोपानमुत्तरोत्तरमिष्यते ।
नित्याकलान्तरे तस्मिन्कामाकर्षिणिकामुखाः ७२
परितः कृतसंस्थानाः षोडशेन्दुकलात्मिकाः ।
तर्पयन्त्यो दिशां चक्रं सुधास्यन्दैः सुशीतलैः ७३
तासां नामानि मत्तस्त्वमवधारय कुम्भज ।
कामाकर्षिणिका नित्या बुद्ध्याकर्षिणिका परा ७४
अहङ्काराकर्षिणी च शब्दाकर्षिणिका तथा ।
स्पर्शाकर्षिणिका नित्या रूपाकर्षिणिका तथा ७५
रसाकर्षिणिका नित्या गन्धाकर्षिणिका कला ।
चित्ताकर्षिणिका नित्या धैर्याकर्षिणिका कला ७६

स्मृत्याकर्षिणिका नित्या नामाकर्षिणिका कला ।
बीजाकर्षिणिका नित्या चात्माकर्षिणिका कला ॥
अमृताकर्षिणी नित्या शरीराकर्षिणी कला ।
एतास्तु गुप्तयोगिन्यस्त्रिपुरेशी च चक्रिणी ॥ ७८
सर्वाशापूरकाभिख्यचक्राधिष्ठानदेवता ।
एतच्चक्रे पालिका तु मुद्रा द्राविणिकाभिधा ७९
नित्याकलान्तरादूर्ध्वं धिष्ण्यमत्यन्तसुन्दरम् ।
हस्तविंशतिमुन्नम्रं चतुर्नल्वप्रविस्तरम् ॥ ८० ॥
प्राग्वत्सोपानसंयुक्तं सर्वसंक्षोभणाभिधम् ।
तत्राष्टौ शक्तयस्तीव्रा मदारुणविलोचनाः ॥ ८१॥
नवतारुण्यमत्ताश्च सेवन्ते परमेश्वरीम् ।
कुसुमा मेखला चैव मदना मदनातुरा ॥ ८२ ॥
रेखा वेगिन्यङ्कुशा च मालिन्यष्टौ च शक्तयः ।
कोटिशस्तत्परीवाराः शक्तयोऽनङ्गपूर्विकाः ८३
सर्वसंक्षोभणमिदं चक्रं तत्र तु चक्रिणी ।
सुन्दरी नाम विज्ञेया नाम्ना गुप्ततरा स्मृता ८४
तच्चक्रपालनकरी मुद्राकर्षिणिका स्मृता ।

अनङ्गशक्त्यन्तरस्योपरिष्टात्कुम्भसंभव ॥ ८५ ॥
हस्तविंशतिमुन्नम्रं चतुर्नल्वप्रविस्तरम् ।
संक्षोभिण्याद्यन्तरं स्यात्सर्वसौभाग्यदायकम् ८६
सर्वसंक्षोभिणीमुख्यास्तत्र शक्तय उद्धताः ।
चतुर्दश वसन्त्येव तासां नामानि मच्छृणु ॥ ८७
सर्वसंक्षोभिणी शक्तिः सर्वविद्राविणी तथा ।
सर्वाकर्षिणिका शक्तिः सर्वाह्लादिनिका तथा ८८
सर्वसंमोहिनी शक्तिः सर्वस्तम्भनशक्तिका ।
सर्वजम्भनशक्तिश्च तथा सर्ववशंकरी ॥ ८९ ॥
सर्वरञ्जनशक्तिश्च सर्वोन्मादनशक्तिका ।
सर्वार्थसाधनी शक्तिः सर्वसंपत्तिपूरणी ॥ ९० ॥
सर्वमन्त्रमयी शक्तिः सर्वद्वन्द्वक्षयंकरी ।
एताश्च संप्रदायाख्याश्चक्रिणीपुरवासिनी ॥ ९१ ॥
मुद्रा च सर्ववश्याख्या तच्चक्रे रक्षिका मता ।
कोटिशः शक्तयस्तत्र तासां किंकर्य उद्धताः ९२
संक्षोभिण्याद्यन्तरस्योपरिष्टात्कुम्भसंभव ।
हस्तविंशतिमुन्नम्रं चतुर्नल्वप्रविस्तरम् ॥ ९३ ॥

सर्वसिद्ध्यादिकानां तु मन्दिरं धिष्ण्यमुच्यते ।
सर्वसिद्धिप्रदा चैव सर्वसंपत्प्रदा तथा ॥ ९४ ॥
सर्वप्रियङ्करी शक्तिः सर्वमङ्गलकारिणी ।
सर्वकामप्रदा देवी सर्वदुःखविमोचनी ॥ ९५ ॥
सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी ।
सर्वाङ्गसुन्दरी देवी सर्वसौभाग्यदायिनी ॥९६॥
एता देव्यः कुलोत्तीर्णा योगिन्यो नामतः स्मृताः ।
चक्रिणी श्रीश्च विज्ञेया चक्रं सर्वार्थसाधकम् ९७
सर्वोन्मादनमुद्रास्य चक्रस्य परिपालिका ।
सर्वसिद्ध्याद्यन्तरस्योपरिष्टात्कुम्भसंभव ॥ ९८ ॥
हस्तविंशतिमुन्नम्रं चतुर्नल्वप्रविस्तरम् ।
सर्वज्ञाद्यन्तरं नाम्ना सर्वरक्षाकरं परम् ॥
चक्रं महत्तत्र देव्यः सर्वज्ञाद्याः प्रकीर्तिताः ९९
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदायिनी ।
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ॥ १००
सर्वाधारस्वरूपा च सर्वपापहरा तथा ।
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ॥ १०१ ॥

सर्वेप्सितप्रदा चैता निगभायोगिनीश्वराः ।
मालिनी चक्रिणी प्रोक्ता मुद्रा सर्वमहाङ्कुशा १०२
इति चिन्तामणिगृहे सर्वज्ञाद्यन्तरावधि ।
चक्राणि कानिचित्प्रोक्तान्यन्यान्यपि मुने शृणु ॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
श्रीललितोपाख्याने द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ गृहराजान्तरकथनम् ॥

श्रीहयग्रीवः ॥

सर्वज्ञाद्यन्तरालस्योपरिष्टात्कुम्भसंभव ।
हस्तविंशतिमुन्नम्रं चतुर्नल्वप्रविस्तरम् ॥ १ ॥
वशिन्याद्यन्तरं ज्ञेयं प्राग्वत्सोपानमण्डितम् ।
सर्वरोगहरं नाम्ना तच्चक्रं भुवि विश्रुतम् ॥ २ ॥
वशिन्याद्यास्तत्र देव्यः पूर्वादिदिगनुक्रमात् ।
स्वरैस्तु सहिता तत्र प्रथमा वशिनीश्वरी ॥ ३ ॥
कवर्गसहिता तत्र कामेश्वर्याख्यवाङ्मयी ।

चवर्गजुष्टा वागीशी मेदिन्याख्या तृतीयका ॥ ४
टवर्गमण्डिताकारा विमलाख्या सरस्वती ।
तवर्गेण ततोपान्ता पञ्चमी वागथारुणा ॥ ५ ॥

पवर्गेण परिस्फीता षष्ठी तु जयिनी मता ।
यादिवर्णचतुष्केण सर्वैश्वर्याख्यवाङ्मयी ॥ ६ ॥
शादिकाक्षरषट्केन कौलिनी त्वष्टमी मता ।
एता देव्यो जपारक्ता मुक्ताभरणमण्डिताः ॥७॥

सदास्फुरद्गद्यपद्यलहरीललिताननाः ।
काव्यैश्च नाटकैश्चैव वेदान्तार्थैः स्तवोत्तमैः ॥८॥
अलङ्कारादिशब्दैश्च मधुरैः कर्णहारिभिः ।
विनोदयन्त्यः श्रीदेवीं वर्तन्ते कुम्भसंभव ॥ ९ ॥

एता रहस्यनाम्नैव ख्याता वातापितापन ।
नायिका त्वस्य चक्रस्य सिद्धा नाम्ना प्रकीर्तिता१०
अस्य चक्रस्य संरक्षाकारिणी खेचरी मता ।
वशिन्याद्यन्तरालस्योपरिष्टाद्विन्ध्यतापन ॥ ११ ॥

हस्तविंशतिमुन्नम्रं चतुर्नल्वप्रविस्तरम् ।
अस्त्रचक्रमिति ज्ञेयं तत्र बाणाधिदेवताः ॥ १२ ॥

पञ्च कामेश्वरीबाणाः पञ्च कामेश्वराशुगाः ।
अङ्कुशद्वितयं दीप्तमादिस्त्रीपुंसयोर्द्वयोः ॥ १३ ॥
धनुर्द्वयं च विन्ध्यारे नवपुण्ड्रेक्षुकल्पितम् ।
पाशद्वयं च दीप्ताङ्गं चत्वार्यस्त्राणि कुम्भज ॥ १४
कामेश्वर्यास्तु चत्वारि चत्वारि श्रीमहेशितुः ।
आहत्याष्टावायुधानि प्रज्वलद्दीप्तिभाञ्जि च १५
भण्डासुरमहायुद्धे दुष्टदानवशोणितैः ।
पीतैरतीव तृप्तानि दिव्यास्त्राण्यत्र जाग्रति ॥ १६॥
एतेषामायुधानां तु परिवारायुधान्यलम् ।
वर्तन्तेऽस्त्रान्तरे तत्र तेषां संख्या तु कोटिशः १७
वज्रं शक्तिः शतघ्नी च भुसुण्डी मुसलं तथा ।
कणयः पट्टसं चैव मुद्गरं भिण्डिपालकम् ॥ १८ ॥
एवमादीनि शस्त्राणि सहस्राणां सहस्रशः ।
अष्टायुधमहाशक्तीः सेवन्ते मदविह्वलाः ॥ १९ ॥
अथ शस्त्रान्तरालस्योपरि वातापितापन ।
हस्तविंशतिमुन्नम्रं चतुर्नल्वप्रविस्तरम् ॥ २० ॥
धिष्ण्यं तु समयेशीनां स्थानं चतसृणां मतम् ।

कामेश्याद्यास्तत्र देव्यस्तिस्रोऽन्या तु चतुर्थिका ॥
सैव निःशेषविश्वानां सवित्री ललितेश्वरी ।
तिसृणां शृणु नामानि कामेशी प्रथमा मता ॥२२
वज्रेशी भगमाला च ताः सेवन्ते सहस्रशः ।
सर्वेषां दर्शनानां च या देव्यो विविधाः स्मृताः ॥
ताः सर्वास्तत्र सेवन्ते कामेश्यादीर्महोदयाः ।
एतासां च प्रसङ्गेषु नित्यानां च प्रसञ्जने ॥२४॥
चक्रिणीनां योगिनीनां श्रीदेवी पूरणात्मिका ।
या कामेश्वरवामाङ्ककलिता ललिताम्बिका २५
कामेश्यादिचतुर्थी सा नित्यानां षोडशी मता ।
योगिनीचक्रदेवीनां नवमी परिपूर्तिका ॥ २६ ॥
समयेश्यन्तरालस्योपरिष्टादिल्वलान्तक ।
नाथान्तरमिति प्रोक्तं हस्तविंशतिमुन्नतम् ॥ २७ ॥
चतुर्नल्वप्रविस्तारं प्राग्वत्सोपानमण्डितम् ।
तत्र नाथा महादेव्या योगशास्त्रप्रवर्तकाः ॥२८॥
सर्वेषां मन्त्रगुरवः सर्वविद्यामहार्णवाः ।
चत्वारो युगनाथास्तु लोकानामभिगुप्तये ॥ २९ ॥

सृष्टा कामेशदेवेन तेषां नामानि मच्छृणु ।
मित्रेशोड्डीशषष्ठीशचर्याख्याः कुम्भसंभव ॥३०॥
तैः सृष्टा बहवो लोका रक्षार्थं पादुकात्मकाः ।
दिव्यौघा मानवौघाश्च सिद्धौघाः सुरतापसाः ३१
प्राप्तसालोक्यसारूप्यसायुज्यादिकसिद्धयः ।
महान्तो गुरवस्तांस्तु सेवन्ते चतुरो गुरून्॥३२॥
अथ नाथान्तरालस्योपरिष्टाद्धिष्ण्यमुत्तमम् ।
हस्तविंशतिमुन्नम्रं चतुर्नल्वप्रविस्तरम् ॥
नित्यान्तरमिति प्रोक्तं नित्याः पञ्चदशात्र वै ३३
अथ कामेश्वरी नित्या नित्या च भगमालिनी ।
नित्यक्लिन्नापि च तथा भेरुण्डा वह्निवासिनी ३४
महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी ।
नित्या नीलपताका च विजया सर्वमङ्गला ३५
ज्वालामालिनिका चित्रेत्येताः पञ्चदशोदिताः ।
एता देवीस्वरूपाः स्युर्महाबलपराक्रमाः ॥ ३६ ॥
प्रथमामुख्यतिथितां गता व्याप्तजगत्त्रयाः ।
कालरूपा वर्तमानाः कालग्रासविचक्षणाः ॥३७॥

ब्रह्मादीनामशेषाणां चिरकालमुपेयुषाम् ।
तत्तत्कालशतायुष्यरूपा देव्याज्ञया स्थिताः ॥३८
नित्योद्यता निरातङ्का श्रीदेव्यङ्गस्य रक्षकाः ।
सेवन्ते जगतामृध्यै ललितां स्वैक्यरूपिणीम् ३९
तासां भवनतां प्राप्ता दीप्ताः पञ्चदश स्वराः ।
विसृष्टिबिन्दुचक्रे तु षोडश्या भवनं मतम् ४०
अथ नित्यान्तरालस्योपरिष्टात्कुम्भसंभव ।
अङ्गदेव्यन्तरं प्रोक्तं हस्तविंशतिमुन्नतम् ॥ ४१ ॥
चतुर्नल्वप्रविस्तारं प्राग्वत्सोपानमण्डितम् ।
तस्मिन्हृदयदेव्याद्याः शक्तयः सन्ति वै मुने ४२
हृद्देवी च शिरोदेवी शिखादेवी तथैव च ।
मर्मदेवी नेत्रदेवी शस्त्रदेवी षडीरिताः ॥ ४३ ॥
अत्यन्तसन्निकृष्टास्ताः श्रीकामेश्वरसुभ्रुवः ।
नवलावण्यपूर्णाङ्ग्यः सावधाना धृतायुधाः ॥ ४४
परितो बिन्दुपीठस्य भ्राम्यन्त्यो दीप्तमूर्तयः ।
ललिताम्बाङ्गरक्षिण्यो वर्तन्ते वशिनां वर ॥ ४५
अथाङ्गदेव्यन्तरस्योपरिष्टान्मण्डलाकृति ।

बिन्दुनाममहापीठं दशहस्तसमुन्नतम् ॥ ४६ ॥
नल्वाष्टकप्रविस्तारमुद्यदादित्यसन्निभम् ।
बिन्दुपीठमिति ज्ञेयं श्रीपीठमिति घुष्यते ॥ ४७॥
महापीठमपि ज्ञेयं विद्यापीठमपीष्यते ।
आनन्दपीठमपि च पञ्चाशत्पीठरूपधृत् ॥ ४८॥
तत्र श्रीललितादेव्याः पञ्चब्रह्ममयं महत् ।
जागर्ति मञ्चरत्नं तु प्रपञ्चं त्रयमूलकम् ॥ ४९ ॥
तस्य मञ्चस्य पादास्तु चत्वारः परिकीर्तिताः ।
दशहस्तसमुन्नम्रा हस्तत्रितयवेष्टनाः ॥ ५० ॥
ब्रह्मविष्णुमहेशानेश्वररूपत्वमागताः ।
शक्तिभावमनुप्राप्ताः सदा श्रीध्यानयोगतः ॥ ५१
एकस्तु मञ्चपादः स्याज्जपाकुसुमभासुरः ।
ब्रह्मात्मकः स विज्ञेयो वह्निदिग्भागमास्थितः ५२
द्वितीयो मञ्चपादस्तु महानीलोपलप्रभः ।
विष्ण्वात्मकस्स विज्ञेयो रक्षोदिग्भागमाश्रितः ५३
तृतीयो मञ्चपादस्तु शुद्धस्फटिकनिर्मलः ।
रुद्रात्मकः स विज्ञेयो वायुदिग्भागमाश्रितः ५४

चतुर्थो मञ्चपादस्तु कर्णिकारकडाररुक्।
ईश्वरात्मा स विज्ञेय ईशदिग्भागमाश्रितः ॥५५॥
एते सर्वे सायुधाश्च सर्वालङ्कारभूषिताः।
उपर्यधः स्तम्भरूपा मध्ये पुरुषरूपिणः ॥ ५६ ॥
श्रीध्यानमीलिताक्षाश्च श्रीध्यानान्निश्चलाङ्गकाः।
तेषामुपरि मञ्चस्य फलकस्तु सदाशिवः ॥ ५७ ॥
विकासिदाडिमच्छायश्चतुर्नल्वप्रविस्तरः।
नल्वषट्कायामवांश्च सदा भास्वरमूर्तिमान् ॥५८॥
अङ्गदेव्यन्तरारम्भान्मञ्चस्य फलकावधि।
चिन्तामणिमयाङ्गानि तत्त्वरूपाणि तापस ॥५९॥
सोपानानि विभासन्ते षट्त्रिंशत्तानिवेशनैः।
आरोहस्य क्रमेणैव सोपानान्यभिदध्महे ॥ ६० ॥
भूमिरापोऽनलो वायुराकाशो गन्ध एव च।
रसो रूपं स्पर्शशब्दोपस्थपायुपदानि च ॥ ६१ ॥
पाणिवाग्घ्राणजिह्वाश्च चक्षुस्त्वक्छ्रोत्रमेव च।
अहङ्कारश्च बुद्धिश्च मनः प्रकृतिपूरुषौ ॥ ६२ ॥
नियतिः कालरागौ च कला विद्या च मायया।

शुद्धविद्येश्वरसदाशिवशक्तिशिवा इति ॥ ६३ ॥
एताः षट्त्रिंशदाख्यातास्तत्त्वसोपानपङ्क्तयः॥६४॥
एषा सोपानपङ्क्तिश्च मञ्चपूर्वदिशं श्रिता ।
मञ्चस्य पादनिकटे सूर्यकोटिसमप्रभा ॥ ६५ ॥
मध्येमध्ये धगधगत्कार्तस्वरविराजिता ।
मुक्तागुलुच्छकलितशिरोभागेन भासुरा ॥ ६६ ॥
नानारत्नमयी दृश्या ताम्बूलद्रववासिता ।
धुर्धूरकुसुमाकारा कलाची वर्ततेऽधिप ॥ ६७ ॥
अथ मञ्चस्योपरिष्टाद्धंसतूलिकतल्पकम् ।
हस्तत्रयसमुन्नम्रं चतुर्नल्वप्रविस्तरम् ॥ ६८ ॥
पादोपधानमूर्धोपधानद्वन्द्वविराजितम् ।
गण्डूकानां चतुष्टय्या शोभितं पाटलत्विषा ॥ ६९
तस्योपरिष्टात्कौसुम्भवसनेनोत्तरच्छदः ।
शुचिना मृदुना क्लृप्तः पद्मरागमणित्विषा ॥७०॥
तस्योपरि वसन्पूर्वदिङ्मुखो दययान्वितः ।
शृङ्गारवेषरुचिरः सदा षोडशवार्षिकः ॥ ७१ ॥
उद्यद्भास्करबिम्बाभश्चतुर्हस्तस्त्रिलोचनः ।

हारकेयूरमकुटकटकाद्यैरलङ्कृतः ॥ ७२ ॥
कमनीयस्मितज्योत्स्नापरिपूर्णकपोलभूः ।
जागर्ति भगवानादिदेवः कामेश्वरः परः ॥ ७३ ॥
तस्योत्सङ्गे समासीना तरुणादित्यपाटला ।
सदा षोडशवर्षा च नवयौवनदर्पिता ॥ ७४ ॥
आमृष्टपद्मरागाभचरणाब्जनखच्छटा ।
यावकश्रीनिर्व्यपेक्षपादलौहित्यवाहिनी ॥ ७५ ॥
कलनिस्वनमञ्जीरपत्कङ्कणमनोहरा ।
अनङ्गवीरतूणीरदर्पोन्मथनजङ्घिका ॥ ७६ ॥
करिशुण्डाकदलिकाकान्तितुल्योरुशोभिनी ।
अरुणेन दुकूलेन सुस्पर्शेन तनीयसा ॥ ७७ ॥
अलङ्कृतनितम्बाढ्या जघनाभोगभासुरा ।
अर्घोरुकग्रन्थिमती रत्नकाञ्चीविराजिता ॥ ७८ ॥
नतनाभिमहावर्तत्रिवल्यूर्मिप्रभाझरी ।
स्तनकुड्मलहिन्दोलमुक्तादामशतावृता ॥ ७९ ॥
अतिपीवरवक्षोजभारभङ्गुरमध्यभूः ।
शिरीषदामकौमल्यशालिनश्चतुरो भुजान् ॥८०॥

केयूरकङ्कणश्रेणीमण्डितान्सोर्मिकाङ्गुलीन् ।
वहन्ती परिसंमृष्टशङ्खसुन्दरकन्धरा ॥ ८१ ॥
मुखदर्पणवृन्ताभचिबुका पाटलाधरा ।
शुचिभिः पङ्क्तिबद्धैश्च विद्यारूपैर्विभास्वरैः ८२
कुन्दकुड्मलसच्छायैर्दन्तैर्दर्शितचन्द्रिका ।
स्थूलमौक्तिकसन्नद्धनासाभरणभासुरा ॥ ८३ ॥
केतकान्तर्दलद्रोणीदीर्घदीर्घविलोचना ।
अर्धेन्दुतुलिते फाले सम्यक्क्लृप्तालकच्छटा ॥८४॥
वालीवतंसमाणिक्यकुण्डलामण्डितश्रुतिः ।
नवकर्पूरकस्तूरीसदामोदितवीटिका ॥ ८५ ॥
शरच्चारुनिशानाथमण्डलीमधुरानना ।
चिन्तामणीनां सारेण क्लृप्तचारुकिरीटिका ॥८६॥
स्फुरत्तिलकरत्नाभफालनेत्रविराजिता ।
गाढान्धकारनिबिडश्यामकुन्तलसंहतिः ॥ ८७ ॥
सीमन्तरेखाविन्यस्तसिन्दूरश्रेणिभासुरा ।
स्फुरच्चन्द्रकलोत्तंसा मदालोलविलोचना ॥ ८८ ॥
सर्वशृङ्गारवेषाढ्या सर्वाभरणमण्डिता ।

समस्तलोकमाता च सदानन्दविवर्धिनी ॥ ८९ ॥
ब्रह्मविष्णुगिरीशेशसदाशिवनिदानभूः ।
अपाङ्गरिङ्खत्करुणानिर्झरीतर्पिताखिलां ॥ ९० ॥
भासते सा भगवती पापघ्नी ललिताम्बिका ।
अन्यदैवतपूजानां यस्याः पूजाफलं विदुः ॥९१॥
यस्याः पूजाफलं प्राहुर्यस्या एव हि पूजनम् ।
तस्याः श्रीललितादेव्या वर्णयामि कथं वपुः ॥९२
वर्षकोटिसहस्रेणाप्येकांशो नहि वर्ण्यते ।
वर्णना नाम वाग्रूपा वाचस्तस्यां कुतो गतिः ॥९३
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
बहुना किमिहोक्तेन तत्त्वभूतमिदं शृणु ॥ ९४ ॥
न पक्षपातान्न स्नेहान्न मोहाद्वा मयोच्यते ।
सन्तु कल्पतरोः शाखा लेखिन्यस्तपसां निधे ९५
मषीपात्राणि सर्वेऽपि सप्त सन्तु महार्णवाः ।
पञ्चाशत्कोटिविस्तीर्णा भूमिः पत्रत्वमृच्छतु ९६
तस्य लेखनकालोऽस्तु परार्धाधिकवत्सरैः ।
लिखन्तु सर्वे लोकास्तु प्रत्येकं कोटिबाहवः ॥९७

सर्वे बृहस्पतिसमा वक्तारो यदि कुम्भज ।
अथापि तस्याः श्रीदेव्याः पादाब्जैकाङ्गुलिद्युतेः ९८
सहस्रांशेष्वेककांशवर्णना नहि जायते ।
अतो वाग्वृत्तिरखिला निष्फला तद्गुणस्तुतौ॥९९॥
बिन्दुपीठस्य परितश्चतुरश्रतया स्थिता ।
महामायायवनिका लम्बते मेचकप्रभा ॥ १०० ॥
देव्या उपरिहस्तानां विंशतिद्वितयोद्धृतम् ।
इन्द्रगोपवितानं तु बद्धं त्रैलोक्यदुर्लभम् ॥१०१॥
तत्रालङ्कारजालं तु वर्तमानं मनोहरम् ।
मद्वाणी वर्णयिष्यन्ती कण्ठ एव ह्रिया हृता १०२
सैव जानाति तत्सर्वं तत्रत्यमतुलं गुणम् ।
मनसोऽपि हि दूरे तत्सौभाग्यं केन वर्ण्यते १०३
इत्थं भण्डमहादैत्यवधाय ललिताम्बिका ।
आविर्भूता चिदनलाद्धृतनिःशेषदानवा ॥ १०४ ॥
दिव्यशिल्पिजनैः कॢप्तं षोडशक्षेत्रवेश्मितम् ।
अधिष्ठाय श्रीनगरं सदा रक्षति विष्टपम् ॥१०५॥
इत्थमेव प्रकारेण श्रीपुराण्यन्यकान्यपि ।

न भेदः कोपि विन्यासे नाममात्रे पुरां भिदा १०६
श्रीपुराण्यखिलान्येव नित्यानि ललितेच्छया ।
अवकाशमनन्तानां भक्तानां च वितन्वते १०७
नानावृक्षमहोद्यानमारभ्येति क्रमेण ये ।
वदन्ति श्रीपुरकथां ते यान्ति परमां गतिम् १०८
आकर्णयन्ति पृच्छन्ति वितन्वन्ति च ये नराः ।
ये पुस्तके धारयन्ति ते यान्ति परमां गतिम् १०९
ये श्रीपुरप्रकारेण तत्तत्सालान्विभेदतः ।
कृत्वा शिल्पिजनैर्दिव्यं श्रीदेव्यायतनं महत् ।
संपादयन्ति सद्भक्तास्ते यान्ति परमां गतिम् ११०

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे श्रीललितोपाख्याने त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ मन्त्रराजतत्साधनादिकथनम् ॥

अगस्त्यः ॥

श्रुतमेतन्महावृत्तमाविर्भावादिकं महत् ।

भण्डासुरवधश्चैव देव्याः श्रीनगरस्थितिः ॥ १ ॥
इदानीं श्रोतुमिच्छामि तस्या मन्त्रस्य साधनम् ।
तद्भक्तानां लक्षणं च सर्वमेतन्निवेदय ॥ २ ॥

हयग्रीवः ॥

सर्वेभ्योऽपि पदार्थेभ्यः शाब्दं वस्तु महत्तरम् ।
सर्वेभ्योऽपि हि शब्देभ्यो वेदराशिर्महामुने ॥३॥
सर्वेभ्योऽपि हि वेदेभ्यो वेदमन्त्रा महत्तराः ।
सर्वेभ्यो वेदमन्त्रेभ्यो विष्णुमन्त्रा महत्तराः ॥४॥
तेभ्योऽपि दौर्गा मन्त्रास्तु महान्तो मुनिपुङ्गव ।
तेभ्योऽपि गाणपत्यास्तु मन्त्रा दिव्या महत्तराः ५
तेभ्योऽप्यर्कस्य मन्त्रास्तु तेभ्यः शैवा महत्तराः ।
तेभ्योऽपि लक्ष्मीमन्त्रास्तु तेभ्यः सारस्वता वराः ६
तेभ्योऽपि गिरिजामन्त्रास्तेभ्यश्चाम्नायभेदजाः ।
सर्वाम्नायमनुभ्योऽपि वाराहीमनवो वराः ॥ ७॥
तेभ्यः श्यामामनुवरा वरिष्ठा इल्वलान्तक ।
तेभ्योऽपि ललितामन्त्रा दशभेदविभेदिताः॥ ८ ॥
तेषु द्वौ मनुराजौ तु वरिष्ठौ विन्ध्यमर्दन ।

लोपामुद्राकामराजाविति ख्यातिमुपागतौ ॥ ९ ॥
हादिस्तु लोपामुद्रा स्यात्कामराजस्तु कादिकः ।
हंसादेर्वाच्यतां यातः कामराजमहेश्वरः ॥ १० ॥
स्मरादेर्वाच्यतां याता देवी श्रीललिताम्बिका ।
हादिकाद्योर्मन्त्रयोस्तु भेदो वर्णत्रयोद्भवः ॥ ११ ॥
तयोस्तु कामराजोऽयं सिद्धिदो भक्तिशालिनाम् ।
शिवेन शक्त्या कामेन शक्त्या चैव तु मायया १२
हंसेन भृगुणा चैव कामेन शशिमौलिना ।
शक्रेण भुवनेशेन चन्द्रेण च मनोभुवा ॥ १३ ॥
क्षित्या हृल्लेखया चैव प्रोक्तो हंसादिमन्त्रराट् ।
कामादिमन्त्रराजस्तु स्मरयोनिश्रियो मुखे ॥ १४ ॥
पञ्चत्रिकमहाविद्यां ललिताम्बाप्रवादिकाम् ।
ये जपन्ति महाभागास्तेषां सर्वत्र सिद्धयः ॥ १५ ॥
सद्गुरोस्तु मनुं प्राप्य त्रिपञ्चार्णपरिष्कृतम् ।
सम्यक्संसाधयेद्विद्वान्वक्ष्यमाणप्रकारतः ॥ १६ ॥
तत्क्रमं तु प्रवक्ष्यामि सावधानो मुने शृणु ॥ १७ ॥
प्रातरुत्थाय शिरसि स्मृत्वा कमलमुज्ज्वलम् ।

सहस्रपत्रशोभाढ्यं सकेसरसुकर्णिकम् ॥ १८ ॥
तत्र श्रीमद्गुरुं ध्यात्वा प्रसन्नं करुणामयम्।
ततो वहिर्विनिर्गत्य कुर्याच्छौचादिकाः क्रियाः १९
अथागत्य च तैलेन सामोदेन विलेपितः।
उद्वर्तितश्च सुस्नातः शुद्धेनोष्णेन वारिणा ॥ २० ॥
आपः स्वभावतो मेध्याः किं पुनर्वह्निसंयुताः।
तस्मादुष्णोदके स्नायात्तदभावे यथोदकम् ॥२१॥
परिधाय पटौ शुद्धौ कौसुम्भौ वाथवारुणौ।
आचम्य प्रयतो विद्वान् हृदि ध्यायन्पराम्बि-
काम् ॥ २२ ॥
ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा पट्टवर्धनमेव वा।
अगस्त्यपत्राकारं वा धृत्वा फाले यथोचितम् २३
चारुकर्पूरकस्तूरीचन्दनादिविलेपितः।
भूषणैर्भूषिताङ्गश्च चारुशृङ्गारवेषधृक् ॥ २४ ॥
आमोदिकुसुमस्रग्भिरवतंसितकुन्तलः।
सङ्कल्पभूषणो वाथ यथाविभवभूषणः।
अन्तर्वहिश्च शुद्धात्मा सन्ध्यावन्दनमाचरेत् २५

अश्वत्थपत्राकारेण पात्रेण सकुशाक्षतम्।
सपुष्पचन्दनं चार्घ्यं मार्तण्डाय समुत्क्षिपेत्॥२६
तथार्घ्यं भानवे दत्वा ललितायास्त्रिरर्घ्यकम्।
तर्पयित्वा यथाशक्ति मूलेन ललितेश्वरीम् ॥२७॥
देवर्षिपितृवर्गांश्च तर्पयित्वा विधानतः।
मौनी विशुद्धहृदयः प्रविश्य मुखमन्दिरम् ॥२८॥
न्यासखण्डे वक्ष्यमाणान्कृत्वा न्यासाननुक्रमात्।
मृद्वासने समासीनो ध्यायेच्छ्रीनगरं महत्॥ २९
नानावृक्षमहोद्यानमारभ्य ललितावधि।
ध्यायेच्छ्रीनगरं दिव्यमवहिर्मानसः शुचिः ॥३०॥
पूजाखण्डोक्तमार्गेण पूजां कृत्वा विचक्षणः।
अक्षमालां समादाय चन्द्रकस्तूरिवासिताम् ३१
उदङ्मुखः प्राङ्मुखो वा जपेत्सिंहासनेश्वरीम्।
षट्त्रिंशल्लक्षसंख्यां तु जपेद्विद्यां विचक्षणः ॥ ३२
तद्दशांशस्तु होमः स्यात्तद्दशांशस्तु तर्पणम्।
तद्दशांशं ब्राह्मणानां भोजनं समुदीरितम् ॥३३॥
एवं संसिद्धमन्त्रस्तु कुर्यात्काम्यजपं पुनः।

लक्षमात्रं जपित्वा तु मनुष्यान्वशमानयेत् ॥३४॥
लक्षद्वितयजापेन नारीः सर्वा वशं नयेत् ।
लक्षत्रितयजापेन सर्वान्वशयते नृपान् ॥ ३५ ॥
चतुर्लक्षजपे जाते क्षुभ्यन्ति फणिकन्यकाः ।
पञ्चलक्षजपे जाते सर्वाः पातालयोषितः ॥३६॥
भूलोकसुन्दरीवर्गो वश्यः षल्लक्षजापतः ।
क्षुभ्यन्ति सप्तलक्षेण स्वर्गलोकमृगीदृशः ॥ ३७ ॥
देवयोनिभवाः सर्वेऽप्यष्टलक्षजपाद्वशाः ।
नवलक्षेण गीर्वाणानखिलान्वशमानयेत् ॥ ३८ ॥
दशलक्षेण शक्रादिदिक्पालान्वशमानयेत् ।
लक्षैकादशजापेन ब्रह्मविष्णुमहेश्वरान् ॥ ३९ ॥
लक्षद्वादशजापेन सिद्धीरष्टौ वशं नयेत् ।
इन्द्रस्येन्द्रत्वमेतेन मन्त्रेण ह्यभवत्पुरा ॥ ४० ॥
विष्णोर्विष्णुत्वमेतेन शिवस्य शिवतामुना ।
इन्दोश्चन्द्रत्वमेतेन भानोर्भास्करता मुने ॥ ४१ ॥
सर्वेषामपि देवानां तास्ताः सिद्धय उज्ज्वलाः ।
अनेन मन्त्रराजेन जाता इत्यवधारय ॥ ४२ ॥

य एतन्मन्त्रजापी तु सर्वपापविवर्जितः ।
त्रैलोक्यसुन्दराकारो मन्मथेन समाकृतिः ॥४३॥
सर्वाभिः सिद्धिभिर्युक्तः सर्वज्ञः सर्वपूजितः ।
दर्शनादेव सर्वेषामन्तरानन्दपूरकः ॥ ४४ ॥
वाचा वाचस्पतिसमः श्रिया श्रीपतिसंनिभः ।
बले मरुत्समानः स्यान् स्थिरत्वे हिमवानिव ४५
औन्नत्ये मेरुतुल्यः स्याद्गांभीर्येण महार्णवः ।
क्षणात्क्षोभकरो मूर्त्या ग्रामपल्लीपुरादिषु ॥ ४६ ॥
ईषद्भ्रूभङ्गमात्रेण स्तम्भको जृम्भकस्तथा ।
उच्चाटको मोहकश्च मारको दुष्टचेतसाम् ॥ ४७॥
क्रुद्धः प्रसीदति हठात्तस्य दर्शनहर्षितः ।
अष्टादशसु विद्यासु निरूढिमधिगच्छति ॥ ४८ ॥
मन्दाकिनीपूरसमा मधुरा तस्य भारती ।
न तस्याविदितं किंचित्सर्वशास्त्रेषु कुम्भज ॥४९॥
दर्शनानि च सर्वाणि कर्तुं खण्डयितुं पटुः ।
तत्त्वं जानाति निखिलं सार्वज्ञ्यं चाधिगच्छति ५०
सदा दयार्द्रं हृदयं तस्य सर्वेषु जन्तुषु ।

तत्कोपाग्नेर्विषयतां गन्तुं नालं जगत्त्रयम् ॥५१॥
अरण्ये पट्टणे वापि देवालयमठेऽपि वा ।
यत्र कुत्रापि तिष्ठन्तं तं धावन्ति मृगीदृशः ॥५२
वात्याहतं यथा पाण्डुपत्रं भ्रमति भूतले ।
तद्वद्भ्रमन्ति चित्तानि दर्शने तस्य सुभ्रुवाम् ॥५३
वनितानवनीतानां विद्रावणमहानलम् ।
तं सेवन्ते समस्तानां विद्यानामपि पङ्क्तयः ॥५४॥
चन्द्रार्कमण्डलद्वन्द्वकुचमण्डलशोभिनी ।
त्रिलोकीललना तस्य दर्शनादनुरज्यति ॥ ५५ ॥
अन्यासां तु वराकीणां किं वक्तव्यं तपोधन ।
पट्टणेषु च वीथीषु पानगोष्ठीषु वेश्मसु ॥ ५६ ॥
धिष्ण्येषु देवावासेषु मठेष्वाश्रमधामसु ।
अन्तःपुरेषु मार्गेषु सुपत्रोपवनेषु च ॥ ५७ ॥
तीर्थेषु गिरिकूटेषु गङ्गाद्यासु नदीषु च ।
तत्कीर्तिघोषणा पुण्या सदा घुमघुमायते ॥५८॥
तस्य दर्शनतः पापजालं नश्यति पापिनाम् ।
तद्गुणा एव घुष्यन्ते सर्वत्र कविपुंगवैः ॥ ५९ ॥

भिन्नैर्वर्णैरायुधैश्च भिन्नैर्वाहनभूषणैः।
ये ध्यायन्ति महादेवीं तास्ताः सिद्धीर्भजन्तिते ६०
मनोरादिमखण्डस्तु कुन्देन्दुधवलद्युतिः।
आह्मचक्रं ज्वलज्ज्वालश्चिन्तनीयस्तु मूलके ॥६१॥
इन्द्रगोपकसंकाशो द्वितीयो मनुखण्डकः।
विभावनीयो हृच्चक्र आफालान्तं ज्वलच्छिखः ६२
अथ लालाटपट्टस्थद्विदलाम्बुजकोटरे।
विभावनीयस्तार्तीयखण्डो दुरितखण्डकः ॥६३॥
मुक्तौ ध्येया शशिज्योत्स्ना धवलाकृतिरम्बिका।
रक्तसन्ध्यकरोचिः स्याद्वशीकरणकर्मणि ॥ ६४ ॥
कवित्वे विशदाकारा स्फटिकोपलनिर्मला।
धनलाभे सुवर्णाभा चिन्त्यते ललिताम्बिका ६५
सर्वसंपत्तिलाभे तु श्यामलाङ्गी विचिन्त्यते।
नीला च मूकीकरणे पीता स्तम्भनकर्मणि ॥६६॥
आमूलमाब्रह्मबिलं ज्वलन्माणिक्यदीपवत्।
ये ध्यायन्ति महःपुञ्जं ते स्युः संसिद्धसिद्धयः ६७
एवं बहुप्रकारेण ध्यानभेदेन कुम्भज।

विभावयन्तः श्रीदेवीं भजन्ते महतीं श्रियम् ६८
प्राप्यते सद्भिरेवैषा नासद्भिस्तु कदाचन ।
यैस्तु तप्तं तपस्तीव्रं तैरेषात्मनि धीयते ॥ ६९ ॥
यस्य नो पश्चिमं जन्म स्वयं यो वा न शङ्करः ।
न तेन लभ्यते विद्या ललिता परमेश्वरी ॥७०॥
वंशे तु यस्य कस्यापि भवेदेष मनुर्यदि ।
तद्वंश्याः सर्व एव स्युर्मुक्तास्तृप्तास्तु कुम्भज॥७१
गुप्ताद्गुप्ततरैवैषा सर्वशास्त्रेषु निश्चिता ।
वेदाः समस्ताः शास्त्राणि वदन्ति ललितेश्वरीम्७२
इयमेवात्मविद्या स्यादियमेव परा गतिः ।
इयमेव महत्तीर्थमियमेव महत्फलम् ॥ ७३ ॥
इमां ध्यायन्ति मुनयो ध्यायन्तीमां च योगिनः ।
अर्चयन्ति सुरश्रेष्ठाः सर्वदा सर्वसिद्धिदाम् ॥७४॥
न प्राप्यते कुचारित्रैः कुत्सितैः कुटिलाशयैः ।
वेदबाह्यैर्वृथातर्कैर्वृथाविभ्रान्तबुद्धिभिः ॥ ७५ ॥
नष्टैरशीलैरुच्छिष्टैः कुलभ्रष्टैश्च निष्ठुरैः ।
दर्शनद्वेषिभिः पापशीलैराचारनिन्दकैः ॥ ७६ ॥

चार्वाकमतनिष्णातैर्गर्वितैः परदूषकैः ।
अनात्मज्ञैरनल्पेर्ष्यैः क्रोधनैर्गुरुबाधकैः ॥ ७७ ॥
उद्धतैरुद्धतालापैर्दाम्भिकैरतिमानिभिः ।
एतादृशानां मर्त्यानामियमत्यन्तदुर्लभा ।
कथंचिदपि लब्धापि विद्या तेषु पराङ्मुखी ॥७८॥
इति पृष्टं त्वयाख्यातं सर्वपूज्या मयेरिता ।
देवतानां च पूज्यत्वमस्याः प्रोक्तं घटोद्भव ॥७९॥
भण्डासुरवधायैषा प्रादुर्भूता चिदग्नितः ।
महात्रिपुरसुन्दर्या मूर्तिस्तेजोविजृम्भिता ॥ ८० ॥
कामाक्षी च विधात्रा तु प्रस्तुता ललितेश्वरी ।
ध्यायतः परया भक्त्या तां परां ललिताम्बिकाम् ८१
सदाशिवस्य मनसो लालनाल्ललिताभिधा ।
यद्यत्कृतवती कृत्यं तत्सर्वं विनिवेदितम् ॥ ८२ ॥
पूजाविधानमखिलं शास्त्रोक्तेनैव वर्त्मना ।
खण्डान्तरे वदिष्यामि तद्विलासं महाद्भुतम् ८३

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
श्रीललितोपाख्याने चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ काञ्चीमाहात्म्यवर्णनम् ॥

अगस्त्यः ।

अनाद्यनन्तमव्यक्तं व्यक्तानामादिकारणम् ।
आनन्दबोधैकरसं तन्महन्मन्महे महः ॥ १ ॥
अश्वानन महाप्राज्ञ वेदवेदान्तवित्तम ।
श्रुतमेतन्महापुण्यं ललिताख्यानमुत्तमम ॥ २ ॥
सर्वपूज्या त्वया प्रोक्ता त्रिपुरा परदेवता ।
पाशाङ्कुशधनुर्बाणपरिष्कृतचतुर्भुजा ॥ ३ ॥
तस्या यन्त्रमिति प्रोक्तं श्रीचक्रचक्रभूषणम् ।
नवावरणमीशानीश्रीपुरस्याधिदैवतम् ॥ ४ ॥
काञ्चीपुरे पवित्रेऽस्मिन्महीमण्डलमण्डने ।
केयं विभाति कल्याणी कामाक्षीत्यभिविश्रुता ५
द्विभुजा विद्युदुल्लासविलसत्तनुवल्लरी ।
अदृष्टपूर्वसौन्दर्या परज्योतिर्मयी परा ॥ ६ ॥
अगस्त्येनैवमुक्तः सन् परानन्दार्द्रतेक्षणः ।
ध्यायंस्तत्त्रैपुरं तेजो हयग्रीवो महामनाः ॥ ७ ॥
इति ध्यात्वा नमस्कृत्य तमगस्त्यमथाब्रवीत् ।

हयग्रीवः ॥

रहस्यं संप्रवक्ष्यामि लोपामुद्रापते शृणु ॥ ८ ॥
आद्या पुण्यपरा सा स्याच्चित्परा त्वादिकारणम् ।
अनाख्येति त्रयीप्रोक्तस्वरूपा तत्त्वचिन्तकैः ॥९॥
द्वितीया भूतले सिद्धा परा द्विभुजसंयुता ।
दक्षहस्ते योगमुद्रां वामहस्ते तु पुस्तकम् ॥१० ॥
बिभ्रती हिमकुन्देन्दुमुक्तासमवपुर्द्युतिः ।
परापरा तृतीया स्याद्बालार्कायुतसंमिता ॥ ११ ॥
सर्वाभरणसंयुक्ता दक्षहस्तधृताम्बुजा ।
वामोरुन्यस्तहस्ता च किरीटार्धेन्दुभूषणा ॥१२॥
पश्चाच्चतुर्भुजा जाता सा परा त्रिपुरारुणा ।
पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्करा ॥ १३ ॥
ललिता सैव कामाक्षी काञ्च्यां ख्यातिमुपागता ।
सरस्वतीरमागौर्यस्तामेवाद्यामुपासते ॥ १४ ॥

हयग्रीवः ।

रहस्यं संप्रवक्ष्यामि लोपामुद्रापते शृणु ।
नेत्रद्वयं महेशस्य काशीकाञ्चीपुरीद्वयम् ॥१५॥

विख्यातं वैष्णवं क्षेत्रं शिवसांनिध्यकारकम् ।
काञ्चीक्षेत्रे पुरा धाता सर्वलोकपितामहः ॥१६॥
श्रीदेवीदर्शनार्थाय तपस्तेपे सुदुष्करम् ।
आत्मैकध्यानयुक्तस्य तस्य व्रतवतो मुने ॥ १७ ॥
प्रादुरास पुरो लक्ष्मीः पद्महस्तपुरस्सरा ।
पद्मासने च तिष्ठन्ती विष्णुना जिष्णुना सह १८
सर्वशृङ्गारवेषाढ्या सर्वाभरणभूषिता ।
सिंहासनेश्वरी ख्याता सर्वलोकैकरक्षिणी ॥१९॥
तां दृष्ट्वाद्भुतसौन्दर्यां परज्योतिर्मयीं पराम् ।
आदिलक्ष्मीमितिख्यातां सर्वेषां हृदयस्थिताम् २०
यामाहुस्त्रिपुरामेव ब्रह्मविष्ण्वीशमातरम् ।
कामाक्षीति प्रसिद्धां तामस्तौपीत्पूर्णभक्तिमान् २१

ब्रह्मा ।

जय देवि जगन्मातर्जय त्रिपुरसुन्दरि ।
जय श्रीनाथसहजे जय श्रीसर्वमङ्गले ॥ २२ ॥
जयेशे करुणारासे जय शृङ्गारनायिके ।
जय विद्यैकसिद्धेशि वन्दनीयपदे शुभे ॥ २३ ॥

जयजय जगदम्ब नित्यरूपे
जयजय सन्नुतलोकसौख्यदात्रि ।
जयजय हिमशैलकीर्तनीये
जयजय शंकरकामवामनेत्रे ॥ २४ ॥
जगज्जन्मस्थितिध्वंसविधानानुग्रहान्मुहुः ।
या करोति स्वसंकल्पात्तस्यै देव्यै नमोनमः २५
वर्णाश्रमाणां सांकर्यकारिणः पापिनो जनान् ।
निहन्ति याऽतितीक्ष्णास्त्रैस्तस्यै देव्यै नमोनमः२६
नागमैश्च न वेदैश्च न शास्त्रैर्न च योगिभिः ।
न वेद्या या स्वसंवेद्या तस्यै देव्यै नमोनमः २७
रहस्याम्नायवेदान्तैस्तत्त्वविद्भिर्मुनीश्वरैः ।
परं ब्रह्मेति या ख्याता तस्यै देव्यै नमोनमः २८
हृदयस्थापि सर्वेषां या न केनापि दृश्यते ।
सूक्ष्मविज्ञानरूपायै तस्यै देव्यै नमोनमः ॥२९॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
यद्ध्यानैकपरा नित्यं तस्यै देव्यै नमोनमः ॥३०॥
पञ्चकारणकृत्येन्द्रा यदाज्ञामेव बिभ्रति ।

साम्राज्यसंपदीशायै तस्यै देव्यै नमोनमः ॥३१॥
वेदा निःश्वसितं यस्या वीक्षितं भूतपञ्चकम् ।
स्मितं चराचरं विश्वं तस्यै देव्यै नमोनमः ॥३२॥
सहस्रशीर्षा भोगीन्द्रो धरित्रीं तु यदाज्ञया ।
धत्ते सर्वजनाधारा तस्यै देव्यै नमोनमः ॥ ३३॥
ज्वलत्यग्निस्तपत्यर्को वातो वाति यदाज्ञया ।
ज्ञानशक्तिस्वरूपायै तस्यै देव्यै नमोनमः ॥३४॥
पञ्चविंशतितत्त्वानि मायाकञ्चुकपञ्चकम् ।
यन्मयं मुनयः प्राहुस्तस्यै देव्यै नमोनमः ॥३५॥
शिवशक्तीश्वराश्चैव शुद्धविद्यः सदाशिवः ।
यदुन्मेषविभेदाः स्युस्तस्यै देव्यै नमोनमः ॥३६॥
गुरुर्मन्त्रो देवता च प्रणवः प्राण एवच ।
या विराजति चिद्रूपा तस्यै देव्यै नमोनमः ३७
सर्वात्मनामन्तरात्मा परमानन्दरूपिणी ।
श्रीविद्येति स्मृता या तु तस्यै देव्यै नमोनमः ३८
दर्शनानि च सर्वाणि यद्गीतानि विदुर्बुधाः ।
तत्तन्नियमरूपायै तस्यै देव्यै नमोनमः ॥ ३९॥

या भाति सर्वलोकेषु मणिमन्त्रौषधात्मना।
तत्त्वोपदेशरूपायै तस्यै देव्यै नमोनमः ॥ ४० ॥
देशकालपदार्थात्मा यद्यद्वस्तु यथातथा।
तत्तद्रूपेण या भाति तस्यै देव्यै नमोनमः ॥४१॥
हेयप्रतिभटाकारा कल्याणगुणशालिनी।
विश्वोत्तीर्णेति विख्याता तस्यै देव्यै नमोनमः ४२
इति स्तुत्वा महादेवीं धाता लोकपितामहः।
भूयोभूयो नमस्कृत्य सहसा शरणं गतः ॥ ४३ ॥
संतुष्टा सा तदा देवी ब्रह्माणं प्रेक्ष्य संनतम्।
वरदा सर्वलोकानां वृणीष्व वरमित्यशात् ॥ ४४ ॥

ब्रह्मा।

भवत्या दर्शनेनैव कृतार्थोऽस्मि न संशयः।
तथापि प्रार्थये किंचिल्लोकानुग्रहकाम्यया ॥ ४५ ॥
कर्मभूमौ तु लोकेऽस्मिन्प्रायो मूढा इमे जनाः।
तेषामनुग्रहार्थाय नित्यं कुर्वत्र संनिधिम् ॥ ४६ ॥
तथेति तस्य तं कामं पूरयामास सा तदा।
अथ धाता पुनस्तस्या देव्यास्त्वर्धासनस्थितम् ४७

श्रीदेवीसोदरं नत्वा पुण्डरीकाक्षमच्युतम् ।
तत्सांनिध्यं सदा काञ्च्यां पूरयामास चादृतः ४८
ततस्तथा करिष्यामीत्यब्रवीच्च जनार्दनः ।
अथ तुष्टो जगद्धाता पुनः प्राह महेश्वरौ ॥ ४९ ॥
शिवोऽप्यत्रैव सांनिध्यं तव प्रीत्या करोत्विति ।
अथ श्रीत्रिपुरादक्षभागात्कामेश्वरः परः ॥ ५० ॥
ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ।
आविरास महादेवः साक्षाच्छृङ्गारनायकः ॥ ५१ ॥
ततः पुनः श्रीकामाक्षीभालनेत्रकटाक्षतः ।
किंचिद्विलासादुत्पन्ना महागौरी महोज्ज्वला ॥ ५२ ॥
सर्वशृङ्गारवेषाढ्या महालावण्यशेवधिः ।
अथ श्रीपुण्डरीकाक्षो ब्रह्मणा सह सादरः ॥ ५३ ॥
कारयामास कल्याणमादिस्त्रीपुंसयोस्तयोः ।
आखण्डलादयो देवा वसुरुद्रादिदेवताः ॥ ५४ ॥
मार्कण्डेयादिमुनयो वसिष्ठादिमुनीश्वराः ।
योगीन्द्राः सनकाद्याश्च नारदाद्याः सुरर्षयः ॥ ५५
वामदेवप्रभृतयो जीवन्मुक्ताः शुकादयः ।

यक्षकिंनरगन्धर्वसिद्धविद्याधरोरगाः ॥ ५६ ॥
गणाग्रणीर्महाशास्ता दुर्गाद्याश्चैव मातरः ।
या यास्तु देवताः प्रोक्तास्ताः सर्वाः परमेश्वरीम् ५७
भद्रासहविमानस्था नेमुः प्राञ्जलयस्तदा ।
मनसा निर्मितं धात्रा मध्ये नगरमद्भुतम् ॥५८॥
मन्दिरं परमेशान्या मनोहरतमं शुभम् ।
श्रीमता वासुदेवेन सोदरेण महेश्वरः ॥ ५९ ॥
तत्रोदपूर्वकं दत्तां महागौरीमुपेयिवान् ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपातह ॥ ६० ॥
दंपत्योर्जगतां पत्योः पाणिग्रहणमङ्गलम् ।
को वा वर्णयितुं शक्तो यदि जिह्वासहस्रवान् ६१
आदिश्रीमन्दिरस्यास्य वायुभागे महेशितुः ।
विस्तृतं भुवनश्रेष्ठं कल्पितं परमेष्ठिना ॥ ६२ ॥
श्रीगृहस्याग्निभागे तु विचित्रं विष्णुमन्दिरम् ।
इत्थं ता देवतास्तत्र तिस्रः संनिहिताः सदा ६३
यदा प्रदक्षिणीकृत्य तत्परं दंपती उभौ ।
प्राप्तौ संभावनागारं तदा विधिजनार्दनौ ॥६४॥

समुपागम्य सभ्यानां समस्तानां यथाविधि ।
सत्कारं वैदिकैर्मन्त्रैः कथयामासतुर्मुदा ॥ ६५ ॥
आद्यापि लक्ष्मीः सर्वेषां पुरतः परमेश्वरी ।
विरिञ्चिं दक्षिणेनाक्ष्णा वामेन हरिमैक्षत ॥ ६६॥
दृष्टिमात्रे तदा वाणी कमला ते उभे ततः ।
प्रादुर्भूते प्रभापुञ्जपञ्जरान्तरसंस्थिते ॥ ६७ ॥
श्रीदेवतां नमस्कृत्य बद्धाञ्जलिपुटे उभे ।
जय कामाक्षिकामाक्षीत्युच्चैः स्तुत्वा प्रणमतुः ६८
मूर्ते च गङ्गायमुने तत्र सेवार्थमागते ।
तिस्रः कोट्योऽर्धकोटी च याया तीर्थाधिदेवताः ६९
सेवार्थं त्रिपुराम्बायास्तास्ताः सर्वाः समागताः ।
तयोः कराभ्यामादाय चामरे भारतीश्रियोः ॥७०
श्रीदेवीमुपतस्थाते वीजयन्त्यौ यथोचितम् ।
अनर्घ्यरत्नखचितकिङ्किणीचितदोर्लते ॥ ७१ ॥
आदिश्रीनयनोत्पन्ने ते उभे भारतीश्रियौ ।
संवीक्ष्य सर्वजनता विशेषेण विसिस्मिये ॥७२॥
तदाप्रभृति कल्याणी कामाक्षीत्यभिधां दधौ ।

यदुच्चारणमात्रेण श्रीदेवी संप्रसीदति ॥ ७३ ॥
कामाक्षीति त्रयो वर्णाः सर्वमङ्गलहेतवः ।
अथ सा जगदीशानी वेदवेदाङ्गपारगैः ॥ ७४ ॥
विधौ नित्यं निषीदेति संदिदेश सरस्वतीम् ।
सापि वाणीश्वरी गङ्गाहस्ते निक्षिप्य चामरम् ७५
पश्यतां सर्वदेवानां विधातुर्मुखमाविशत् ।
इन्दिरा च महालक्ष्म्या संदिष्टा तुष्टया तथा ७६
ययौ नित्यनिवासाय विष्णोर्वक्षस्थलं मुदा ।
तदाज्ञां शिरसा धृत्वा रमा विष्णुश्च भक्तितः ७७
तावुभौ दंपती नत्वा महात्रिपुरसुन्दरीम् ।
प्रार्थयामासतुर्भूयस्तदावरणदेवताम् ॥ ७८ ॥
तथास्त्विति वरं दत्वा तयोस्त्रिपुरसुन्दरी ।
तदावरणदेवत्वं प्राप्तौ पद्माच्युतौ मुदा ॥ ७९ ॥
स्वपत्नीमुत्तरे स्थाप्य दक्षिणे स्थितवान्स्वयम् ।
अथोवाच महागौरीं महात्रिपुरसुन्दरी ॥ ८० ॥
वत्से त्वं नित्यमत्रैव वसतिं कुरु शोभने ।
कल्पयित्वा तदा गौरीं त्रिपुरा परमेश्वरी ॥ ८१ ॥

पश्यतां सर्वदेवानां तत्रैवान्तरधीयत ।
तत्र सापि महागौर्याः प्रतिबिम्बं मनोहरम् ८२
चकार दिव्यलोहेन महागौरीसमाकृति ।
तरुणारुणकह्लारसौन्दर्यचरणद्वयम् ॥ ८३ ॥
क्वणत्कनकमञ्जीरपिञ्जरीकृतपीठकम् ।
विद्युदुल्लासवसनमनोज्ञमणिमेखलम् ॥ ८४ ॥
रत्नकङ्कणकेयूरविराजितभुजद्वयम् ।
मुक्तावैडूर्यमाणिक्यनिवद्धोदरवन्धनम् ॥ ८५ ॥
विभ्राजमानमध्येन वलित्रितयशोभिना ।
जाह्नवीसरिदावर्तशोभिनाभिविभूपितम् ॥ ८६ ॥
पाटीरपङ्ककर्पूरकुङ्कुमालंकृतस्तनम् ।
आमुक्तमुक्तालंकारभासुरस्तनकञ्चुकम् ॥ ८७ ॥
विनोदेन कटीदेशलम्बमानकराम्बुजम् ।
माणिक्यशकलाबद्धमुद्रिकाभिरलंकृतम् ॥ ८८ ॥
दक्षहस्ताम्बुजासक्तस्निग्धोत्पलमनोहरम् ।
आकण्ठमाप्रपदीनैश्च दिव्याकल्पकदम्बकैः ॥८९॥
दीप्तभूषणरत्नांशुराजिराजितदिङ्मुखम् ।

तप्तहाटकसंक्लृप्तरत्नग्रीवोपशोभितम् ॥ ९० ॥
माङ्गल्यसूत्ररत्नांशुश्रोणिमन्थरकन्धरम् ।
पालीवतंसमाणिक्यताटङ्कपरिभूषितम् ॥ ९१ ॥
जपाविद्रुमलावण्यललिताधरपल्लवम् ।
दाडिमीफलबीजाभदन्तपङ्क्तिविराजितम् ॥ ९२ ॥
मन्दमन्दस्मितोल्लासिकपोलफलकोत्पलम् ।
औपम्यरहितोदारनासामणिमनोहरम् ॥ ९३ ॥
विकसत्तिलपुष्पश्रीविजयोद्यतनासिकम् ।
ईषदुन्मेषमधुरनीलोत्पलविलोचनम् ॥ ९४ ॥
प्रसूनचापचापश्रीललितभ्रूविलासितम् ।
अर्धेन्दुतुलिताधारपूर्णेन्दुरुचिराननम् ॥ ९५ ॥
सान्द्रसौरभसंपन्नकस्तूरीतिलकोज्ज्वलम् ।
मत्तालिमालाविलसदलकाढ्यमुखाम्बुजम् ॥९६॥
पारिजातप्रसूनस्रग्वाहिधम्मिल्लबन्धनम् ।
अनर्घ्यरत्नखचितमकुटाञ्चितमस्तकम् ॥ ९७ ॥
सर्वलावण्यवसतिभवनं विभ्रमश्रियः ।
शिवो विष्णुश्च तत्रत्याः समस्ताश्च महाजनाः ९८

बिम्बस्य तस्य देव्याश्च मर्मेदं जगदुस्तदा ।
अथ तद्बिम्बमीशानी स्वतश्चा प्रविवेशह ॥ ९९॥
अग्रतः सर्वदेवानामाश्चर्येण प्रपश्यताम् ।
बिम्बाकृत्यात्मना बिम्बे संप्रविश्य स्थितांच ताम् ॥
दृष्ट्वा भूयो नमस्कृत्य पुनः प्रार्थितवान्विधिः ।
पूर्णब्रह्ममहाशक्ते महात्रिपुरसुन्दरि ॥ १०१ ॥
श्रीकामाक्षीति विख्याते नमस्तुभ्यं शिवे परे ।
किंचिद्विज्ञापयाम्यम्ब शृणुष्व कृपया मम १०२
अत्रैव तु महागौर्या महेशस्योभयोरपि ।
श्रीदेवि नित्यकल्याणि विवाहः प्रतिवत्सरम् १०३
कर्त्तव्यो जगतामृद्ध्यै सेवायै च दिवौकसाम् ।
भूलोकेऽस्मिन्महादेवि विमूढा जनता अपि १०४
तां दृष्ट्वा भक्तितो नत्वा प्रयान्तु परमां गतिम् ।
तथेत्याकाशवाण्या तु ददौ तस्योत्तरं परा ॥१०५
विससर्ज च सर्वांस्तान्स्वनिकेतनिवृत्तये ।
तदद्भुततमं शीलं स्मृत्वा स्मृत्वा मुहुर्मुहुः १०६
तां नमस्कृत्य ते सर्वे ततो जग्मुर्यथागतम् ।

पितामहस्तु हृष्टात्मा मुकुन्देन शिवेन च १०७
सार्धं श्रीमन्दिरे तत्र मण्डपे तां निवेश्य च ।
आराध्य वैदिकैः स्तोत्रैः साष्टाङ्गं प्रणनाम सः१०८
अथाकाशगिरा देवी ब्रह्माणमिदमब्रवीत् ।
विष्णुं शिवं च स्वस्थाने समाधाय समहितः१०९
प्रतिसंवत्सरं तत्र सेवां कुरु दृढाशयः ।
स्वयं व्यक्तमिह श्रीश मित्रेशाम्बसमन्वितम् ११०
श्रीकामगिरिपीटं तु साक्षाच्छ्रीपुरमध्यगम् ।
वामभागे श्रितं लक्ष्म्या विष्णुनान्यत्र सेवितं१११
चिदानन्दाकाररूपं सर्वपीठाधिदैवतम् ।
अदृश्यमूर्ति सर्वाद्यमाराधय यथाविधि ॥११२॥
श्रीमनोहरनक्षत्रे कदलीनालिकेरकैः ।
अर्चिष्यन्ति मनुष्यास्तल्लोकानामभिवृद्धये ॥११३
इदानीं त्वं तदाभ्यर्च्य यथाविधि विधे मुदा ।
मदुक्तमखिलं कृत्वा निजलोकं तु पालय ॥११४॥
इत्युक्तो भगवान्ब्रह्मा तथा कृत्वा तदीरितम् ।
निक्षिप्य हृदि तां देवीं निजधाम जगाम सः ११५

इति ते तत्त्वतः प्रोक्तं कामाक्षीशीलमद्भुतम् ।
साक्षादेव महालक्ष्मीमिमां विद्धि घटोद्भव ११६
य इदं शृणुयान्नित्यं यश्चापि प्रयतः पठेत् ।
तस्य भुक्तिश्च मुक्तिश्च करस्था नात्र संशयः ११७
बृहस्पतिसमो बुद्ध्या सर्वविद्याधिपो भवेत् ।
आदिनारायणः श्रीमान्भगवान्भक्तवत्सलः ॥११८
तपसा तोषितः पूर्वं मयापि चिरकालतः ।
सारूप्यमुक्तिं कृपया दत्त्वा पुत्रस्य मे प्रभुः ११९
महात्रिपुरसुन्दर्या माहात्म्यं समुपादिशत् ।
तत्प्रसादादहं किंचिद्वच्मि वक्ष्ये नचान्यथा १२०
रहस्यमप्यवद्वक्ष्ये शृणु तत्त्वं समाहितः ।
न ब्रह्मा नच विष्णुर्वा न रुद्रश्च त्रयोप्यमी १२१
मोहिता मायया यस्यास्तुरीयस्तु रचेश्वरः ।
सदाशिवो न जानाति कथं प्राकृतदेवताः १२२
सदाशिवस्तु सर्वात्मा सच्चिदानन्दविग्रहः ।
अकर्तुमन्यथाकर्तुं शक्तो यस्या अनुग्रहात् १२३
सदेकचित्तदेवाहं मन्यमानो महेश्वरः ।

तन्मायामोहितो भूत्वा ह्यवशः शवतामगात् १२४
सैव कारणमेतेषामुत्पत्तौ च लयेऽपि च ।
किंचिदत्र विशेषोऽस्ति वक्तव्यांशेऽपि तच्छृणु १२५
ब्रह्मादीनां त्रयाणां च तुरीयस्त्वीश्वरः प्रभुः ।
चतुर्णामपि सर्वेषामादिकर्ता सदाशिवः ॥१२६॥
एतद्रहस्यं कथितं तस्याश्चरितमद्भुतम् ।
भूय एव प्रवक्ष्यामि सावधानमनाः शृणु १२७

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे ललितोपाख्याने पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## षट्त्रिंशोऽध्यायः ।

[ श्रीमत्त्रिपुरसुन्दर्या दशरथाय पुत्रवरदानम् ॥ ]

अगस्त्यः ॥

श्रीकामकोष्ठपीठस्था महात्रिपुरसुन्दरी ।
किं किं विलासमकरोत् कामाक्षीत्यपि विश्रुता १
श्रीकामाक्षीति सा देवी महात्रिपुरसुन्दरी ।
भूमण्डलस्थिता देवी किं करोति महेश्वरी ॥ २ ॥
एतस्याश्चरितं दिव्यं वद मे वदतां वर ।

हयग्रीवः ।

अत्र स्थितापि सर्वेषां हृदयस्था घटोद्भव ॥ ३ ॥
न तत्कर्मानुरूपं सा प्रदत्ते देहिनां फलम् ।
यत्किंचिद्वर्तते लोके सर्वमस्या विचेष्टितम् ॥ ४ ॥
किंचिच्चिन्तयते कश्चित्स्वच्छन्दं विदधात्यसौ ।
यस्या एवावतारास्तु त्रिपुराद्याश्च शक्तयः ॥ ५ ॥
इयमेव महालक्ष्मीः ससर्जात्र त्रयं पुरा ।
पुंसां त्रयाणामावासं शक्तीनां तिसृणामपि ॥ ६ ॥
एकस्मादण्डतो जातावम्बिकापुरुषोत्तमौ ।
श्रीविरिञ्ची ततोऽन्यस्मात्परस्माद्भारतीशिवौ ७
इन्दिरां योजयामास मुकुन्देन महेश्वरी ।
पार्वत्या परमेशानं सरस्वत्या पितामहम् ॥ ८ ॥
ब्रह्माणं सर्वलोकानां सृष्टिकार्ये न्ययुङ्क्त सा ।
वासुदेवं परित्राणे संहारे च त्रिलोचनम् ॥ ९ ॥
त्रयोऽपि च महालक्ष्मीं ध्यायन्तः सर्वदा मुदा ।
ब्रह्मलोके च वैकुण्ठे कैलासे च वसन्त्यमी ॥ १० ॥
कदाचित्पार्वती देवी कैलासशिखरे शुभे ।

विहरन्ती महेशस्य पिधानं नेत्रयोर्व्यधात् ॥११॥
चन्द्रसूर्यौ यतस्तस्य नेत्रे तस्माज्जगत्त्रयम् ।
अन्धकारावृतमभूदनेनस्कं समन्ततः ॥ १२ ॥
ततश्च सकला लोकास्त्यक्तदेवपितृक्रियाः ।
इतिकर्तव्यतामूढा न प्राज्ञायत किंचन ॥ १३ ॥
तद्दृष्ट्वा भगवान्रुद्रः पार्वतीमिदमब्रवीत् ।
त्वया पापं कृतं देवि मम नेत्रपिधानतः ॥ १४ ॥
ऋषयस्त्यक्ततपसो हतयज्ञाश्च वैदिकाः ।
सर्वं च वैदिकं कर्म त्वया नाशितमम्बिके ॥१५॥
तस्मात्पापस्य शान्त्यर्थं तपः कुरु सुदुष्करम् ।
गत्वा काश्यां व्रतं तत्र ।किंचित्कालं समाचर १६
पश्चात्काञ्चीपुरं गच्छेः कामाक्षी तत्र राजते ।
आराधय स्वयं नित्यां सर्वपापहरां शिवाम् ॥१७
तुलसीमग्रतः कृत्वा कम्पाकूले तपः कुरु ।
इत्यादिश्य महादेवस्तत्रैवान्तरधीयत ॥ १८ ॥
तथा कृतवती सापि भर्तुराज्ञानुवर्तिनी ।
चिरेण तपसा क्लिष्टामनन्यहृदयां शिवाम् ॥१९॥

अग्रत: कृतसांनिध्या कामाक्षी वाक्यमब्रवीत् ।
वत्से तपोभिरत्युग्रैस्तव प्रीतास्मि सुव्रते ॥ २० ॥
उन्मील्य नयने पश्चात्पार्वती स्वपुरः स्थिताम् ।
बालार्कायुतसंकाशां सर्वाभरणभूषिताम् ॥ २१ ॥
किरीटहारकेयूरकटकाद्यैरलंकृताम् ।
पाशाङ्कुशेक्षुकोदण्डचापबाणलसत्कराम् ॥ २२ ॥
किरीटमुकुटोल्लासिचन्द्ररेखाविभूषणाम् ।
विधातृहरिरुद्रेशसदाशिवपदप्रदाम् ॥ २३ ॥
सगुणं ब्रह्म यामाहुस्तथोत्तरपदाभिधाम् ।
प्रपञ्चद्वयनिर्माणकारणां च पराम्बिकाम् ॥ २४॥
तां दृष्ट्वाथ महाराज्ञीमानन्दाश्रुपरिप्लुता ।
पुलकाञ्चितसर्वाङ्गी हर्षेणोत्फुल्ललोचना ॥ २५ ॥
चण्डिका मङ्गलाद्यैश्च सहासस्वरवीजनैः ।
प्रणिपत्य च साष्टाङ्गं कृत्वाचैव प्रदक्षिणाम्॥२६॥
बद्धाञ्जलिपुटा भूयः प्रणता स्वैकरूपिणी ।
ननाम कृपया वीक्ष्य महात्रिपुरसुन्दरी ॥ २७ ॥
बाहुभ्यां संपरिष्वज्य सस्नेहमिदमब्रवीत् ।

वत्से लभस्व भर्तारं रुद्रं स्वस्थानसंस्थितम् ॥२८॥
लोके त्वमपि रक्षार्थं ममाज्ञामनुवर्तय ।
अहं त्वमिति को भेदस्त्वमेवाहं न संशयः ॥२९॥
किं पापं तव कल्याणि त्वं हि पापनिकृन्तनी ।
आमनन्ति च योगीन्द्रास्त्वामेव ब्रह्मरूपिणीम् ३०
लीलामात्रमिदं वत्से परलोकविडम्बनम् ।
इत्यूचुषीं महाराज्ञीमम्बिका सर्वमङ्गला ॥ ३१ ॥
भक्त्या प्रणम्य पश्यन्ती परां प्रीतिमुपाययौ ।
स्तुवन्त्यामेवं पार्वत्यां तदानीमेव सा परा ॥३२॥
प्रविष्टा हृदयं तस्याः प्रहृष्टाया महामुने ।
अथ विस्मयमापन्ना चिन्तयन्ती मुहुर्मुहुः ॥३३॥
स्वप्नः किमेष दृष्टो वा मया किमथवा भ्रमः ।
इत्थं विमृश्य परितः प्रेरयामास लोचने ॥३४॥
जया च विजया पश्चात्सख्यावालोक्य सस्मिते ।
प्रसन्नवदना सा तु प्रणते वदतिस्म सा ॥ ३५ ॥
एतावन्तमहं कालं कुत्रायाते युवां प्रिये ।
मया दृष्टा तु कामाक्षी युवां च किमपश्यतम् ३६

सख्यौ तु तद्वचः श्रुत्वा प्रहर्षोत्फुल्ललोचने ।
पुष्पाणि पूजनार्हाणि पुरतोऽस्या निधाय तु ३७
सत्यमेवाधुना दृष्टा ह्यावाभ्यामपि सा परा ।
न स्वप्नो न भ्रमो वापि साक्षात्ते हृदयं गता ३८
इत्युक्त्वा पार्श्वयोस्तस्या निषण्णे विनयानते ।
एकाम्रमूले भगवान्भवानीविरहार्तिमान् ॥ ३९॥
गौरीसंप्राप्तये दध्यौ कामाक्षीं नियतेन्द्रियः ।
तत्रापि कृतसांनिध्या श्रीविद्यादेवता परा ॥४०॥
आचष्ट कृपया तुष्टा ध्यायन्तं निश्चलं शिवम् ।
अलं ध्यानेन कंदर्पदर्पघ्न त्वं ममाज्ञया ॥ ४१ ॥
अङ्गीकुरुष्व कंदर्पं भूयो मच्छासने स्थिताम् ।
एकाम्रसंज्ञं मत्पीठमिहैव निवसन्सदा ॥ ४२ ॥
त्वमेवागत्य मत्प्रीत्यै संनिधौ मम सुव्रत ।
गौरीमनुगृहाण त्वं कम्पानीरनिवासिनी ॥ ४३॥
कामद्वयं त्यजेह्याशु योगजं तद्वियोगजम् ।
इत्युक्त्वान्तर्दधे तस्य हृदये परमा रमा ॥ ४४ ॥
शिवोऽप्युत्थाय सहसा धीरः संहृष्टमानसः ।

तस्या अनुग्रहं लब्ध्वा सर्वदेवनिषेवितः ॥ ४५ ॥
हृदि ध्यायंश्च तामेव महात्रिपुरसुन्दरीम् ।
यद्विलासात्समुत्पन्ना लयं यान्ति च यत्र वै ४६
जगच्चराचरं चैतत्प्रपञ्चद्वितयात्मकम् ।
भूषयन्तीं शिवाङ्कं यामनुकम्पार्द्रमानसाम् ॥ ४७
अङ्गीकृत्य तदा गौरीं वैवाहिकविधानतः ।
आदाय वृषमारुह्य कैलासशिखरं ययौ ॥ ४८ ॥
पुनरन्यन्महाप्राज्ञ समाकर्णय कुम्भज ।
आदिलक्ष्म्याः प्रभावं तु कथयामि तवानघ ४९
सभायां ब्रह्मणो जातु समवेतास्त्रिमूर्तयः ।
दिक्पालाश्च सुराः सर्वे सनकाद्याश्च योगिनः ५०
देवर्षयो नारदाद्या वसिष्ठाद्याश्च तापसाः ।
ते सर्वे सहितास्तत्र ब्रह्माणं च कपर्दिनम् ॥ ५१
द्वयोः पञ्चमुखत्वेन भेदेन विविदुस्तदा ।
अन्योन्यं पृष्टवन्तस्ते ब्रह्मा कः कश्च शंकरः ॥५२
तेषां संवदतां मध्ये क्षिप्रमन्तर्हितः शिवः ।
तदा पञ्चमुखो ब्रह्मासीनो नारायणस्तयोः ॥५३

उभयोरपि संवादस्तदा ब्रह्माणमब्रवीत् ।
अज मन्नाभिकमलाज्जातस्त्वं यन्ममात्मजः॥५४॥
सृष्टिकर्ता त्वहं ब्रह्मा नामसाधर्म्यतस्तथा ।
त्वं च रुद्रश्च मे पुत्रौ सृष्टिकर्तुमुभौ युवाम्॥ ५५
इति मायामोहितयोरुभयोरन्तरे सह ।
तयोश्च स्वस्य माहात्म्यमहं ब्रह्मेत्यदर्शयत् ॥ ५६
प्रादुरासीन्महाज्योतिस्स्तम्भरूपो महेश्वरः ।
ज्ञात्वैवैनं महेशानं विष्णुस्तूष्णीं ततः स्थितः॥५७
पञ्चवक्त्रस्ततो ब्रह्मा अमत्यैव समास्थितः ।
ब्रह्मणश्शिरसामूर्ध्वं ज्योतिश्चक्रमभूत्पुरः ॥ ५८ ॥
तन्मध्ये संस्थितो देवः प्रादुरासोमया सह ।
ऊर्ध्वमुत्क्षिप्य भूयस्तमवमत्य वचोऽब्रवीत् ॥ ५९
तन्निशम्य भृशं क्रोधमवाप त्रिपुरान्तकः ।
विष्णुमेवं तदालोक्य क्रोधेनैवाविकारतः ॥ ६० ॥
तयोरेव समुत्पन्नो भैरवः क्रोधसंयुतः ।
मूर्धानमेकं चिच्छेद नखेनैव तदा विधेः ॥ ६१ ॥
हाहेति तत्र सर्वेऽपि क्रन्दन्तश्च पलायिताः ।

अथ ब्रह्मकपालं तु नखलग्नं स भैरवः ॥ ६२ ॥
भूयोभूयो धुनोतिस्म तथापि न मुमोच तत् ।
तद्ब्रह्महत्यामुक्त्यर्थं चचार धरणीतले ॥ ६३ ॥
पुण्यक्षेत्राणि सर्वाणि गङ्गाद्याश्च महानदीः ।
न तु ताभिर्विमुक्तोऽभूत्कपाली ब्रह्महत्यया ॥ ६४
विषण्णवन्महादीनो निःश्रीक इव लक्षितः ।
चिरेण प्राप्तवान्काञ्चीं ब्रह्मणा पूर्वमुज्झिताम् ६५
तत्र भिक्षामटन्नित्यं सेवमानः परां श्रियम् ।
पञ्चतीर्थे प्रतिदिनं स्नात्वा भूलक्षणाङ्किते ॥६६॥
कंचित्कालं चकारोग्रं प्रभ्रान्त इव विह्वलः ।
काञ्चीक्षेत्रनिवासेन क्रमेण प्रयताशयः ॥ ६७ ॥
निर्धूतनिखिलातङ्कः श्रीदेवीं मनसा वहन् ।
उत्तरे सेवितुं लक्ष्म्या वासुदेवेन दक्षिणे ॥ ६८ ॥
श्रीकामकोष्ठमागत्य पुरस्तात्तस्य संस्थितः ।
आदिलक्ष्मीपदध्यानमाततान यतात्मवान् ॥६९॥
यथा दीपो निवातस्थो निस्तरङ्गो यथाम्बुधिः ।
तथान्तर्वायुरोधेन न चचालाऽचलेश्वरः ॥ ७० ॥

तैलधारावदाच्छिन्नामनवच्छिन्नभैरवः ।
वितेने शैलतनयानाथश्रीध्यानसंततिम् ॥ ७१ ॥
न ब्रह्मा नैव विष्णुर्वा न सिद्धः कपिलोपि वा ।
नान्ये च सनकाद्या वा मुनयो वा शुकादयः ७२
तथा समाधिनिष्ठायां न समर्थाः कथंचन ।
अथ श्रीभावयोगेन श्रीभावं प्राप्तवाञ्छिवः ॥ ७३
ततः प्रसन्ना श्रीदेवी प्रभामण्डलवर्तिनी ।
अर्धरात्रे पुरः स्थित्वा वाचं प्रोवाच वाङ्मयी ७४
श्रीकण्ठ सर्वपापघ्न किं पापं तव विद्यते ।
मद्रूपस्त्वं कथं देहः सेयं लोकविडम्बना ॥ ७५ ॥
श्रीभूते ब्रह्महत्यायाः क्षणान्मुक्तो भविष्यसि ।
इत्युक्त्वान्तर्दधे तत्र महासिंहासनेश्वरी ॥ ७६ ॥
भैरवोऽपि प्रहृष्टात्मा कृतार्थः श्रीविलोकनात् ।
निनाय तं निशाशेषं श्रीध्यानैकपरायणः ॥ ७७ ॥
प्रातः पञ्चमहातीर्थे स्नात्वा संध्यामुपास्य च ।
पुनःपुनर्धुनोतिस्म करलग्नं कपालकम् ॥ ७८ ॥
तथापि तत्तु नास्रंसत्स निर्वेदं परं गतः ।

स्वप्नः किमेष माया वा मानसीभ्रान्तिरेव वा ७९
मुहुरेवं विचिन्त्येशः सोऽभवद्व्याकुलाशयः ।
स्वयमेव निगृह्याथ शोकं धीराग्रणीः शिवः ॥ ८०
तुलसीमण्डलं नत्वा पूजयित्वा पुरः स्थितः ।
निगृहीतेन्द्रियग्रामः समाधिस्थोऽभवत्पुनः ॥८१॥
याममात्रे गते देवी पुनः सांनिध्यमागता ।
अलं समाधिना शंभो निमज्जात्र सरोजले ॥ ८२
इत्यादिश्य तिरोधत्त सोपि चिन्तामुपागमत् ।
इयं च माया स्वप्नो वा किं कर्तव्यं मयाथवा ८३
श्वोभूते ब्रह्महत्यायाः क्षणान्मुक्तो भविष्यसि ।
इत्युक्तं श्रीपरादेव्या मायातीतमिदं दिनम् ॥ ८४
एवं सर्वं च मिथ्यैवेत्यधिकं चिन्तया वृतः ।
भगवान्व्योमवाण्या तु निमज्जात्रेति गर्जितः ८५
अथ शङ्कां समुत्सार्य तत्त्वं निश्चित्य शंकरः ।
निममज्ज सरस्यां तु गङ्गायां पुनरुत्थितः ॥८६॥
तत्र काशीं समालोक्य किमेतदिति चिन्तयत् ।
स मुहूर्तं स्थितस्तूष्णीं नखलीनकपालकः ॥८७॥

ललाटंतपमुद्वीक्ष्य तरणिं तरुणेन्दुभृत् ।
भिक्षार्थं नगरीमेनां प्रविवेश वशी शिवः ॥ ८८॥
गृहाणि कानिचिद्गत्वा प्रतोल्यां पर्यटन्भवः ।
स पश्यदग्रतः कांचित्काञ्चीश्रीदेवताकृतिम् ॥८९
भिक्षां ज्योतिर्मयीं तस्मै दत्वा क्षिप्रं तिरोदधे ।
क्षणाद्ब्रह्मकपालं तत्प्रच्युतं तन्नखाग्रतः ॥ ९० ॥
तदृष्ट्वाद्भुतमीशानः कामाक्षीशीलमद्भुतम् ।
प्रसन्नवदनाम्भोजो बहु मेने मुहुः परम् ॥ ९१ ॥
परा काञ्चीपुरी रम्या पुण्या कम्पानदी परा ।
देवता सैव कामाक्षीत्यासीत्संभावना पुरः ॥ ९२
इत्थं देवीप्रभावेन विमुक्तः संकटाद्धरः ।
स्वस्थः स्वस्थानमगमच्छ्लाघ्यमानः परां श्रियम्९३
पुनरन्यं प्रवक्ष्यामि विलासं शृणु कुम्भज ।
प्रभावं श्रीमहादेव्याः कामदं शृण्वतां सदा ९४
अयोध्याधिपतिः श्रीमान्नाम्ना दशरथो नृपः ।
संतानरहितस्तिष्ठन्बहुकालं शुचाकुलः ॥ ९५ ॥
रहस्याहूय मतिमान्वसिष्ठं स्वपुरोहितम् ।

उवाचाचारसंशुद्धः सर्वशास्त्रार्थवेदिनम् ॥ ९६ ॥

दशरथः ।

हे नाथ बहवोऽतीताः समा नाद्यापि विद्यते ।
संततेर्मम संतापः संततं वर्धतेतराम् ॥ ९७ ॥
किं कृते मम संतानवृद्धिः स्यात्तन्निवेदय ।

वसिष्ठः ।

शृणु वंशं महाराज रहस्यं कथयामि ते ॥ ९८ ॥
अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
एताः पुण्यतमाः प्रोक्ताः पुरीणामुत्तमोत्तमाः ९९
अस्याः सान्निध्यमात्रेण महात्रिपुरसुन्दरीम् ।
अर्चयित्वा त्वयोध्यायाममुष्या अधिदेवताम् १००
नैतस्याः सदृशी काचिद्देवता विद्यतेऽपरा ।
एनामेवार्चयन्त्यन्याः सर्वाः श्रीदेवता नृप १०१
ब्रह्मविष्णुमहेशाद्याः सश्रीकाः सर्वदां सदा ।
नारिकेलफलालीभिः पनसैः कदलीफलैः ॥१०२॥
मध्वाज्यशर्कराप्राज्यैस्तथा पायसराशिभिः ।
सिद्धद्रव्यविशेषैश्च पूजयेत्त्रिपुराम्बिकाम् ॥१०३॥

अभीष्टमचिरेणैव संप्रदास्यति सैव ते ।
इत्युक्तवन्तमभ्यर्च्य गुरुमिष्टैरुपायनैः ॥ १०४ ॥
स्वेष्टसंप्राप्तये भूयो विससर्ज विशांपतिः ।
ततो गुरूक्तरीत्यैव ललितां परमेश्वरीम् ॥१०५॥
अर्चयामास राजेन्द्रो भक्त्या परमया युतः ।
एवं प्रतिदिनं पूजां विधाय प्रीतमानसः ॥१०६॥
अयोध्यादेवताधाम्नि शिश्ये तत्रैव संगतः ।
अर्धरात्रे व्यतीते तु निभृतोल्लासदीपके ॥१०७॥
किंचिन्निद्रालसस्यास्य पुरतस्त्रिपुराम्बिका ।
पाशाङ्कुशधनुर्बाणपरिष्कृतचतुर्भुजा ॥ १०८ ॥
सर्वशृङ्गारवेषाढ्या सर्वाभरणभूषिता ।
स्थित्वा वाक्यमुवाचेदं मन्दमिन्दुमतीसुतम् १०९
अस्ति पङ्क्तिरथ श्रीमन्पुत्रभाग्यं तवानघ ।
प्रविघातककर्माणि सन्ति पूर्वकृतानि ते ॥११०॥
तादृशां कर्मणां शन्त्यै गत्वा काञ्चीपुरं वरम् ।
स्नात्वा कम्पासरस्यां च तत्र मां पश्य पावनीम्
मध्येकाञ्चीपुरी मत्कं दहराकाशमध्यगम् ।

कामकोष्ठं विपाप्मापि सप्तद्वारबिलान्वितम् ११२
साम्राज्यसूचकं पुंसां त्रयाणामपि सिद्धिदम् ।
प्राङ्मुखी तत्र वर्तेऽहं महासिंहासेनश्वरी ॥ ११३
महालक्ष्मीस्वरूपेण द्विभुजा पद्मधारिणी ।
चक्रेश्वरी महाराज्ञी ह्यदृश्या स्थूलचक्षुषाम् ११४
ममाक्षजा महागौरी वर्तते मम दक्षिणे ।
सौन्दर्यसारसी या सा सर्वाभरणभूषिता ॥११५
मया तु कल्पितावासा द्विभुजा पद्मधारिणी ।
महालक्ष्मीस्वरूपेण किंवा कृत्यात्मना स्थिता ११६
आपीठान्मौलिपर्यन्तं पश्यतस्तां ममांशजाम् ।
पातकान्याशु नश्यन्ति किंपुनस्तूपपातकम् ११७
कुवासना कुबुद्धिश्च कुतर्कनिचयश्च यः ।
कुदेहश्च कुभावश्च नास्तिकत्वं लयं व्रजेत् ॥११८
कुरुष्व मे महापूजां सितामध्वाज्यपायसैः ।
विविधैर्भक्ष्यभोज्यैश्च पदार्थैः षड्रसान्वितैः ११९
तत्रैव सुप्रसन्नाहं पूरयिष्यामि ते वरम् ।
उपदिश्य च सम्राज्ञी दिव्यमूर्तिस्तिरोदधे ॥१२०

राजापि सहसोत्थाय किमेतदिति विस्मितः ।
देवीमुद्बोध्य कौसल्यां शुभलक्षणलक्षिताम् १२१
तस्यैतद्रात्रिवृत्तान्तं कथयामास सादरः ।
तत्समाकर्ण्य सा देवी संतोषमभजत्तदा ॥ १२२
प्राप्तहर्षो नृपः प्रातस्तया दयितया सह ।
आत्मनः सचिवोपेतः काञ्चीपुरमुपागमत् ॥१२३
स्नात्वा कम्पातरङ्गिण्यां दृष्ट्वा देवीं च पावनीम् ।
पञ्चतीर्थे ततः स्नात्वा देव्या कौसल्यया नृपः १२४
गोभूवस्त्रहिरण्याद्यैस्तत्तीर्थक्षेत्रवासिनः ।
प्रीणयित्वा सपत्नीकस्तान्नत्वा शक्तिपूजकान् १२५
अथालयं समाविश्य महाभक्त्या नृपोत्तमः ।
प्रदक्षिणत्रयं कृत्वा विनयेन समन्वितः ॥१२६॥
ततः संनिधिमागत्य देव्या कौसल्यया सह ।
श्रीकामकोष्ठनिलयां महात्रिपुरसुन्दरीम् ॥१२७॥
त्रिमूर्तिजननीमम्बां दृष्ट्वा श्रीचक्ररूपिणीम् ।
प्रणिपत्य च साष्टाङ्गं भार्यया सह भक्तिमान् १२८
स्वपुरे त्रैपुरे धाम्नि पुरेक्ष्वाकुप्रवर्तिते ।

दुर्वाससा सशिष्येण पूजार्थं पूर्वकल्पिते ॥१२९॥
दासीदासध्वजारोहमहोत्सवसमन्विते ।
तत्र स्वगुरुणोक्तं च कृत्वा स्वार्थपूजनं ॥ १३०
रात्रौ स्वप्ने तु यद्रूपं दृष्टवांस्त्रैपुरं महः ।
तदेवात्रापि संदध्यौ संनिधौ राजसत्तमः ॥ १३१
चिरं ध्यात्वा महाराजः सुवासांसि बहूनि च ।
दिव्यान्यायतनान्यस्यै दत्त्वा स्तोत्रं चकार ह १३२

पादाग्रलम्बपरमाभरणाभिरामे
मञ्जीररत्नरुचिमञ्जुलपादपद्मे ।
पीनाम्बरस्फुरितपेशलहेमकाञ्ची-
केयूरकङ्कणपरिष्कृतबाहुवल्ली ॥१३३॥

पुण्ड्रेक्षुचापविलसन्मृदुवामपाणे
रत्नोर्मिकासुमशरान्धृतदक्षहस्ते ।
वक्षोजमण्डलविलासिवलक्षहारे
पाशाङ्कुशाङ्गदलसद्भुजशोभिताङ्गि १३४

वक्त्रश्रिया विजितशारदचन्द्रबिम्बे
ताटङ्करत्नकरमण्डितगण्डभागे ।

वामे करेऽपि च कमण्डलुमादधाने
वक्षोजमण्डलविलासिवलक्षहारे १३५
माणिक्यसूत्रमणिभासुरकम्बुकण्ठि
ताटङ्करत्नकरमण्डितगण्डभागे ।
मन्दस्मितस्फुरणशालिनि मञ्जुनासे
नेत्रश्रिया विजितनीलसरोजपत्रे १३६
सुभ्रूलते सुवदने सुललाटचित्रे
योगीन्द्रमानससरोजनिवासहंसि ।
रत्नानुविद्धतपनीयमहाकिरीटे
सर्वाङ्गसुन्दरि समस्तसुरेन्द्रवन्द्ये १३७
काङ्क्षानुरूपवरदे करुणार्द्रचित्ते
साम्राज्यसंपदभिमानिनि चक्रनाथे ।
इन्द्रादिदेवपरिसेवितपादपद्मे
सिंहासनेश्वरि परे मयि संनिधेयाः १३८

इति स्तुत्वा स भूपालो बहिर्निर्गत्य भक्तितः ।
तस्यास्तु दक्षिणे भागे महागौरीं ददर्श ह ॥१३९
प्रणम्य दण्डवद्भूमौ कृत्वा चैनां स्तुतिं पुनः ।

दत्त्वा चास्यै महार्हाणि वासांसि विविधानि च ॥
अमूल्यानि परार्ध्यानि भूषणानि महान्ति च ।
ततः प्रदक्षिणीकृत्य निर्गत्य सह भार्यया ॥ १४१
स्वगुरूक्तविधानेन महापूजां विधाय च ।
तामेव चिन्तयंस्तत्र सप्तरात्रमुवास सः ॥१४२॥
अष्टमे दिवसे देवीं नत्वा भक्त्या विलोकयन् ।
अभीष्टं देहि देवीति प्रार्थयामास चेतसा १४३
सुप्रसन्ना च कामाक्षी सान्तरिक्षगिराऽवदत् ।
भविष्यन्ति मदंशास्ते चत्वारस्तनया नृप १४४
इत्युदीरितमाकर्ण्य प्रमोदविकसन्मुखः ।
श्रियं प्रणम्य साष्टाङ्गमनन्यशरणः पराम् १४५
आमन्त्र्य मनसैवाम्बां सस्त्रीकः सह मन्त्रिभिः ।
अयोध्यानगरीं प्रापदिन्दुमत्यास्तु नन्दनः ॥१४६
एवंप्रभवा कामाक्षी सर्वलोकहितैषिणी ।
सर्वेषामपि भक्तानां काङ्क्षितं पूरयत्यलम् ॥१४७॥
एवं लोकेषु बहवः कामाक्षीं परदेवताम् ।
उपास्य विधिवद्भक्त्या प्राप्ताः कामानशेषतः १४८

अद्यापि प्राप्नुवन्त्येव भक्तिमन्तः फलं मुने ।
अनेके च भविष्यन्ति कामाक्ष्याः करुणादृशा ॥
माहात्म्यमस्याः श्रीदेव्याः को वा वर्णयितुं क्षमः ।
नाहं न शम्भुर्न ब्रह्मा न विष्णुः किमुतापरे १५०
इति ते कथितं किंचित्कामाक्ष्याः शीलमुज्ज्वलम् ।
शृण्वतां पठतां चापि सर्वपापहरं स्मृतम् ॥ १५१

इति श्रीब्रह्मोत्तरखण्डे हयग्रीवागस्त्यसंवादे ललितोपाख्याने षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[ ॥ श्रीयन्त्रप्रकारोपासनादिकथनम् ॥ ]

अगस्त्यः ॥

कीदृशं यन्त्रमेतस्या मन्त्रो वा कीदृशो वरः ।
उपदेष्टा च कीदृग्वा शिष्यो वा कीदृशः स्मृतः १
सर्वज्ञस्त्वं हयग्रीव साक्षात्परमपूरुषः ।
स्वामिन्मयि कृपादृष्ट्या सर्वमेतन्निवेदय ॥ २ ॥

हयग्रीवः ।

यन्त्रं श्रीचक्रमेवास्याः सेयं हि त्रिपुराम्बिका ।

सैषैव हि महालक्ष्मीः स्फुरतामात्मनः पुरः ॥ ३
पश्यति स्म तदा चक्रं ज्योतिर्मयमजृम्भत ।
अस्य चक्रस्य माहात्म्यमपरिज्ञेयमेव हि ॥ ४ ॥
साक्षात्सैव महालक्ष्मीः श्रीचक्रं चेति तत्त्वतः ।
यदभ्यर्च्य महाविष्णुः सर्वलोकविमोहनम् ॥ ५ ॥
कामसंमोहिनीरूपं भेजे राजीवलोचनः ।
अर्चयित्वा तदीशानः सर्वविद्येश्वरोऽभवत् ॥६॥
तामाराध्य विशेषेण ब्रह्मा ब्रह्माण्डसूरभूत् ।
मुनीनां मोहनश्चासीत्स्मरो यद्वरिवस्यया ॥ ७ ॥
श्रीदेव्याः पुरतश्चक्रं हेमरौप्यादिनिर्मितम् ।
निधाय गन्धैरभ्यर्च्य षोडशाक्षरविद्यया ॥ ८ ॥
प्रत्यहं तुलसीपत्रैः पवित्रैर्मङ्गलाकृति ।
सहस्रं मूलमन्त्रेण श्रीदेवीध्यानसंयुतः ॥ ९ ॥
अर्चयित्वा च मध्वाज्यशर्करापायसैः शुभैः ।
अनवद्यैश्च नैवेद्यैर्माषापूपैर्मनोहरैः ॥ १० ॥
यः प्रीणाति महालक्ष्मीं मतिमान्मण्डलत्रयम् ।
सहसा तस्य सान्निध्यमाधत्ते परमेश्वरी ।

मनसो वाञ्छितं यच्च प्रसन्ना तत्प्रपूरयेत् ॥११॥
धवलैः कुसुमैश्चक्रमुक्तरीत्या तु योऽर्चयेत् ।
तस्यैव रसनारङ्गे नित्यं नृत्यति भारती ॥ १२ ॥
पाटलैः कुसुमैश्चक्रं योऽर्चयेदुक्तमार्गतः ।
सार्वभौमं च राजानं दासवद्वशयेदसौ ॥ १३ ॥
पीतवर्णैः शुभैः पुष्पैः पूर्ववत्पूजयेच्च यः ।
तस्य वक्षस्थले नित्यं साक्षाच्छ्रीर्वसति ध्रुवम् ॥१४
दुर्गन्धैर्गन्धहीनैश्च सुवर्णैरपि नार्चयेत् ।
सुगन्धैरेव कुसुमैर्गन्धैश्चाभ्यर्चयेच्छिवाम् ॥१५॥
कामाक्ष्येव महालक्ष्मीश्चक्रं श्रीचक्रमेव हि ।
श्रीविद्यैव पराविद्या नायको गुरुनायकः ॥ १६
एतस्या मन्त्रराजस्तु श्रीविद्यैव तपोधन ॥ १७ ॥
कामराजान्तमन्त्रान्ते श्रीबीजेन समन्विता ।
षोडशाक्षरविद्येयं श्रीविद्येति प्रकीर्तिता ॥ १८ ॥
इत्थं रहस्यमाख्यातं गोपनीयं प्रयत्नतः ।
तिसृणामपि मूर्तीनां शक्तिर्विद्येयमीरिता ॥१९॥
सर्वेषामपि मन्त्राणां विद्यैषा प्राणरूपिणी ।

पारंपर्येण विज्ञाता विद्येयं बन्धमोचनी ॥ २० ॥
संसारतापहरिणी जरामृत्युविनाशिनी ।
पूजिता दुःखदौर्भाग्यव्याधिदारिद्र्यनाशिनी ॥२१
स्तुता विघ्नौघशमनी ध्याता सर्वार्थसिद्धिदा ।
मुद्राविशेषतत्त्वज्ञा दीक्षाक्षपितकल्मषा ॥ २२ ॥
अर्चयन्परमेशानीमभीष्टफलमाप्नुयात् ।
धवलाम्बरसंवीतां धवलावासमध्यगाम् ॥ २३ ॥
पूजयेद्धवलैः पुष्पैर्ब्रह्मचर्ययुतो नरः ।
धवलैरेव नैवेद्यैर्दधिक्षीरौदनादिभिः ॥ २४ ॥
संकल्पधवलैर्वापि पूजयेत्परमेश्वरीम् ।
श्रीबालात्र्यक्षरीबीजैः क्रमात्खण्डेषु योजिताम् २५
षोडशाक्षरविद्यानामबहिर्मानसः शुचिः ।
अनुलोमविलोमेन प्रजपन्मातृकाक्षरैः ॥ २६ ॥
भावयन्नेव देवाग्रे श्रीदेवीं दीपरूपिणीम् ।
मनसोपांशुना वापि निगदेनापि तापस ॥ २७ ॥
श्रीदेवीन्याससहितः श्रीदेवीकृतविग्रहः ।
एकलक्षजपेनैव महापापैः प्रमुच्यते ॥ २८ ॥

लक्षद्वयेन देवर्षे सप्तजन्मकृतान्यपि ।
पापानि नाशयत्येव साधकस्य परा कला ॥२९॥
लक्षत्रितयजापेन सहस्रजनुपातकैः ।
मुच्यते नात्र संदेहो निर्मलो नितरां मुने ।
क्रमात्षोडशलक्षेण देवीसान्निध्यमाप्नुयात् ॥३०॥
पूजा त्रैकालिकी नित्यं जपस्तर्पणमेव च ।
होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ॥ ३१ ॥
होमतर्पणयोः स्वाहा न्यासपूजनयोर्नमः ।
मन्त्रान्ते पूजयेद्देवीं जपकाले यथास्थिताम् ॥ ३२
जपाद्दशांशं होमः स्यात्तद्दशांशं तु तर्पणम् ।
तद्दशांशं ब्राह्मणानां भोजनं विन्ध्यमर्दन ॥३३॥
देशकालोपघाते तु यद्यदङ्गं विहीयते ।
तत्संख्याद्विगुणं जप्त्वा पुरश्चार्यां समापयेत् ३४
ततः काम्यप्रयोगार्थं पुनर्लक्षत्रयं जपेत् ॥ ३५ ॥
व्रतस्थो निर्विकारश्च त्रिकालं पूजने रतः ।
पश्चाद्वश्यादिकर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ ३६
अभ्यर्च्य चक्रमध्यस्थो मन्त्री चिन्तयते यदा ।

सर्पमालानमरुणं साध्यमप्यरुणीकृतम् ॥ ३७ ॥
ततो भवति विन्ध्यारे सर्वसौभाग्यसुन्दरः ।
वल्लभः सर्वलोकानां वशयेन्नात्र संशयः ॥ ३८ ॥
रोचनाकुङ्कुमाभ्यां तु समभागं तु चन्दनम् ।
शतमष्टोत्तरं जप्त्वा तिलकं कारयेद्बुधः ॥ ३९ ॥
ततो यमीक्षते वक्ति स्पृशते चिन्तयेच्च यम् ।
अर्थेन च शरीरेण स वशं याति दासवत् ॥४०॥
तथा पुष्पं फलं गन्धं पानं वस्त्रं तपोधन ।
शतमष्टोत्तरं जप्त्वा यस्यै संप्रेष्यते स्त्रियै ।
सद्य आकृष्यते सा तु विमूढहृदया सती ॥४१॥
लिखेद्रोचनयैकान्ते प्रतिमामवनीतले ।
सुरूपां च सशृङ्गारवेषाभरणमण्डिताम् ॥ ४२ ॥
तद्भालगलहृन्नाभिजन्ममण्डलयोजिताम् ।
जन्मनाम महाविद्यामङ्कुशान्तर्विदर्भितम् ॥४३॥
सर्वाङ्गसंधिसंलीनमालिख्य मदनाक्षरम् ।
तदाशाभिमुखो भूत्वा त्रिपुरीकृतविग्रहः ॥ ४४ ॥
वध्वा तु क्षोभिणीं मुद्रां विद्यामष्टशतं जपेत् ।

संयोज्य दहनागारे चन्द्रसूर्यप्रभाकुले ॥ ४५ ॥
ततो विह्वलितापाङ्गीमनङ्गशरपीडिताम् ।
प्रज्वलन्मदनोन्मेषप्रस्फुरज्जघनस्थलाम् ॥ ४६ ॥
शक्तिचक्रे लसद्रश्मिवलनाकवलीकृताम् ।
पुरीकृतसुचारित्रविशालनयनाङ्कुशाम् ॥ ४७ ॥
आकृष्टनयनां नष्टधैर्यसंलीनजीविताम् ।
मन्त्रयन्त्रौषधमहामुद्रानिगडबन्धनाम् ॥ ४८ ॥
नवानुरागसंधानवेपमानहृदम्बुजाम् ।
मनोधिकमहामन्त्रपवमानाहतांशुकाम् ॥ ४९ ॥
विमूढामिव विक्षुब्धामिव सुप्तामिवाद्भुताम् ।
लिखितामिव निःसंज्ञामिव प्रमथितामिव ॥५०॥
निलीनामिव निश्चेष्टामिवान्यत्वं गतामिव ।
स्फुरन्मन्त्रानिलोद्धूतवेणुपत्राकृतिं च खे ॥ ५१ ॥
भ्रमन्तीं भावयेन्नारीं योजनानां शतादपि ॥५२॥
चक्रमध्यगतां पृथ्वीं सशैलवनकाननाम् ।
चतुःसमुद्रपर्यन्तं ज्वलन्तीं चिन्तयेत्ततः ॥ ५३ ॥
षण्मासाभ्यासयोगेन जायते मदनोपमः ।

दृष्ट्वाऽऽकर्षयते लोकं दृष्ट्वैव कुरुते वशम् ॥ ५४ ॥
दृष्ट्वा संक्षोभयेन्नारीं दृष्ट्वैव हरते विषम् ।
दृष्ट्वा करोति वागीशं दृष्ट्वा सर्वं विमोहयेत् ॥ ५५
दृष्ट्वा चातुर्थिकादींश्च ज्वरान्नाशयते क्षणात् ५६
पीतद्रव्येण लिखितं चक्रं गूढं तु धारयेत् ।
वाक्संभवादिना क्षिप्रं कुरुते नात्र संशयः ॥ ५७
महानीलीरसेनापि शत्रुनामयुतं लिखेत् ।
दक्षिणाभिमुखो वह्नौ दग्ध्वा मारयते रिपून् ५८
महिषाश्वपुरीषाभ्यां गोमूत्रैर्नाम टंकितम् ।
आरनालस्थितं चक्रं विद्वेषं कुरुते द्विषाम् ॥५९॥
युक्त्वा रोचनया नाम काकपक्षेण मध्यगम् ।
लम्बमानं तदाकाशे उच्चाटनकरं परम् ॥ ६० ॥
दुग्धलाक्षारोचनाभिर्महानीलीरसेन च ।
लिखित्वा धारयेच्चक्रं चातुर्वर्ण्यं वशं नयेत्॥६१॥
अनेनैव विधानेन जलमध्ये यदि क्षिपेत् ।
सौभाग्यमतुलं तस्य स्नानपानान्न संशयः ॥६२॥
चक्रमध्यगतं देशं नगरीं वा वराङ्गनाम् ।

ज्वलन्तीं चिन्तयेन्नित्यं सप्ताहात्क्षोभयेन्मुने ॥६३
लिखित्वा पीतवर्णं तु चक्रमेतद्यदाचरेत् ।
पूर्वाशाभिमुखो भूत्वा स जयेत्सर्ववादिनः ॥६४॥
सिन्दूरवर्णलिखितं पूजयेदुत्तरामुखः ।
यदा तदा च स्ववशो लोको भवति नान्यथा॥६५
चक्रं गैरिकयालिख्य पूजयेत्पश्चिमामुखः ।
यः स सर्वाङ्गनाकर्षवश्यक्षोभकरो भवेत् ॥६६॥
पूजयेद्विन्ध्यदर्पारे रहस्येकचरो गिरौ ।
अजरामरतां मन्त्री लभते नात्र संशयः ॥ ६७ ॥
रहस्यमेतत्कथितं गोपितव्यं महामुने ।
गोपनात्सर्वसिद्धिः स्याद्भ्रंश एव प्रकाशनात् ६८
अविधाय पुरश्चर्यां यः कर्म कुरुते मुने ।
देवताशापमाप्नोति नच सिद्धिं स विन्दति ॥ ६९
प्रयोगदोषनुत्यर्थं पुनर्लक्षं जेपद्बुधः ।
कुर्याच्च विधिवत्पूजां पुनर्योग्यो भवेन्नरः ॥७०॥
निष्कामो देवतां नित्यं योऽर्चयेद्भक्तिनिर्भरः ।
तामेव चिन्तयन्नास्ते यथाशक्ति मनुं जपन् ॥७१

सैव तस्यैहिकं भारं वहेन्मुक्तिं च साधयेत् ।
सदा संनिहिता तस्य सर्वं च कथयेत सा ॥७२॥
वात्सल्यसहिता धेनुर्यथा वत्समनुव्रजेत् ।
तथानुगच्छेत्सा देवी स्वभक्तं शरणागतम् ॥७३॥

अगस्त्यः ।

शरणागतशब्दस्य कोऽर्थो वद हयानन ।
वत्सं गौरिव यं गौरी धावन्तमनुधावति ॥ ७४

हयग्रीवः ॥

यः पुमानखिलं भारमैहिकामुष्मिकात्मकम् ।
श्रीदेवतायां निक्षिप्य सदा तद्गतमानसः ॥७५॥
सर्वानुकूलः सर्वत्र प्रातिकूल्यविवर्जितः ।
अनन्यशरणो गौरीं दृढं संप्रार्थ्य रक्षणे ॥७६॥
रक्षिष्यतीति विश्वासस्तत्सेवैकप्रयोजनः ।
वरिवस्यातत्परः स्यात्स एव शरणागतः ॥ ७७ ॥

यदाकदाचित्सति निन्दनादौ
निन्दन्ति लोकास्तनुमेव नो माम् ।
इति स्वरूपं सुधिया समीक्ष्य
विषादखेदं न भजेत्प्रपन्नः ॥ ७८ ॥

अनुकूलस्य संकल्पः प्रतिकूलस्य वर्जनम् ।
रक्षिष्यतीति विश्वासो.गोमृत्ववरणं तथा ॥ ७९
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ।
अङ्गीकृत्यात्मनिक्षेपः पञ्चाङ्गानीतराणि तु॥८०॥
नह्यस्य सदृशं किंचिद्भुक्तिमुक्त्योस्तु साधनम् ।
अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ८१
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥८२॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ८३ ॥
मयि चानन्यभावेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ ८४ ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतानि सर्वदा ज्ञानसाधनानि समभ्यसेत् ॥ ८५
तत्कर्मकृत्तत्परमस्तद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स याति परां श्रियम् ॥८६

गुरुस्तु मादृशो धीमान्ख्यातो वा नहि तापनः ।
शिष्योपि त्वादृशः प्रोक्तो रहस्याम्नायदेशिकैः ८७

इति श्रीब्रह्मोत्तरखण्डे हयग्रीवागस्त्यसंवादे ललितो-
पाख्याने सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

[ मुद्रालक्षणप्रकारादिकथनम् ॥ ]

अगस्त्यः ॥

मुद्राविरचनारीतिमश्वानन निवेदय ।
याभिर्विरचिताभिस्तु श्रीदेवी संप्रसीदति ॥ १ ॥

हयग्रीवः ॥

आवाहनी महामुद्रा त्रिखण्डेति प्रकीर्तिता ।
परिवृत्य करौ स्पष्टमङ्गुष्ठौ कारयेत्समौ ॥ २ ॥
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ।
कनिष्ठिके नियुञ्जीत निजस्थाने तपोधन ॥ ३ ॥
संक्षोभिण्याख्यमुद्रां तु कथयाम्यधुना शृणु ।
मध्यमे मध्यगे कृत्वा कनिष्ठाङ्गुष्ठरोधिते ।

तर्जन्यौ दण्डवत्कृत्वा मध्यमोपर्यनामिके ॥ ४॥
एतस्या एव मुद्राया मध्यमे सरले यदि ।
क्रियेते विन्ध्यदर्पारे मुद्रा विद्राविणी मता ॥५॥
मध्यमातर्जनीभ्यां तु मध्यगे कलशोद्भव ।
इयमाकर्षिणी मुद्रा त्रैलोक्याकर्षणक्षमा ॥ ६ ॥
पुटाकारौ करौ कृत्वा तर्जन्यावङ्कुशाकृती ।
परिवर्तक्रमेणैव मध्यगे तदधोगते ॥ ७ ॥
क्रमेणानेन देवर्षे मध्यगेमध्यगेऽनुजे ।
अनामिके तु सरले तद्बहिस्तर्जनीद्वयम् ॥ ८ ॥
दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमावर्तदेशगौ ।
मुद्रैषोन्मादिनी नाम्ना ख्याता वातापितापन॥९॥
अस्यास्त्वनामिकायुग्ममधःकृत्वाङ्कुशाकृति ।
तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ॥ १० ॥
इयं महाङ्कुशा मुद्रा सर्वकार्यार्थसाधिका ।
सव्यं दक्षिणदेशे तु दक्षिणं सव्यदेशतः ॥ ११ ॥
वा मोरूकृत्वा देवर्षे हस्तौ संपरिवर्त्य च ।
कनिष्ठानामिके युंक्त्वा क्रमेणानेन तापस ॥१२॥

तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे।
लोपामुद्रापतेऽङ्गुष्ठौ कारयेत्सकलावपि ॥ १३ ॥
इयं तु खेचरी नाम मुद्रा सर्वोत्तमोत्तमा।
एतद्विज्ञानमात्रेण योगिनीनां प्रियो भवेत् ॥१४॥
परिवर्त्य करौ स्पृष्टावर्धचन्द्रसमाकृती।
तर्जन्यङ्गुष्ठयुगुलं युगपद्योजयेत्ततः ॥ १५ ॥
अधःकनिष्ठावष्टब्धमध्यमे विनियोजयेत्।
अथैवं कुटिले योज्य सर्वाधस्तादनामिके ॥ १६ ॥
बीजमुद्रेयमचिरात्सर्वसिद्धिप्रवर्तिनी ॥ १७ ॥
मध्याग्रे कुटिलाकारे तर्जन्युपरि संस्थिते।
अनामिकामध्यगते तथैव हि कनिष्ठिके ॥ १८ ॥
सर्वा एकत्र संयोज्य चाङ्गुष्ठपरिपीडिताः।
एषा तु प्रथमा मुद्रा योनिमुद्रेति संस्थिता ॥१९॥
एता मुद्रास्तु देवर्षे श्रीदेव्याः प्रीतिहेतवः।
पूजाकाले प्रयोक्तव्या यथानुक्रमयोगतः ॥ २० ॥

इति श्रीब्रह्मोत्तरखण्डे हयग्रीवागस्त्यसंवादे ललितोपाख्यानेऽष्टत्रिंशोऽध्यायः ॥ ३८ ॥

## एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[देवीदर्शनदीक्षावर्णनम् ।]

अगस्त्यः ॥

अश्वानन महाप्राज्ञ करुणामृतवारिधे ।
श्रीदेवीदर्शने दीक्षा यादृशी तां निवेदय ॥ १ ॥

हयग्रीवः ।

यदि ते देवताभावो यया कल्मषकर्दमाः ।
क्षाल्यन्ते च तथा पुंसां दीक्षामाचक्ष्महेऽत्र तां २
हस्ते शिवपुरं ध्यात्वा जपेन्मूलाङ्कमालिनीम् ।
गुरुः स्पृशेच्छिष्यतनुं स्पर्शदीक्षेयमीरिता ॥ ३ ॥
निमील्य नयने ध्यात्वा श्रीकामाक्षीं प्रसन्नधीः ।
सम्यक्पश्येद्गुरुः शिष्यं दृग्दीक्षा सेयमुच्यते ॥४॥
गुरोरालोकमात्रेण भाषणात्स्पर्शनादपि ।
सद्यः संजायते ज्ञानं सा दीक्षा शांभवी मता ५
देव्या देहो यथा प्रोक्तो गुरुदेहस्तथैव च ।
तत्प्रसादेन शिष्योऽपि तद्रूपः संप्रकाशते ॥ ६ ॥
चिरं शुश्रूषया सम्यक्तोषितो देशिकेश्वरः ।

तूष्णीं संकल्पयेच्छिष्यं सा दीक्षा मानसी मता ७
दीक्षाणामपि सर्वासामियमेवोत्तमोत्तमा ।
आदौ कुर्यात्क्रियादीक्षां तत्प्रकारः प्रवक्ष्यते ॥ ८
शुक्लपक्षे शुभदिने विधेयः शुद्धमानसः ।
जिह्वास्यमलशुद्धिं च कृत्वा स्नात्वा यथाविधि ९
संध्याकर्म समाप्याथ गुरुदेहे परां स्मरन् ।
एकान्ते निवसन्श्रीमान्मौनी च नियताशनः १०
गुरुश्च तादृशो भूत्वा पूजामन्दिरमाविशेत् ।
देवीसूक्तेन संयुक्तं विद्यान्यासं समातृकम् ॥११॥
कृत्वा पुरुषसूक्तेन षोडशैरुपचारकैः ।
आवाहनासने पाद्यमर्घ्यमाचमनं तथा ॥ १२ ॥
स्नानं वस्त्रं च भूषां च गन्धः पुष्पं तथैव च ।
धूपदीपौ च नैवेद्यं ताम्बूलं च प्रदक्षिणाम् ॥ १३
प्रणामश्चेति विख्यातैः प्रीणयेत्त्रिपुराम्बिकाम् ।
अथ पुष्पाञ्जलिं दद्यात्सहस्राक्षरविद्यया ॥ १४॥

"ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐनमस्त्रिपुरसुन्दरि हृदये देवि शिरो देवि शिखा देवि कवचे

देवि नेत्रे देवि अस्त्रे देवि कामेश्वरि भगमालिनि नित्यक्लिन्ने भेरुण्डे वह्निवासिनि महावज्रेश्वरि विद्येश्वरि परशिवदूति त्वरिते कुलसुन्दरि नित्ये नीलपताके विजये सर्वमङ्गले ज्वालामालिनि चित्रे महानित्ये परमेश्वरि मित्रीशमयि षष्ठीशमय्युड्याणमयि चर्यानाथमयि लोपामुद्रामय्यगस्त्यमयि कालतापनमयि धर्माचार्यमयि मुक्तकेशीश्वरमयि दीपकलानाथमयि विष्णुदेवमयि प्रभाकरदेवमयि तेजोदेवमयि मनोजदेवमयि अणिमासिद्धे महिमासिद्धे गरिमासिद्धे लघिमासिद्धे ईशित्वसिद्धे वशित्वसिद्धे प्राप्तिसिद्धे प्राकाम्यसिद्धे रससिद्धे मोक्षसिद्धे ब्राह्मि माहेश्वरि कौमारि वैष्णवि वाराहि इन्द्राणि चामुण्डे महालक्ष्मि सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्ववशंकरि सर्वोन्मादिनि सर्वमहाङ्कुशे सर्वखेचरि सर्वबीजे सर्वयोनि सर्वत्रिखण्डिनि त्रैलोक्यमोहनचक्रस्वामिनि प्रकटयोगिनि बौद्धदर्शनाङ्गि कामाकर्षिणि बुद्ध्याकर्षिण्यहंकाराकर्षिणि शब्दाकर्

स्पर्शाकर्षिणि रूपाकर्षिणि रसाकर्षिणि गन्धाकर्षिणि चित्ताकर्षिणि धैर्याकर्षिणि स्मृत्याकर्षिणि नामाकर्षिणि बीजाकर्षिण्यात्माकर्षिण्यमृताकर्षिणि शरीराकर्षिणि गुप्तयोगिनि सर्वाशापरिपूरकचक्रस्वामिन्यनङ्गकुसुमेऽनङ्गलेखेऽनङ्गमदनेऽनङ्गमदनातुरेऽनङ्गरेखेऽनङ्गवेगिन्यनङ्गाङ्कुशेऽनङ्गमालिनि गुप्ततरयोगिनि वैदिकदर्शनाङ्गि सर्वसंक्षोभकारकचक्रस्वामिनि पूर्वाम्नायाधिदेवते सृष्टिरूपे सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्वाह्लादिनि सर्वसंमोहिनि सर्वस्तम्भिनि सर्वजृम्भिणि सर्ववशंकरि सर्वरञ्जिनि सर्वोन्मादिनि सर्वार्थसाधिके सर्वसंपत्प्रपूरणि सर्वमन्त्रमयि सर्वद्वन्द्वक्षयकरि संप्रदाययोगिनि सौरदर्शनाङ्गि सर्वसौभाग्यदायकचक्रे सर्वसिद्धिप्रदे सर्वसंपत्प्रदे सर्वप्रियंकरि सर्वमङ्गलकारिणि सर्वकामप्रदे सर्वदुःखविमोचनि सर्वमृत्युप्रशमनि सर्वविघ्ननिवारिणि सर्वाङ्गसुन्दरि सर्वसौभाग्यदायिनि कुलोत्तीर्णयोगिनि सर्वार्थसाधकचक्रे सर्वज्ञे

सर्वशक्ते सर्वैश्वर्यफलप्रदे सर्वज्ञानमयि सर्वव्या-
धिनिवारिणि सर्वाधारस्वरूपे सर्वपापहरे सर्वा-
नन्दमयि सर्वरक्षास्वरूपिणि सर्वेप्सितप्रदे निग-
र्भयोगिनि वैष्णवदर्शनाङ्गि सर्वरक्षाकरचक्रस्थे द-
क्षिणाम्नायेशि स्थितिरूपे वशिनि कामेशि मोदिनि
विमलेऽरुणे जयिनि सर्वेश्वरि कौलिनि रहस्ययोगि-
नि शाक्तदर्शनाङ्गि सर्वरोगहरचक्रेशि पश्चिमाम्ना-
येशि धनुर्बाणपाशाङ्कुशदेवते कामेशि वज्रेशि भ-
गमालिन्यतिरहस्ययोगिनि शैवदर्शनाङ्गि सर्व-
सिद्धिप्रदचक्रगे उत्तराम्नायेशि संहाररूपे शुद्धपरे
बिन्दुपीठगते महात्रिपुरसुन्दरि परापरातिरहस्य-
योगिनि शाम्भवदर्शनाङ्गि सर्वानन्दमयचक्रेशि
त्रिपुरे त्रिपुरेशि त्रिपुरसुन्दरि त्रिपुरवासिनि त्रि-
पुराश्रीत्रिपुरमालिनि त्रिपुरसिद्धे त्रिपुराम्बे सर्व-
चक्रस्थेऽनुत्तराम्नायाख्यस्वरूपे महात्रिपुरभैरवि
चतुर्विधगुणरूपे कुले अकुले कलाकले महाकौ-
लिनि सर्वोत्तरे सर्वदर्शनाङ्गि नवासनस्थिते नवा-
क्षरि नवमिथुनाकृते महेशमाधवविधातृमन्मथ-

स्कन्दनन्दीन्द्रमनुचन्द्रकुबेरागस्त्ये दुर्वासःक्रोधभ-
ट्टारकविद्यात्मिके कल्याणतत्त्वत्रयरूपे शिवशि-
वात्मिके पूर्णब्रह्मशक्ते महापरमेश्वरि महात्रिपुर-
सुन्दरि तव श्रीपादुकां पूजयामि नमः ॥ कए-
ईलह्रीं हसकहलह्रीं सकलह्रीं ऐं क्लीं सौः सौः
क्लीं ऐं श्रीं ॥"

देव्याः पुष्पाञ्जलिं दद्यात्सहस्राक्षरविद्यया ।
नोचेत्तत्पूजनं व्यर्थमित्याहुर्वेदवादिनः ॥ १५ ॥
ततो गोमयसंलिप्ते भूतले द्रोणशालिभिः ।
तावद्भिस्तण्डुलैः शुद्धैः शस्तार्णैस्तत्र नूतनम् ॥१६॥
द्रोणोदपूरितं कुम्भं पञ्चरत्नैर्नवैर्युतम् ।
न्यग्रोधाश्वत्थमाकन्दजम्बूदुम्बरशाखिनाम् १७
त्वग्भिश्च पल्लवैश्चैव प्रक्षिप्तैरधिवासितम् ।
कुम्भाग्रे निक्षिपेत्पक्वं नारिकेलफलं शुभम् ॥१८॥
अभ्यर्च्य गन्धपुष्पाद्यैर्धूपदीपादि दर्शयेत् ।
श्रीचिन्तामणिमन्त्रं तु हृदि मातृकया जपेत् १९
कुम्भं स्पृशन्श्रीकामाक्षीरूपीकृतकलेवरम् ।

अष्टोत्तरशते जाते पुनर्दीपं प्रदर्शयेत् ॥ २० ॥
शिष्यमाहूय रहसि वाससा बद्धलोचनम् ।
कारयित्वा प्रणामानां सत्रष्टाङ्गानां त्रयं गुरुः २१
पुष्पाणि तत्करे दत्त्वा कारयेत्कुसुमाञ्जलिम् ।
श्रीनाथे करुणाराशे परंज्योतिर्मयीश्वरि ॥ २२ ॥
प्रसूनाञ्जलिरेषा ते निक्षिप्ता चरणाम्बुजे ।
परं धाम परं ब्रह्म मम त्वं परदेवता ॥ २३ ॥
अद्यप्रभृति मे पुत्रान्रक्ष मां शरणागतम् ।
इत्युक्त्वा गुरुपादाब्जे शिष्यो मूर्धैव धारयेत् २४
जन्मान्तरसुकृतवशान्न्यस्तेमे शिरसिपादुकेगुरुणा
कमलासनमुरशासनपुरशासनसेवया लभ्यः २५
इत्युक्त्वा भक्तिभरितः पुनरुत्थाय शान्तिमान् ।
वामपार्श्वे गुरोस्तिष्ठेन्मानी सन्विनयान्वितः २६
ततस्तं बीजया प्रोक्ष्य वामभागे निवेदयेत् ।
विमुच्य चात्र बन्धं तु दर्शयेदर्चनक्रमम् ॥२७॥
सिताम‍ध्वाज्यकदलीफलपायसरूपकम् ।
महात्रिपुरसुन्दर्या नैवेद्यमिति चादिशेत् ॥ २८ ॥

षोडशार्णं मनुं तस्य वदेद्वामश्रुतौ शनैः ।
ततो बहिर्विनिर्गत्य स्थाप्य दार्वासने शुचौ ॥ २९
निवेश्य प्राङ्मुखं तत्र पट्टवस्त्रसमावृते ।
शिष्यं श्रीकुम्भसलिलैरभिषिञ्चेत्समन्त्रकम् ॥ ३०
पुनः शुद्धोदकैः स्नात्वा वासांसि परिगृह्य च ।
अष्टोत्तरशतं मन्त्रं जप्त्वा निद्रामथाविशेत् ॥३१॥
शुभे दृष्टे सति मुखे पुण्ये यो योग्य उत्तमः ।
दुःस्वप्ने तु जपं कुर्यादष्टोत्तरसहस्रकम् ॥ ३२ ॥
कारयेत्त्रिपुराम्बायाः सपर्यामुक्तमार्गतः ।
यदा न दृष्टः स्वप्नोपि तदा सिद्धिश्चिरात्क्रमात् ३३
स्वीकुर्यात्परया भक्त्या देवीशेषं कलाधिकम् ।
सद्य एव स शिष्यः स्यात्पङ्क्तिपावनपावनः ॥३४
शरीरमर्थं प्राणं च तस्मै श्रीगुरवे दिशेत् ।
तदधीनश्चरेन्नित्यं तद्वाक्यं नैव लङ्घयेत् ॥ ३५ ॥
यः प्रसन्नः क्षणार्धेन मोक्षलक्ष्मीं प्रयच्छति ।
दुर्लभं तं विजानीयाद्गुरुं संसारतारकम् ॥ ३६ ॥
गुकारस्यान्धकारोऽर्थो रुकारस्तन्निरोधकः ।

अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥ ३७ ॥
बोधरूपं गुरुं प्राप्य न गुर्वन्तरमादिशेत् ।
गुरूक्तं परुषं वाक्यमाशिषं परिचिन्तयेत् ॥३८॥
लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च ।
आददीत यतो ज्ञानं पूर्वं तमभिवादयेत् ॥ ३९ ॥
एवं दीक्षात्रयं कृत्वा विधेयं बोधयेत्पुनः ॥४०॥
गुरुभक्तिस्तदाचारस्तद्द्रोहस्तत्र पातकम् ।
तदन्यस्मरणं मुक्तिर्यावद्देहमयं क्रमः ॥ ४१ ॥
यत्पापं समवाप्नोति गुर्वग्रेऽनृतभाषणात् ।
गोब्राह्मणवधं कृत्वा न तत्पापं समाश्रयेत् ॥ ४२
ब्रह्मादिस्तम्बपर्यन्तं यस्य मे गुरुसंततिः ।
तस्य मे सर्वपूज्यस्य को न पूज्यो महीतले ॥४३॥
इति सर्वानुकूलो यः स शिष्यः परिकीर्तितः ४४
शीलादिविमलानेकगुणसंपन्नभावनः ।
गुरुशासनवर्तित्वाच्छिष्य इत्यभिधीयते ॥ ४५
जपाच्छ्रान्तः पुनर्ध्यायेद्ध्यानाच्छ्रान्तः पुनर्जपेत् ।
जपध्यानादियुक्तस्य क्षिप्रं मन्त्रः प्रसिद्ध्यति ॥४६

यथा ध्यानस्य सामर्थ्यात्कीटोपि भ्रमरायते ।
तथा समाधिसामर्थ्याद्ब्रह्मीभूतो भवेन्नरः ॥ ४७
यथा निमीलिते काले प्रपञ्चो नैव दृश्यते ।
तथैवोन्मीलने चेत्स्यादेतद्ध्यानस्य लक्षणम् ॥ ४८
विदिते तु परे तत्त्वे वर्णातीते ह्यविक्रिये ।
किंकरत्वं च गच्छन्ति मन्त्रा मन्त्राधिपैः सह ४९
आत्मैक्यभावनिष्ठस्य या चेष्टा सा तु दर्शनम् ।
योगस्तपः स तन्मन्त्रस्तद्ध्यानं यन्निरीक्षणम् ॥५०
देहाभिमाने गलिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ ५१॥
यः पश्येत्सर्वगं शान्तमानन्दात्मानमद्वयम् ।
न तस्य किंचिदाप्तव्यं ज्ञातव्यं वावशिष्यते ॥५२
पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः ।
जपकोटिसमं ध्यानं ध्यानकोटिसमो लयः॥५३॥
देहो देवालयः प्रोक्तो जीव एव महेश्वरः ।
त्यजेदज्ञाननिर्माल्यं सोहंभावेन योजयेत् ॥ ५४ ॥
तुषेण बद्धो व्रीहिः स्यात्तुषाभावे तु तण्डुलः ।

पाशबद्धः स्मृतो जीवः पाशमुक्तो महेश्वरः॥५५॥
आकाशे पक्षिजातीनां जलेषु जलचारिणाम् ।
यथा गतिर्न दृश्येत महावृत्तं महात्मनाम् ॥५६॥
नित्यार्चनं दिवा कुर्याद्रात्रौ नैमित्तिकार्चनम् ।
उभयोः काम्यकर्म स्यादिति शास्त्रस्य निश्चयः ५७
कोटिकोटिमहादानात्कोटिकोटिमहाव्रतात् ।
कोटिकोटिमहायज्ञात्परा श्रीपादुकास्मृतिः ॥५८॥
ज्ञानतोऽज्ञानतो वापि यावद्देहस्य धारणम् ।
तावद्वर्णाश्रमाचारः कर्तव्यः कर्ममुक्तये ॥ ५९ ॥
निर्गतं यद्गुरोर्वक्त्रात्सर्वशास्त्रं तदुच्यते ।
निषिद्धमपि तत्कुर्याद्गुर्वाज्ञां नैव लङ्घयेत् ॥ ६० ॥
जातिविद्याधनाढ्यो वा दूरे दृष्ट्वा गुरुं मुदा ।
दण्डप्रणामं कृत्वैकं त्रिःप्रदक्षिणमाचरेत् ॥ ६१ ॥
गुरुबुद्ध्या नमेत्सर्वं दैवतं तृणमेव वा ।
नमेच्च देवबुद्ध्या तु प्रतिमा लोहमृन्मयीः॥ ६२ ॥
गुरुं हुंकृत्य त्वंकृत्य विप्रं वादैर्विजित्य च ।
विकल्प्य गुह्यशास्त्राणि भवन्ति ब्रह्मराक्षसाः ६३

अद्वैतं भावयेन्नित्यं नाद्वैतं गुरुणा सह ।
न निन्देदन्यसमयान्वेदशास्त्रागमादिकान् ॥६४॥
एकग्रामस्थितः शिष्यस्त्रिसंध्यं प्रणमेद्गुरुम् ।
क्रोशमात्रस्थितो भक्त्या गुरुं प्रतिदिनं नमेत् ६५
अर्धयोजनगः शिष्यः प्रणमेत्पञ्चपर्वसु ।
एकयोजनमारभ्य योजनद्वादशावधि ॥ ६६ ॥
न तद्योजनसंख्यातमासेषु प्रणमेद्गुरुम् ।
अतिदूरस्थितः शिष्यो यदेच्छा स्यात्तदा व्रजेत्६७
रिक्तपाणिस्तु नोपेयाद्राजानं देवतां गुरुम् ।
फलपुष्पाम्बरादीनि यथाशक्ति समर्पयेत् ॥६८॥
मनुष्यचर्मणा बद्धः साक्षात्परशिवः स्वयम् ।
सच्छिष्यानुग्रहार्थाय गूढं पर्यटति क्षितौ ॥६९॥
सद्भक्तरक्षणायैव निराकारोऽपि साकृतिः ।
शिवः कृपानिधिर्लोके संसारीव हि चेष्टते ॥७०॥
अत्रिनेत्रः शिवः साक्षादचतुर्बाहुरच्युतः ।
अचतुर्वदनो ब्रह्मा श्रीगुरुः परिकीर्तितः ॥ ७१ ॥
श्रीगुरुं परतत्त्वाख्यं तिष्ठन्तं चक्षुरग्रतः ।
भाग्यहीना न पश्यन्ति सूर्यमन्धा इवोदितम् ७२

उत्तमा तत्त्वचिन्ता स्याज्जपचिन्ता तु मध्यमा ।
अधमा शास्त्रचिन्ता स्याल्लोकचिन्ताधमाधमा ७३
नास्ति गुर्वधिकं तत्त्वं नास्ति ज्ञानाधिकं सुखम् ।
नास्ति भक्त्यधिका पूजा नहि मोक्षाधिकं फलम् ७४
सर्ववेदेषु शास्त्रेषु ब्रह्मविष्णुशिवादिषु ।
तत्रतत्रोच्यते शब्दैः श्रीकामाक्षी परात्परा ॥७५॥
शचीन्द्रौ रोहिणीचन्द्रौ स्वाहाग्नी वाक्पितामहौ ।
लक्ष्मीनारायणौ वाणीधातारौ गिरिजाशिवौ ७६
त्विडग्नी बिन्दुनादौ च तथा प्रकृतिपूरुषौ ।
आधाराधेयनामानौ भोगमोक्षौ तथैवच ।
प्राणापानौ च शब्दार्थौ तथा विधिनिषेधकौ ७७
सुखदुःखादि यद्द्वन्द्वं दृश्यते श्रूयतेऽपि वा ।
सर्वलोकेषु तत्सर्वं परं ब्रह्म न संशयः ॥ ७८ ॥
उत्तीर्णमपरं ज्योतिः कामाक्षीनामकं विदुः ।
यदेव नित्यं ध्यायन्ति ब्रह्मविष्णुशिवादयः ॥ ७९
इत्थं हि शाक्तमार्गेऽस्मिन्यः पुमानिह वर्तते ।
प्रसादभूमिः श्रीदेव्या भुक्तिमुक्त्योः सभाजनम् ८०

अमन्त्रं वा समन्त्रं वा कामाक्षीमर्चयन्ति ये ।
स्त्रियो वैश्याश्च शूद्राश्च ते यान्ति परमां गतिम् ८१
किं पुनः क्षत्रिया विप्रा मन्त्रपूर्वं यजन्ति ये ।
संसारिणोपि ते नूनं विमुक्ता नात्र संशयः॥८२॥
सितामध्वाज्यकदलीफलपायसरूपकम् ।
पञ्चपर्वसु नैवेद्यं सर्वदैव निवेदयेत् ॥ ८३ ॥
यो नार्चयति शक्तोपि स देवीशापमाप्नुयात् ।
अशक्तो भावनाद्रव्यैरर्चयेन्नित्यमम्बिकाम् ॥८४॥
गृहस्थस्तु महादेवीं मङ्गलाचारसंयुतः ।
अर्चयेत महालक्ष्मीमनुकूलाङ्गनासखः ॥ ८५ ॥
गुरुस्त्रिवारमाचारं कथयेत्कलशोद्भव ।
शिष्यो यदि न गृह्णीयाच्छिष्ये पापं गुरोर्नहि ८६
लक्ष्मीनारायणौ वाणीधातारौ गिरिजाशिवौ ।
श्रीगुरुं गुरुपत्नीं च पितरौ चिन्तयेद्बुधः ॥८७॥
इति सर्वं मया प्रोक्तं समासेन घटोद्भव ।
एतावदवधानेन सर्वज्ञो मतिमान्भवेत् ॥ ८८ ॥

इति श्रीब्रह्मोत्तरखण्डे हयग्रीवागस्त्यसंवादे ललितोपाख्याने एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## चत्वारिंशोऽध्यायः ॥ ४० ॥

### [ मन्त्रोपासनप्रकारकथनम् । ]

हयग्रीवः ॥

प्रविश्य तु जपस्थानमानीय निजमानसम् ।
अभ्यर्च्य विधिवन्मन्त्रं गुरूक्तक्रमयोगतः ॥ १ ॥
स्वात्मानं देवतामूर्तिं ध्यायंस्तत्राविशेत्ततः ।
प्राङ्मुखो दृढमाबध्य पद्मासनमनन्यधीः ॥ २ ॥
त्रिखण्डामनुबध्याथ गुर्वादीनभिवन्द्य च ।
द्विरुक्तबालबीजानि मध्याद्यङ्गुलिषु क्रमात् ॥३॥
तलयोरपि विन्यस्य करशुद्धिपुरस्सरम् ।
अग्निप्राकारपर्यन्तं कुर्यात्स्वास्त्रेण मन्त्रवित् ॥ ४ ॥
प्रतिलोमेन पाद्यमनुलोमेन कादिकम् ।
व्याप्य मायां समारोप्य व्यापयन्वाग्भवादिभिः ५
व्यक्तेः कारणसूक्ष्मस्थूलशरीराणि कल्पयेत् ।
नाभौ हृदि भ्रुवोर्मध्ये बालाबीजान्यथ न्यसेत् ६
मातृका मूलपुटिता न्यसेन्नाभ्यादिषु क्रमात् ।
बालाबीजानि तान्येव द्विरावृत्त्याथ विन्यसेत् ७

मध्यादिकरशाखासु तलयोरपि नान्यथा ।
नाभ्यादावथ विन्यस्य न्यसेदथ पदद्वये ॥ ८ ॥
जानूरूस्फिग्गुह्यमूलनाभिहृन्मूर्धसु क्रमात् ।
नवासनानि ब्रह्माणं विष्णुं रुद्रं तथेश्वरम् ॥ ९ ॥
सदाशिवं पुष्पतूलिकामुच्छीर्षप्रकाशकम् ।
विद्यासनं च विन्यस्य हृदये दर्शयेत्ततः ॥ १० ॥
पद्मत्रिखण्डयोन्याख्या मुद्रा ओष्ठपुटेन च ।
वायुमापूर्य हुंहुंहुमिति संबोध्य कुण्डलीम् ॥११॥
हृदि शक्त्या समुन्नीय द्वादशान्ते शिवैकताम् ।
भावयित्वा पुनस्तं च स्वस्थाने विनिवेश्य च १२
वाग्भवादीनि बीजानि मूलहृद्बिन्दुषु न्यसेत् ।
समस्तमूर्ध्नि दोर्मूलमध्याग्रेषु यथाक्रमम् ॥ १३ ॥
स्वस्थानि न्यस्य चाङ्गैः स्वैरङ्गुष्ठादितलावधि ।
हृदयादौ च विन्यस्य कुङ्कुमन्यासमाचरेत् ॥१४॥
शुद्धां तृतीयबीजेन पुटितां मातृकां ततः ।
आद्यबीजद्वयाद्यमन्त्यबीजाद्न्यसेदिति ॥ १५ ॥
पुनर्भूतादिविन्यासमाचरेन्नातिविस्तरम् ।

वर्गाष्टकं न्यसेन्मूले नाभौ हृदयकण्ठयोः ॥ १६॥
आज्ञाद्यास्येषु शषसान्मूलहृन्मूर्धसु न्यसेत् ।
कक्षकट्यंसनाभ्यंसकटिहृत्सु च विन्यसेत् ॥१७॥
भ्रूभूताद्यषडङ्गानि हादिवर्गैः प्रविन्यसेत् ।
ऋषिस्तु शब्दब्रह्म स्याच्छन्दो भूतलिपिर्मता १८
श्रीमूलप्रकृतिस्तस्य देवता कथिता मनोः ।
अक्षस्रक्पुस्तकान्यूर्ध्वे पुष्पासबाणकार्मुके ॥१९॥
वराभीतिकराब्जैश्च धारयन्तीमनूपमाम् ।
लक्षारेऽक्षमयीं मालां वहन्तीं कण्ठदेशतः ॥२०॥
हारकेयूरकटकच्छन्नवीरविभूषणाम् ।
दिव्याङ्गरागसंभिन्नमणिकुण्डलमण्डिताम् ॥२१॥
लिपिकल्पद्रुमस्याधो रूपिपङ्कजवासिनीम् ।
साक्षाल्लिपिमयीं देवीं भैरवीं भक्तवत्सलाम् ॥ २२
अनेककोटिदूतीभिः समन्तात्समलंकृताम् ।
एवं ध्यात्वा न्यसेद्भूयो भूतलिप्यक्षरात्क्रमात् २३
मूलाद्याज्ञावसानेषु वर्गाष्टकमथ न्यसेत् ।
शषसा मूर्ध्नि संहृत्य स्वरानेष्वेव विन्यसेत्॥२४॥

हादिरूर्ध्वादिपञ्चास्येष्वग्रे मूले च मध्यतः ।
अङ्गुलीमूलमणिबन्धयोर्दोष्णोश्च पादयोः ॥ २५ ॥
जठरे पार्श्वयोर्दक्षवामयोर्नाभिपृष्ठयोः ।
शषसा मूलहृन्मूर्धस्वेतान्बालादिकान्यसेत् ॥ २६
ह्रस्वाः पञ्चाथ संध्यर्णाश्चत्वारो ह्यरावलौ ।
अकौ खगौ नगश्चादौ क्रमोऽयं शिष्टवर्गके ॥ २७
शषसा इति विख्याता द्विचत्वारिंशदक्षराः ।
आद्यः पञ्चाक्षरो वर्गो द्वितीयश्चतुरक्षरः ॥ २८ ॥
पञ्चाक्षरी तु षड्वर्गी त्रिवर्णो नवमो मतः ।
ब्रह्मा विष्णुश्च रुद्रश्च प्रजेशेन्द्रयमाः क्रमात् २९
वरुणश्चैव सोमश्च शक्तित्रयमिमे नव ।
वर्णानामीश्वराः प्रोक्ताः क्रमो भूतलिपेरयम् ॥३०
एवं सृष्टौ पाठो विपरीतः संहृतावमून्येव ।
स्थानानि योजनीयौ विसर्गबिन्दू च वर्णान्तौ ३१
ध्यानपूर्वं ततः प्राज्ञो रत्यादिन्यासमाचरेत् ।
जपाकुसुमसंकाशाः कुङ्कुमारुणविग्रहाः ॥ ३२ ॥
कामावामाधिरूढाङ्का ध्येयाः शरधनुर्धराः ।

रतिप्रीतियुतौ कामौ कामिन्या कान्त इष्यते ३३
कान्तिमान्मोहिनीयुक्तः कामाङ्गः कलहप्रियां ।
अन्वेति कामाचारस्तु विलासिन्या समन्वितः३४
कामः कल्पलतायुक्तः कामुकः श्यामवर्णया ।
शुचिस्मितान्वितः कामो बन्धको विस्मयायुतः ३५
रमणो विस्मयाक्ष्या च रामोयं लेलिहानया ।
रमणोपि रतीनाथो दिग्वस्त्राढ्यो रतिप्रियः ॥ ३६
वामया कुब्जको युक्तो रतिनाथो धरायुतः ।
रमाकान्तोपि रमया रममाणो निशाचरः ॥३७॥
कल्याणो मोहिनीनाथो नन्दकश्चोत्तमान्वितः ।
नन्दीसुरोत्तमाढ्यो नन्दनो नन्दयिता पुनः ॥३८
सुलावण्यान्वितः पञ्चबाणो बालधिनीश्वरः ।
कलहः प्रियया युक्तस्तथा रतिसखः पुनः ॥३९॥
एकाक्ष्या पुष्पधन्वापि सुमुखेशो महाधनुः ।
नीलीजटिल्योर्भ्रमणः क्रमशः पालिनीपतिः ॥४०
भ्रममाणः शिखाकान्तो भ्रमो भ्रामश्च मुग्धया ।
भ्रामको रमया प्राज्ञो भ्रामिको भृङ्ग इष्यते ४१

भ्रान्ताचारो लोचनया दीर्घजिह्विकया पुनः ।
भ्रमावहं समन्वेति मोहनस्तु रतिप्रियः ॥ ४२ ॥
मोहकस्तु पलाशाक्ष्या गृहिण्यां मोह इष्यते ।
विकटेश्या मोहधरो वर्धनेयं धरायुतः ॥ ४३ ॥
मदनाढ्योऽनूपमस्तु मन्मथो मलयान्वितः ।
मातङ्गो ह्लादिनीयुक्तः समिच्छन्विश्वतोमुखीम् ४४
नायको भृङ्गपूर्वस्तु गाथको नन्दिनीयुतः ।
गीतिको नामया ज्ञेयः काल्या नर्तक इष्यते॥४५॥
क्ष्वेल्लकः कालकर्नाट्या कन्दर्पोन्मत्तयेष्यते ।
नर्तकः श्यामलाकान्तो विलासी झषयान्वितः ४६
उन्मत्तामुपसंगम्य मोदते कामवर्धनः ।
ध्यानपूर्वं ततः श्रीकण्ठादिविन्यासमाचरेत् ॥४७

सिन्दूरकाञ्चनसमोभयभागमर्ध-
नारीश्वरं गिरिसुताहरभूषचिह्नम् ।
पाशद्वयाक्षवलयेष्टदहस्तमेवं
स्मृत्वा न्यसेल्लिपिपदेषु समाहितार्थः ४८
श्रीकण्ठानन्तसूक्ष्मौ च त्रिमूर्तिरमरेश्वरः ।

अर्घीशो भारभूतिश्चातिथीशः स्थाणुको हरः ४९
चण्डीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः ।
अक्रूरश्च महासेनः स्युरेते वरमूर्तयः ॥ ५० ॥
ततः क्रोधीशचण्डीशौ पञ्चान्तकशिवोत्तमौ ।
तथैकरुद्रकूर्मैकनेत्राह्वचतुराननाः ॥ ५१ ॥
अजेश्वरः सर्वसोमेश्वरलाङ्गलिदारुकौ ।
अर्धनारीश्वरश्चोमाकान्तश्चाषाढदण्डिनौ ॥५२॥
अत्रिमीनश्च मेषश्च लोहितश्च शिखी तथा ।
छगलण्डद्विरण्डौ च समहाकालवालिनौ ॥५३॥
भुजगेशः पिनाकी च खड्गीशश्च बकस्तथा ।
श्वेतो भ्रमश्च नकुली शिवः संवर्तकस्तथा ॥५४॥
पूर्णोदरी च विरजा तृतीया शाल्मली तथा ।
लोलाक्षी वर्तुलाक्षी च दीर्घघोणा तथैव च ॥५५
सुदीर्घमुखीगोमुख्यौ नवमी दीर्घजिह्विका ।
कुञ्जरोदर्यूर्ध्वकेश्यौ मुखी विकटपूर्विका ॥५६॥
सज्वालोल्का श्रियाविद्यामुख्यः स्युः स्वरशक्तयः ।
महाकालीसरस्वत्यौ सर्वसिद्धिसमन्विते ॥ ५७ ॥

गौरी त्रैलोक्यविद्या च तथा मन्त्रासशक्तिके ।
भूतमाता लम्बोदरी द्राविणी नागरी तथा ॥५८॥
खेचरी मञ्जरी चैव रूपिणी वीरिणी तथा ।
कोटरी पूतना भद्रा काली योगिन्य एव च ॥५९
शङ्खिनी गर्जिनी कालरात्रिः कूर्दिन्य एव च ।
कपर्दिनी तथा वज्रा जया च सुमुखेश्वरी ॥६०॥
रेवती माधवी चैव वारुणी वायवी तथा ।
रक्षोवधारिणी चान्या तथा च सहजाह्वया ॥६१
लक्ष्मीश्च व्यापिनी मायेत्याख्याता वर्णशक्तयः ।
द्विरुक्तबालाषड्बीजैरङ्गं कृत्वाथ केवलैः ॥ ६२ ॥
षोढान्यासं प्रकुर्वीत देवतात्मत्वसिद्धये ।
विघ्नेशादींस्तु तत्रादौ विन्यसेद्ध्यानपूर्वकम्॥६३॥
तरुणारुणसंकाशान्गजवक्त्रांस्त्रिलोचनान् ।
पाशाङ्कुशवराभीतिहस्ताञ्शक्तिसमन्वितान् ॥६४
विघ्नेशो विघ्नराजश्च विनायकशिवोत्तमौ ।
विघ्नहृद्विघ्नहन्ता च विघ्नराड्गणनायकः ॥ ६५ ॥
एकदन्तो द्विदन्तश्च गजवक्त्रो निरञ्जनः ।

कपर्द्दवान्दीर्घमुखः शङ्कुकर्णो वृषध्वजः ॥ ६६ ॥
गणनाथो गजेन्द्रश्च शूर्पकर्णस्त्रिलोचनः ।
लम्बोदरो महानादश्चतुर्मूर्तिः सदाशिवः ॥ ६७ ॥
आमोदो दुर्मदश्चैव सुमुखश्च प्रमोदकः ।
एकपादो द्विपादश्च शूरो वीरश्च षण्मुखः ॥ ६८॥
वरदो वामदेवश्च वक्रतुण्डो द्विदण्डकः ।
सेनानीर्ग्रामणीर्मत्तो विमत्तो मत्तवाहनः ॥ ६९ ॥
जटी मुण्डी तथा खड्गी वरेण्यो वृषकेतनः ।
भक्ष्यप्रियो गणेशश्च मेघनादो गणेश्वरः ॥ ७० ॥
एते गणेशवर्णानामेकपञ्चाशतं क्रमात् ।
श्रीश्च ह्रीश्चैव पुष्टिश्च शान्तिस्तुष्टिः सरस्वती ॥७१
रतिर्मेधा तथा कान्तिः कामिनी मोहिनी तथा ।
तीव्रा च ज्वालिनी नन्दा सुयशाः कामरूपिणी ७२
उग्रा तेजोवती सत्या विघ्नेशानीस्वरूपिणी ।
कामार्ता मदजिह्वा च विकटा घूर्णितानना ॥७३
भूतिर्भूमिर्द्विरम्बोमा मारूपी मकरध्वजा ।
विकर्णा भ्रूकुटी लज्जा दीर्घघोणा धनुर्धरी ॥७४॥

तथैव यामिनी रात्रिश्चन्द्रकान्ता शशिप्रभा ।
लोलाक्षी चपला ऋज्वी दुर्भगा सुभगा शिवा ७५
दुर्गा गुहप्रिया काली कालजिह्वा च शक्तयः ।
ग्रहन्यासं ततः कुर्याद्ध्यानपूर्वं समाहितः ॥७६॥
वरदाभयहस्ताढ्यान्शक्त्यालिङ्गितविग्रहान् ।
कुङ्कुमक्षीररुधिरकुन्दकाञ्चनकम्बुभिः ॥ ७७ ॥
अम्भोदधूमतिमिरैः सूर्यादीन्सदृशान्स्मरेत् ।
हृदयाधो रविं न्यस्येच्छीर्षिण सोमं दृशोः कुजम् ७८
हृदि शुक्रं च हृन्मध्ये बुधं कण्ठे बृहस्पतिम् ।
नाभौ शनैश्चरं वक्त्रे राहुं केतुं पदद्वये ॥ ७९ ॥
ज्वलत्कालानलप्रख्या वरदाभयपाणयः ।
तारा न्यसेत्ततो ध्यायन्सर्वाभरणभूषिताः ॥८०॥
भाले नयनयोः कर्णद्वये नासापुटद्वये ।
कण्ठे स्कन्धद्वये पश्चात्कूर्परयोर्मणिबन्धयोः ॥८१॥
स्तनयोर्नाभिकट्यूरुजानुजङ्घापदद्वये ।
योगिनीन्यासमादध्याद्विशुद्धौ हृदये तथा ॥८२॥
नाभौ स्वाधिष्ठिते मूले भ्रूमध्ये मूर्धनि क्रमात् ।

पद्मेन्दुकर्णिकामध्ये वर्णशक्तिर्दलेष्वथ ॥ ८३ ॥
दलाग्रेषु तु पद्मस्य मूर्ध्नि सर्वाश्च विन्यसेत् ।
अमृता नन्दिनीन्द्राणी तथेशानी उमापि च ॥८४
ऊर्ध्वकेशी ऋद्धिजुषा लृका लृका तथैव च ।
एकपादात्मिकैश्वर्यकारिणी चौषधात्मिका ॥८५॥
ततोऽम्बिकाथो रक्षात्मिकेति षोडश शक्तयः ।
कालिका खेचरी गायत्री घण्टाधारिणी तथा ८६
नादात्मिका च चामुण्डा छत्रिका च जया तथा ।
झंकारिणी च संज्ञा च टंकहस्ता ततः परम् ८७
ठंकारिणी च विज्ञेयाः शक्तयो द्वादश क्रमात् ।
डामरी ढंकारिणी च णामिनी तामसी तथा ८८
थंकारिणी दयाधात्री नादिनी पार्वती तथा ।
फट्कारिणी च विज्ञेयाः शक्तयोद्वयपञ्चगाः ॥८९
बधिनी च तथा भद्रा मज्जा चैव यशस्विनी ।
रमा च लामिनी चेति षडेताः शक्तयः क्रमात् ९०
वरदा श्रीस्तथा षण्ढा सरस्वत्यपि शक्तयः ।
चतस्रोऽपि तथैव द्वे हाकिनी च क्षमा तथा ९१

ततः पादे च लिङ्गे च कुक्षौ हृदोःशिरस्सु च ।
दक्षादिवामपादान्तं राशीन्मेषादिकान्न्यसेत् ॥९२
ततः पीठानि पञ्चाशदेकं च क्रमतो न्यसेत् ।
कामरूपं वारणासी नेपालं पौण्ड्रवर्धनम् ॥९३॥
वरस्थिरं कान्यकुब्जं पूर्णशैलं तथार्बुदम् ।
आम्रातकेश्वरैकाम्रं त्रिस्रोतः कामकोटकम् ॥ ९४
कैलासं भृगुनगरं केदारं चन्द्रयुक्पुरम् ।
श्रीपीठं चैकवीरं च जालन्ध्रं मालवं तथा ॥९५॥
कुलान्तं देविकोटं च गोकर्णं मारुतेश्वरम् ।
अट्टहासं च विरजं राजगेहमहापथे ॥ ९६ ॥
कोलापुरमेलापुरं कालेश्वरं जयन्तिका ।
उज्जयिन्यपि चित्रा च क्षीरकं हस्तनापुरम् ॥ ९७
उड्डीशं च प्रयागं च षष्टिमायापुरं तथा ।
गौरीशं मलयगिरिं श्रीशैलं मेरुमेव च ॥ ९८ ॥
पुनर्गिरिवरं पश्चान्महेन्द्रं वामनं गिरिम् ।
स्याद्धिरण्यपुरं पश्चान्महालक्ष्मीपुरं तथा ॥ ९९॥
पुरोड्याणं तथा छाया छत्रमाहुर्मनीषिणः ।

लिपिक्रमसमायुक्ताँल्लिपिस्थानेषु विन्यसेत् ॥१००
अन्यान्यथोक्तस्थानेषु संयुक्तं लिपिसंक्रमात् ।
षोढान्यासो मयाख्यातःसाक्षादीश्वरभाषितः१०१
एवं विन्यस्तदेहस्तु देवताविग्रहो भवेत् ।
ततः षोढां पुरः कृत्वा श्रीचक्रन्यासमाचरेत् १०२
अन्त्याद्यानन्दमूर्त्यन्तं मन्त्रैस्तु व्यापकं चरेत् ।
चक्रेश्वरीचक्रसमर्पणमन्त्रान्हृदि न्यसेत् ॥ १०३॥
अन्यान्यथोक्तस्थानेषु गणपत्यादिकान्न्यसेत् ।
दक्षिणोर्वंसयोर्वामांसोर्वोश्च क्रमशो न्यसेत् १०४
गणेशं क्षेत्रपालं च योगिनीं बटुकं तथा ।
आदाविन्द्रादयो न्यस्याः पादाङ्गुष्ठद्वयाग्रके १०५
जानुपार्श्वांसमूर्धास्यपार्श्वजानुषु मूर्धनि ।
मूलाधारे च दक्षादि सिद्धीनां दशकं ततः १०६
न्यस्तव्यमंसदोःपृष्ठस्फिक्षु प्रपदयोः स्फिजि ।
दोरंसपृष्ठयोर्मूर्धपादद्वितययोः क्रमात् ॥ १०७ ॥
अणिमा चैव लघिमा तृतीया महिमा तथा ।
ईशित्वं च वशित्वं च प्राकाम्यं प्राप्तिरेव च १०८

इच्छासिद्धिरर्थसिद्धिर्मोक्षसिद्धिरिति स्मृताः ।
ततः प्रविन्यसेद्धीमान्मातॄणामष्टकं क्रमात् १०९
पादाङ्गुष्ठयुगे दक्षपार्श्वे मूर्धनि वामतः ।
पार्श्वजान्वोर्दक्षजान्वोर्दक्षवामांसयोस्तथा ॥ ११०
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा चैव सप्तमी १११
महालक्ष्मीश्च विज्ञेया मातरोऽष्टौ क्रमाद्बुधैः ।
मुद्रादेवीर्न्यसेदष्टावेष्वेव द्वे च ते पुनः ॥ ११२ ॥
मूर्ध्न्यङ्घ्र्योरपि मुद्रास्तु सर्वसंक्षोभिणी तथा ।
सर्वविद्राविणी पश्चात्सर्वथाकर्षिणी तथा ॥ ११३
सर्वाद्या वश्यकरणी सर्वाद्या प्रियकारिणी ।
महाङ्कुशा च सर्वाद्या सर्वाद्या खेचरी तथा ११४
सर्वत्रिखण्डा च सर्वबीजमुद्रा सपूर्विका ।
योनिमुद्रेति विज्ञेयास्तत्र चक्रेश्वरीं न्यसेत् ॥ ११५
त्रैलोक्यमोहनं चक्रं समर्प्य व्याप्य वर्ष्मणि ।
ततः कलानां नित्यानां क्रमात्षोडशकं न्यसेत् ११६
कामकर्षणरूपा च बुद्ध्याकर्षणरूपिणी ।

अहङ्काराकर्षिणी च शब्दाकर्षणरूपिणी ॥११७॥
स्पर्शाकर्षणरूपा च रूपाकर्षणरूपिणी ।
रसाकर्षणरूपा च गन्धाकर्षणरूपिणी ॥ ११८ ॥
चित्ताकर्षणरूपा च धैर्याकर्षणरूपिणी ।
स्मृत्याकर्षणरूपा च मनआकर्षरूपिणी ॥ ११९ ॥
श्रद्धाकर्षणरूपा च ह्यात्माकर्षणरूपिणी ।
अमृताकर्षणीरूपा शरीराकर्षिणी तथा ॥ १२० ॥
स्थानानि दक्षिणश्रोत्रं पृष्ठमंसं च कूर्परे ।
दक्षहस्ततलस्याथ कोष्ठं तत्स्फक्च जानु च १२१
तज्जङ्घाप्रपदे वामप्रदीपादि विलोमतः ।
चक्रेशीं न्यस्य चक्रं च समर्च्य व्याप्य वर्ष्मणि १२२
न्यसेदनङ्गकुसुमादेव्यादीनामथाष्टकम् ।
शङ्खजत्रूरुजङ्घासु वामे तु प्रतिलोमतः ॥ १२३ ॥
अनङ्गकुसुमा पश्चाद्द्वितीयानङ्गमेखला ।
अनङ्गमदना पश्चादनङ्गमदनातुरा ॥ १२४ ॥
अनङ्गरेखा तत्पश्चाद्वेगाख्यानङ्गपूर्विका ।
ततोऽनङ्गाङ्कुशा पश्चादनङ्गाख्या च मालिनी १२५

चक्रेशीं न्यस्य चक्रं च समर्प्य व्याप्य वर्म्मणि ।
शक्तिदेवीर्न्यसेत्सर्वाः संक्षोभिण्यादिकाःक्रमम् ॥१२६
ललाटगण्डयोरंसे पादमूले च जानुनि ।
उपर्यधश्च अङ्गादास्तथा वामे विलोमतः ॥१२७॥
सर्वसंक्षोभिणीशक्तिः सर्वविद्राविणी तथा ।
सर्वाद्याकर्षिणी शक्तिः सर्वाद्याह्लादिनी तथा १२८
सर्वसंमोहिनी शक्तिः सर्वाद्या स्तम्भिनी तथा ।
सर्वाद्या जम्भिनी शक्तिः सर्वाद्या वशकारिणी ॥
सर्वाद्या रञ्जनी शक्तिः सर्वाद्योन्मादिनी तथा ।
सर्वार्थसाधिनीशक्तिः सर्वाशापरिपूरिणी ॥१३०॥
सर्वमन्त्रमयी शक्तिः सर्वद्वन्द्वक्षयंकरी ।
चक्रेशीं न्यस्य चक्रं च समर्प्य व्याप्य वर्म्मणि ॥
सर्वसिद्धिप्रदादीनां दशकं चाथ विन्यसेत् ।
दक्षनासापुटे दन्तमूले दक्षस्तने तथा ॥ १३२ ॥
कृपाणे चैव सीविन्यां तथा वामे विलोमतः ।
सर्वसिद्धिप्रदा देवी सर्वसंपत्प्रदा तथा ॥ १३३ ॥
सर्वप्रियंकरी देवी सर्वमङ्गलकारिणी ।

सर्वकामप्रदा देवी सर्वदुःखविमोचनी ॥ १३४ ॥
सर्वमृत्युप्रशमनी सर्वविघ्नविनाशिनी ।
सर्वाङ्गसुन्दरी देवी सर्वसौभाग्यदायिनी ॥ १३५
चक्रेशीं न्यस्य चक्रं च समर्प्य व्याप्य वर्ष्मणि ।
सर्वज्ञादीन्न्यसेद्दक्षमीषद्दन्तस्थलेष्वथ ॥ १३६ ॥
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदा तथा ।
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ॥१३७॥
सर्वाधारस्वरूपा च सर्वपापहरा तथा ।
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ॥ १३८ ॥
विज्ञेया दशमी देवी सर्वेप्सितफलप्रदा ।
चक्रेशीं न्यस्य चक्रं च समर्प्य व्याप्य वर्ष्मणि१३९
वाग्देवताष्टकं पश्चाद्वशिन्यादीन्न्यसेत्सुधीः ।
दक्षे तु चुबुके कण्ठे स्तने नाभौ च पार्श्वतः १४०
वामा विमोचनी विद्या वशिनी प्राप्तमानना ।
कामेश्वरी परा ज्ञेया मोदिनी विमला तथा १४१
अरुणा जयिनी पश्चात्तथा सर्वेश्वरी मता ।
कौलिनीति समुक्तानि तासां नामानि सूरिभिः१४२

चक्रेश्वरीं न्यसेच्चक्रं समर्प्य व्याप्य वर्ष्मणि ।
हृदि त्रिकोणं संभाव्य दिक्षु प्रागादिषु क्रमात् १४३
तद्बहिर्विन्यसेद्धीमानायुधानां चतुष्टयम् ।
न्यसेदग्न्यादिकोणेषु मध्ये पीठचतुष्टयम् ॥१४४॥
मध्यवृत्तं हृदि ध्यात्वा नित्याषोडशकं न्यसेत् ।
कामेश्वरी तथा नित्या नित्या च भगमालिनी १४५
नित्यक्लिन्ना तथा नित्या नित्या भेरुण्डयोदिता ।
वह्निवासिनिनित्या च महावज्रेश्वरी तथा ॥ १४६
नित्या च दूतीनित्या च त्वरिता तु ततः परम् ।
कुलसुन्दरी नित्या च नित्यानित्या ततः परम् १४७
नित्या नीलपताका च नित्या तु विजया परा ।
ततस्तु मङ्गलां चैव नित्यपूर्वां प्रचक्षते ॥ १४८ ॥
ज्वालामालिनिनित्या च चित्रा नित्या तथैव च ।
एतास्त्रिकोणान्तरेण परितो हृदि विन्यसेत्॥१४९
नित्या तु षोडशी साक्षान्महात्रिपुरसुन्दरी ।
तन्मध्ये विन्यसेद्देवीमखण्डजगदात्मिकाम् १५०
चक्रेश्वरीं हृदि न्यस्य कृत्वा चक्रसमर्पणम् ।

मुद्रां प्रदर्श्य योन्याख्यां सर्वानन्दमनुं जपेत् ।
इत्यात्मन्यस्तचक्रस्तु साक्षाद्देवी भविष्यति १५१

## ॥ फलश्रुतिः ॥

य इदं शृणुयाद्दिव्यमाख्यानं कुम्भसंभव ।
तस्य सिद्धिः करस्थैव न स भूयोऽभिजायते ॥१॥
आख्यानं ललितादेव्याः पठेद्यः शृणुयादपि ।
विधूय सर्वपापानि देवलोके महीयते ॥ २ ॥
कन्यार्थी लभते कन्यां जयार्थी जयमाप्नुयात् ।
मोक्षार्थी लभते मोक्षं धर्मार्थी धर्ममाप्नुयात् ॥ ३
अर्थकामो लभेदर्थं पुत्रकामो बहून्सुतान् ।
विद्यार्थी लभते विद्यां योगार्थी योगमाप्नुयात् ४
राज्यार्थी लभते राज्यं ग्रामार्थी ग्राममाप्नुयात् ।
गर्भिणी लभते पुत्रं कन्या विन्दति सत्पतिम् ५
योऽन्यान्कामयते कामान्मानवः श्रवणादिह ।
तत्सर्वं शीघ्रमाप्नोति देवानां च प्रियो भवेत् ॥ ६

श्रुत्वा चरित्रं श्रीदेव्याः संग्रामं प्रविशेन्नृपः ।
स निर्जित्य भयं शत्रून्कल्याणैः परिपूर्यते ॥ ७ ॥
सर्वव्याधिविनिर्मुक्तः पुत्रपौत्रैः प्रतिष्ठितः ।
ललिताया उपाख्यानं यमुद्दिश्य पठेत्सकृत् ॥८॥
तस्य रोगा न बाधन्ते वातपित्तादिसंभवाः ॥९॥
नाकालमरणं तस्य न सर्पैश्चापि दृश्यते ।
विषं नाक्रमते देहे न जडत्वं न मूकता ॥ १० ॥
नोपसर्गभयं तस्य न चोत्पातभयं तथा ।
नाभिचारकृतैर्दोषैर्लिप्यते स कदाचन ॥ ११ ॥
सर्वकामसमृद्धार्थो यः पठेत्तु दिनेदिने ।
नित्यमूर्जितभक्त्या च दुर्व्याघातादिवर्जितः ॥१२॥
यत्पुण्यं सर्वतीर्थानां गङ्गादीनां विशेषतः ।
तत्पुण्यं कोटिगुणितं प्राप्नोति श्रवणादिह ॥ १३ ॥
दशानां राजसूयानामग्निष्टोमशतस्य च ।
श्रवणात्फलमाप्नोति कोटिकोटिगुणोत्तरम् ॥ १४॥
अवध्यः सर्वभूतानामन्येषां च विशेषतः ।
जीवेद्वर्षशतं साग्रं सर्वव्याधिविवर्जितः ॥ १५ ॥

गोघ्नश्चैव कृतघ्नश्च भ्रूणहा गुरुतल्पगः।
शरणागतघाती च मित्रविश्वासघातकः ॥ १६ ॥
दुष्टः पापसमाचारो मातृहा पितृहा तथा।
श्रवणादस्य भावेन मुच्यते सर्वपातकैः ॥ १७ ॥
तीर्थेषु पूजावेलासु विषुवत्ययनेऽपि च।
पञ्चपर्वसु जन्मर्क्षे पुण्येष्वायतनेषु च ॥ १८ ॥
राज्यक्षोभे रोगभये मारीचोरभयादिषु।
ये पठन्तीदमाख्यानं ते संसिद्धिमवाप्नुयुः ॥१९॥
यत्रेदं लिखितं पुस्ते वर्तते कुम्भसंभव।
तस्मिन्देशे न रोगश्च नच दुर्भिक्षसंभवः ॥ २० ॥
पूजाविधानमखिलं शास्त्रोक्तेनैव वर्त्मना।
खण्डान्तरे वदिष्यामि तदाकर्णय कुम्भज ॥२१॥
द्वात्रिंशल्ललिताख्यानममृतं दिव्यदर्शनम्।
देवीमाहात्म्यमपि च पर्यायाः कुम्भसंभव ॥२२॥
तस्माद्द्वात्रिंशिकाशास्त्रं ब्रह्माण्डोत्तरकीर्तितम्।
देवीसमुत्सवे जाते पठितव्यं प्रयत्नतः ॥ २३ ॥
देव्यः समस्तास्त्रैलोक्ये यतः श्रीललितात्मिकाः।

अतस्ताःस्वस्वपूजासु कुप्यन्त्यस्या अपाठनात् २४
विशेषतस्तु दुर्गायाः संप्राप्ते तु महोत्सवे ।
ब्राह्मणं वरयेद्दन्यै द्वात्रिंशत्पाठकर्मणि ॥ २५ ॥
स्वयं वापि पठेद्दुर्गासन्निधौ दृढमानसः ।
एकवारं द्विवारं वा त्रिवारं वा प्रयत्नतः ॥ २६ ॥
ललिताख्यानपाठस्तु सर्वसिद्धिप्रदायकः ।
त्रैलोक्यजन्तुजालाढ्यबलेः करणतो यथा ॥२७॥
ललिताख्यानपाठेन तथा दुर्गा प्रसीदति ।
अशुचिर्वा शुचिर्वापि यादृक्तादृगवस्थितः ॥२८॥
पठन्द्वात्रिंशिकापाठं सर्वपापैः प्रमुच्यते ।
प्रत्यब्दमुत्सवे दौर्गे पाठयेद्भूमिवल्लभः ॥ २९ ॥
इदं द्वात्रिंशदध्यायसंमितं दर्शनोत्तमम् ।
कारणं सर्वसिद्धीनां नास्मात्परतरं महत् ॥ ३० ॥
द्वात्रिंशिकाया अस्यास्तु सकृदावर्तनादपि ।
चण्डिकाकोटिपाठस्य सदृशं फलमुद्भवेत् ॥ ३१ ॥

आख्यानमेतदवदातगुणाः पठन्तः
सत्संप्रदायकमपाकृतसर्वदुःखम् ।

विज्ञानदीप्तिकलितां ललितामहेशी-
मासाद्य चेतसि वहन्ति सदाभितृप्तिम् ३२

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
श्रीललितोपाख्याने मन्त्रराजतत्साधनादिकथनं
नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ श्रीललितोपाख्यानं समाप्तम् ॥



भागा एवोपनिषद इति वेदेभ्योऽप्यासामभ्यर्हितत्वं निर्विवादमेव । अस्य शोधनकाले कोशान्तरदृष्टानि पाठान्तराणि पृष्ठाधो निवेश्य दर्शनीयसाक्षरैश्चिक्कणपत्रेषु संमुद्र्य कौशेयबद्धं सुदृढं संपादितमस्ति ।

मूल्य २॥ रु., मार्ग. ४ आ.

# ब्रह्मसूत्रशाङ्करभाष्यम् ।

## मूलमात्रं, सटिप्पणम् ।

ग्रन्थोऽयं पाठप्रवचनादावध्यापकान्तेवासिवर्गग्रहणधारणक्षमः स्वक्षरोऽल्पायामपरिणाहोऽत्यन्तमनोहरोऽपि स्वल्पमूल्य इदानीमस्माभिर्लोकाग्रहान्मुद्रितोऽस्ति । स्थलविशेषे व्याख्यासाहाय्यमन्तरापि विनिर्वाहपर्याप्तशब्दटिप्पणयोजनं विहितमस्ति । मूल्यं २। रु. मार्ग. ४ आ.

निर्णयसागरमुद्रणालयाधिपतिः,

तुकाराम जावजी.